# नाट्यकथामञ्जरी

'नाट्यसुधा'-'भीमप्रतिज्ञा'-कर्त्री
'मालविकाग्निमित्र'-संपादयित्रा
एम. ए. इत्युपाधिधारिणा

**कैलाशनाथेन**

टिप्पणैः परिष्कृत्य
रचितेयम्



सा चेयम्
लवपुरीय-पञ्जाबसंस्कृतपुस्तकालयाध्यक्षैः
**मोतीलाल बनारसीदास**
इत्येतैः स्वीये 'मुम्बई संस्कृत प्रेस' इत्याख्ये मुद्रणालये
संमुद्राप्य प्रकाशिता



प्रथमं संस्करणम् ]     सं० १९९१     [ मू०-सार्द्धरूप्यकत्रयम्

श्रीः

# उपोद्घातः

जगतां सूत्रधारं तं परेशं प्रथमं नुमः ।
यत्कृपातो विलीयन्ते विघ्नानां कोटिकोटयः ॥ १ ॥
भासादिविदुषोऽशेषशेमुषीशालितल्लजान् ।
प्रणम्य प्रस्तुतां कुर्वे सुधां तन्नाट्यस्यन्दिताम् ॥ २ ॥
अहो चिरंतनी न्वेषा सदा नूत्ना सतां मता ।
पायं पायं रसेनैतां प्रीयतां सुमनोमनः ॥ ३ ॥

अथ न नन्वविदितमिदं विदितवेदितव्यानां यत्किल गीर्वाणवाणीवाङ्मयमन्याभिर्दुराकलन*कलाभिर्यथा तथा नाट्यकलयाऽपि सुसंभृतं वरीवर्तीति। भास-दिङ्नाग-कालिदास-भवभूति-हर्ष-शूद्रक-नारायणभट्ट-विशाखदत्तादयोऽवदातमतयो नैके विख्यातरूपककृतः स्वकृतिभिर्वाग्देवतामुपातिष्ठन्त। हन्त नाद्य वयं तेषां कतिपयानां प्रादुर्भावानेहसमुद्भवभुवं चाधिकृत्य किंचिदप्यवधारयितुं प्रभवामः !!! स्यान्नाम तथा, न परं परमार्थतस्तेन तद्रुचिररचनारोचकतोच्चयो लवेनापि हीयत इति मन्महे।

कविकुलतिलककालिदासस्तु स्वप्रथमतमे मालविकाग्निमित्राभिधे प्रवन्धे "मा तावत्। प्रथितयशसां भास-सौमिल्लक-कविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां कथं परिषदो बहुमानः ?" इति कविताकामिनीहास-

---

* दुर्दुःखेनाऽऽकलनं संख्यानं येषाम्। असंख्येयाभिरिति यावत्।

भूतं* भासमस्तोकमस्तावीत् । कवितालनाविलासस्य तादृशो वचोविन्यासः 'भासः कालिदासादपि चिरन्तनः कश्चिद्रूपकप्रणेता तदानीं चोदारकीर्तिपरिष्कृतो विद्वज्जन-मानसविस्मयमाततान' इति सुतरामवगमयतीति न वर्णना-मपेक्षते ।†

कालिदासोऽपि स्वरचनारामणीयकचरित्रचित्रणोपमा-माधुरीप्रभृतिविषये सहस्रमुखमतिप्रत्नैरपि विपश्चिद्धुर्यप्राग्रह-रैरुपश्लोकितः । तथाहि भट्टबाणीयम्—

'निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते ॥‡

सुप्रतीतं चाभिज्ञानशाकुन्तलस्य निखिलकाव्यमूर्द्धन्या-

---

* यस्याश्चौरश्चिकुरनिकरः कर्णपूरो मयूरो
भासो हासः कविकुलगुरुः कालिदासो विलासः ।
हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः ।
केषां नैषा कथय कविताकामिनी कौतुकाय ॥

† अन्यैरप्यनल्पैः कविभिर्भासो मुक्तकण्ठमुपस्तुतः । दिङ्मात्रं यथा—

सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः ।
सपताकैर्यशो लेभे भासो देवकुलैरिव ॥ ( बाणस्य )
भासनाटकचक्रेऽपि छेकैः क्षिप्ते परीक्षितुम् ।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः ॥ ( राजशेखरस्य )

‡ कालिदासप्रबन्धेषु तथा सबहुमानः कविताविलासिनी-पञ्चबाणो बाणः कीदृक्कविरिति तु 'बाणोच्छिष्टं जगत्सर्वम्' इति सर्व-जिह्वासु नरीनृत्यमानेनाऽऽभाणकेनैवाभिव्यक्तं नाधिकं कीर्तनमपेक्षते ।

यितम्*। पाश्चात्यसाहित्यवित्पुंगवैरप्यस्तूयत तावत्सभावातिरेकं भगवान्कालिदासः। तथा चाभिज्ञानशाकुन्तलमालोक्य शार्मण्यदेशभूषणेन यूरोपद्वीपकविवर्यप्रशस्ततमेन गेटे-महानुभावेन यदुक्तं तन्न कस्य मानसमपहरतु। सर विलियम-जॉन्स महोदयेन तु कालिदासः यूरोपीयसर्वाभिरूपातिशायितया मतेन शेक्सपियरेण तुलितः। 'शेक्सपियरस्तु केवलं दृश्यकाव्यरचनया विश्रुतः, उभयविधकाव्येऽप्रतिहतगतिः कालिदासस्तु तं सुतरामतिशेते' इति त्वन्ये।

भवभूतिरपि रूपककारेषु परार्ध्यां प्रतिष्ठां लेभे। यदि च कालिदासकृतिः प्रतीयमानरसादिना सहृदयहृदयान्यावर्जयति, तदा भवभूतिभणितिः स्ववर्णनबलादेव रसिकानात्मन्यासञ्जयति। कृतहस्तः खलु रसनिष्पत्तावयं कृती। यं यं हि रसमादाय नन्वेष प्रववृते तं तमेव परां काष्ठामुपनिनाय†। तथाहि, उत्तररामचरितमस्य करुणरसप्रधानम्, यत्र हि रस एष वपुष्मानिव साक्षाद्भवति‡। भवभूतिः स्वयमपि तत्र सीतायाः करुणावस्थां

'करुणस्य मूर्तिरथवा शरीरिणी' (उत्तर० ३।४)

इति निर्दिशति। अस्य हि कवेः रसराजशृङ्गाररसप्लाविते मालतीमाधवे, वीररसागाधे महावीरचरिते च कस्य रसिकस्य मनो न निमग्नं भवति?

---

* तथा हि श्लोको भवति—
'काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तला।
तत्रापि च चतुर्थोऽङ्कस्तत्र श्लोकचतुष्टयम्॥'

† 'उत्तरे रामचरिते भवभूतिर्विशिष्यते।'

‡ 'कारुण्यं भवभूतिरेव तनुते।'

शूद्रकस्तु मृच्छकटिकं नाम प्रकरणं कृत्वा नाट्ये-ऽदृष्टपूर्वं वर्त्म प्रदर्शितवान् । उज्झितमहाकाव्यचुरणकथोपाख्यानपथः स हि प्रत्यहं घटमाना घटना उपादाय स्वरूपकं निर्ममौ । नारायणभट्टैस्तु वीररसोपाचितं वेणीसंहारं नाम रूपकमारचितम्, यत्र भग्नाभ्यां सुयोधनोरुभ्यां निस्रुतेन रक्तेनैव द्रौपद्या वेणीसंहरणं विधेयमिति भीमपराक्रमस्य भीमस्य प्रतिज्ञा तत्पालनं च द्वयमपि चारुरचनाया गोचरीकृतम् ।

विशाखदत्तस्य मुद्राराक्षसं तु दृश्यकाव्येष्वनन्वयालंकृते-रुदाहरणीभूतम् । अस्यैतिहासिके कथावस्तुनि अलक्षेन्द्रमहाबलभीतिजनकस्य दिवंगतमहाराजनन्दस्य तथा तद्यवनराजप्रतिनिधिभूतसिल्यूकसमहाबलद्रावकस्याभिनवनृपतेश्चन्द्रगुप्तस्य चामात्ययोः राक्षसचाणक्ययोर्नयाहवव्यूहविन्यासविशारदयोर्नीतिसमरमुपनिबद्धम् ।

सन्ति खल्वेतेभ्यो नाट्यकारेभ्यो व्यतिरिक्ताः केचिदन्ये-ऽपि विश्रुतश्रवसो दृश्यकाव्यकारवः । परमद्यत्वे देववाण्या अप्रचारात्साधारणो जनोऽमीषां कुशलनाट्यकलाशिल्पिनां शिल्पं साक्षात्कर्तुं नालमिति भृशं दूयते हृदयं सहृदयानाम् । अनयैव परिस्थितिपर्यालोचनयाऽहमेषां रूपकाणां कथासंक्षेपरूपे रूपान्तरकरणे प्रवृत्तः । चतुर्दशदृश्यकाव्यकथात्मकेऽस्मिन्संदर्भे नाटकीयां कथां यथामूलं निधातुं व्यवस्यन्नपि दृश्यकाव्यार्पितां कथां अन्यरूपेण परिणमयन्यत्र तत्रांशतः परिवृत्तिविधाववशोऽस्मि जातः । क्वचिदेकस्यैव वक्तुर्वचनोच्चयोऽन्तराऽन्तरा जनान्तरोक्तिवियुक्तोऽस्माभिः

क्वचिल्लाघवापेक्षया संक्षिप्यैकत्र संनिधापितः। तत्र क्वचिन्मूलकृद्द्वयमपि संदर्भेऽस्मिन्संनिकृष्टपद्यानुरोधेन पद्यरूपेण परिणतम्। नागानन्दकथायां तार्तीयीक-तुर्ये पद्येऽत्र निदर्शनभूते। तथा च क्वचिद्दृश्यकाव्यगतो व्याकृतिसंकेतित उत्तमपुरुषो प्रथम पुरुषेण परिणतः। महावीरचरिते सप्तदशः श्लोकोऽत्र दृष्टान्तत्वेनावलोक्यताम्। विषयसंक्षेपपरेण मया प्रचुरवर्णं वृत्तमल्पाक्षरवृत्तेन परिणमितम्। यथाहि 'स्यन्दनालोक' इत्यादि शाकुन्तले पञ्चदशं पद्यम्। अन्यदप्यस्ति पद्येषुपरीवर्तप्रवर्तकं निमित्तम्। तद्यथा। क्वचित्प्राकृतपद्यानि यानि संस्कृतच्छायायां न लक्षणानुसारीणि। तान्यपि यत्किंचिद्विपर्यासितानि। अत्रोदाहरणं तु 'सहजं किल यद्विनिन्दितम्०'* (शाकुन्तले ६४) इत्यादि विज्ञेयम्। परं न तेन कथायां भावादौ वा कश्चिद्विशेष आपादितः। प्रायेण न कस्याप्यङ्गस्यावयवभूतं किमपि दृश्यमुपेक्षितम्। यत्र यत्र चोत्कृष्टपद्यवाक्यशिक्षाऽलंकारादिकमुपयोगवद् दृष्टं, तत्र तत्र तदेवाविकलम्, ग्रन्थाकारानुरोधाद् यत्किंचित्समासतो वेह समावेशितमिति वेदितव्यम्। न केवलं सरसकथावस्तु रूपककृन्महिमोद्भावि, प्रत्युतोपमाप्रमुखालंकारादिकमपि तथा। ततस्तानपि नाट्यकारगुणानुपायनीकृत्य वाचकवृन्दमुपतिष्ठे।

न नाटकक्रमावधारणे तन्निर्माणकालानुपूर्व्यमत्याद्दतमत्र। विषय एवात्र प्रायेण मुख्यतां वहति। तत्रापि प्रतनुतनवः

---

* तत्र हि वियोगिनीवृत्तम्। तल्लक्षणं हि—

विषमे ससजा गुरुः समे सभरा लोऽथ गुरुर्वियोगिनी।

कथा आदितः संनिवेशिताः। प्रथमे भागे पञ्चरूपककृतां कृतयः समावेशिताः। अत्र चरमेऽवयवे रामायणस्य पूर्वोत्तरभागयोः कथाभागौ पद्यं लम्भितौ। द्वितीये तु भागे पण्णां कवीनां कृतयः समावेशिताः। तत्र रामायणमहाभारतस्थकथयोः संनिवेशः सर्वादौ।

आदिभागे अचिरोपलब्धस्वप्नवासवदत्तकुन्दमालयोः कथे स्थितिमवापिते। स्वप्नवासवदत्तं महाकविभासविरचितमिति प्रायोवादः। परमदः स्वप्नवासवदत्तं तदेवाविकलं कविनिवद्धमाहोस्वित्तस्य संक्षेप इति तु नाद्यावधि विवादपदादपेतम्। कुन्दमाला चाऽऽचार्यदिङ्नागस्य कृतिः। अयं हि कालिदाससमकालिक इति पुरावृत्तान्वेषकानां मतम्। अनेनोत्तररामचरितकर्तुर्भवभूतेरपि प्रत्नोऽयमिति सुतरामापद्यते। कियन्मात्रं भवभूतिर्दिङ्नागस्योपजीवीति द्वयोर्वाचनाद् व्यक्तीभवितुमर्हति।

एवमयं ग्रन्थः प्रायेण कृत्स्नैः रससुधापरिवाहिभिः रूपकैरलंकृतः। एताः कथा देशभाषायां "नाट्यसुधा" नाम्नि ग्रन्थे मया प्रागेव प्रकाशिताः। तदेवात्र प्रायेण संस्कृतसंस्करणेऽनुसृतम्। अस्य ग्रन्थस्य पाठका अनायासमेव रूपकोदधिसुधारसमास्वादयन्तु।

ओरियंटल कौलेज,
लाहौर।
पौष कृ० ३०,
भृगुवासरे, १९९१ तमे
वैक्रमाब्दे

कैलाशनाथः

# कथा–सूची





# स्वप्नवासवदत्तम्

[ १ ]

आसीत् कौशाम्ब्यामुदयनो नाम विश्रुतः कश्चिन् नृपतिः। तस्य वासवदत्ता नामोज्जयिन्यधीश्वरस्य महाराजप्रद्योतस्य दुहिता भार्या बभूव। तदासक्तचित्तोऽसौ राज्यकार्यादुपरराम। ततश्च कालक्रमेण तद्राज्यमतितनुतामगात्। राज्यधुरमुद्वहद्भिः स्वाधिकारादप्रमत्तैरमात्यैर्बहुशो विचिन्त्य राज्योद्धारायोपाय-मेकं निश्चित्य, तदनुरूपं कार्यमारब्धम्।

अथ परिव्राजकवेषो यौगन्धरायणो नाम मन्त्री आवन्तिका-वेषधारिणी वासवदत्ता च मगधाय प्रस्थितौ। तत्र मार्गे एक-स्मिंस्तपोवने कयोश्चिद् राजपुरुषयोः 'उत्सरतोत्सरताऽऽर्याः! उत्सरत' इति शब्दास्तयोः श्रुतिपथमागताः। अभूतपूर्वेणानेन परिभवेन राज्ञी भृशमखिद्यत। तामतिमात्रदुःखितां विलोक्य यौगन्धरायणः सान्त्वयन्नवोचत्—'भवति! एवमनिर्ज्ञातानि दैवतान्यवधूयन्ते। अथ च कालक्रमेण चक्रारपङ्क्तिरिव लोकस्य सुखदुःखदशाऽपि परिवर्तत एव।'

राजपुरुषौ च तौ 'उत्सरतोत्सरताऽऽर्याः! उत्सरत' इति वारं वारं तपोवनगतं जनमुत्सारयामासुः। तयोर्वचनमाकर्ण्यैकः

काञ्चुकीयस्तौ भर्त्सयन्नुवाच—'न खलु न खलूत्सारणा कार्या। पश्य,

परिहरतु भवान् नृपापवादं
न परुषमाश्रमवासिषु प्रयोज्यम्।
नगरपरिभवान् विमोक्तुमेते
वनमभिगम्य मनस्विनो वसन्ति ॥' १ ॥

'हन्त सविज्ञानमस्य दर्शनम्' इति मन्त्री यौगन्धरायणः वासवदत्तया समं तमुपससर्प। अपृच्छच्च तं तदुत्सारणा-निमित्तम्।

काञ्चुकीय उवाच—'भोः! श्रूयताम्। एषा खल्वस्माकं महाराजदर्शकस्य भगिनी पद्मावती नाम। सैषा नो महाराज-मातरं महादेवीमाश्रमस्थामुपगम्यानुज्ञाता तत्रभवत्या राज-गृहमेव यास्यति। तदद्यास्मिन्नाश्रमपदे वासोऽभिप्रेतोऽस्याः। तद् भवन्तः

तीर्थोदकानि समिधः कुसुमानि दर्भान्
स्वैरं वनादुपनयन्तु तपोधनानि।
धर्मप्रिया नृपसुता न हि धर्मपीडा-
मिच्छेत् तपस्विषु कुलव्रतमेतदस्याः ॥' २ ॥

ततो यौगन्धरायणः स्वमनस्यचिन्तयत्—'एषा सा मगध-राजपुत्री पद्मावती नाम, या पुष्पकभद्रादिभिरादेशिकैरादिष्टा "स्वामिनो देवी भविष्यति" इति। ततश्च स्वभर्तुर्दाररूपेणा-भिलषितत्वादस्यां मे महती स्वता जाता।'

वासवदत्ताऽपि निजमनस्याह—'राजदारिकेति श्रुत्वा ममाप्यत्र भगिनिकास्नेहः संपद्यते।'

अथ पद्मावतीं विलोकयितुमुत्कण्ठितौ तौ तामुपागमताम् । तदा सपरिवारा पद्मावती चेट्या साकं कस्याश्चित् तापस्याः संनिधौ स्थिताऽभूत् ।

तापसी चेटीमपृच्छत्—'भद्रे ! इमां तावद् भद्रमुखस्य भगिनिकां कश्चिद् राजा न वरयति ?'

चेट्युवाच—'अस्ति राजा प्रद्योतो नामोज्जयिन्याः । स स्वदारकस्य कारणाद् दूतसंपातं करोति ।'

एतदाकर्ण्यातीव हृष्टा वासवदत्ता मनस्याह—'भवतु भवतु ! एषा चाऽऽत्मीयेदानीं संवृत्ता ।'

तापसी प्रोवाच—'अर्हा खल्वियमाकृतिरस्य बहुमानस्य । उभे राजकुले महत्तरे इति श्रूयते ।'

अस्मिन् विषये आत्मन औदासीन्यं प्रकटयन्ती पद्मावती काञ्चुकीयमपृच्छत्—'आर्य ! किं दृष्टो मुनिजन आत्मानमनुग्रहीतुम् ? अभिप्रतप्रदानेन तपस्विजन उपनिमन्त्र्यतां तावत् "कः किमत्रेच्छति ?" इति ।'

काञ्चुकीयस्तथैवोद्घोषितवान् । तदाकर्ण्य स्वाभिलषितसिद्धयेऽनायासमुपनतं शुभावसरमालोक्य यौगन्धरायण आह—'भोः ! अहमर्थी ।' एतच्छ्रुत्वा पद्मावती स्वतपोवनाभिगमनं सफलमवधारितवती ।

काञ्चुकीयो यौगन्धरायणं पृष्टवान्—'भोः ! किं क्रियताम् ?'

स उवाच—'इयं मे स्वसा । प्रोषितभर्तृकामिमामिच्छाम्यत्रभवत्या कंचित् कालं परिपाल्यमानाम् ।'

अभ्यर्थनाभ्युपगमे काञ्चुकीयं विप्रतिपद्यमानं वीक्ष्य

पद्मावती प्रोवाच—'आर्य ! प्रथममुद्घोष्य "कः किमिच्छति ?" इत्ययुक्तमिदानीं विचारयितुम्। यदेष भणति तदनुतिष्ठत्वार्यः।'

निजकार्यमङ्गीकृतं विज्ञाय यौगन्धरायण आत्मानं कृतकृत्यमन्यत। वासवदत्ताञ्च राजकन्यायाः सविधे गन्तुं प्रैरयत्। वासवदत्ताऽपि 'का गतिः ! एषा गच्छामि मन्दभागा' इति मनसि विचारयन्ती पद्मावतीमुपागमत्।

तदन्वेवमभूद् यौगन्धरायणमनसि–'हन्त भोः ! अर्धमवसितं भारस्य। यथा मन्त्रिभिः सह समर्थितं, तथा परिणमति। ततः प्रतिष्ठिते स्वामिनि तत्रभवतीमुपनयतो ममेयमत्रभवती मगधराजपुत्री विश्वासस्थानं भविष्यति । कुतः,

पद्मावती नरपतेर्महिषी भवित्री
दृष्टा विपत्तिरथ यैः प्रथमं प्रदिष्टा।
तत्प्रत्ययात् कृतमिदं न हि सिद्धवाक्या-
न्युत्क्रम्य गच्छति विधिः सुपरीक्षितानि ॥' ३ ॥

एवं तर्कयति यौगन्धरायणे कश्चिद् वटुस्तत्राऽऽजगाम । अभूदसौ दृढं परिश्रान्तः । स तत्र विश्रमितुमैच्छत् परमाश्रमविरुद्धं स्त्रीजनं विलोक्यातीव विस्मितो बभूव । "सर्वजनसाधारणमाश्रमपदं नाम" इत्युक्त्वा काञ्चुकीयस्तं तत्र प्रावेशयत् । तं विलोक्य परपुरुषदर्शनं परिहरन्ती वासवदत्ताऽन्यतोऽगच्छत्।

अथाऽसौ ब्रह्मचार्यतिथिसत्कारं प्रतिगृह्य निवृत्तपरिश्रमो बभूव । यौगन्धरायणस्तमपृच्छत्—'भोः ! कुत आगम्यते ? क्व गन्तव्यं ? क्वाधिष्ठानमार्यस्य ?'

वटुरुवाच—'भोः ! श्रूयताम् । राजगृहतोऽस्मि । श्रुति-

विशेषणार्थं वत्सभूमौ लावाणकं नाम ग्रामस्तत्रोषितवानस्मि। तत्र खल्वतिदारुणं व्यसनं संवृत्तम् । अतोऽध्ययनमसमाप्यैव त्यक्तं तत् स्थानम् ।'

तद्दारुणं व्यसनं यौगन्धरायणेन पृष्टोऽसौ तापस एवमभ्यधात्—'तत्रोदयनो नाम राजा प्रतिवसति । तस्यावन्तिराजपुत्री वासवदत्ता नाम पत्नी दृढमभिप्रेता किल। तस्मिन् मृगयानिष्क्रान्ते राजनि ग्रामदाहेन सा दग्धा। ततस्तामभ्यवपत्तुकामो यौगन्धरायणो नाम सचिवस्तस्मिन्नेवाग्नौ पतितः। ततः प्रतिनिवृत्तो राजा तद्वृत्तान्तं श्रुत्वा तयोर्वियोगजनितसंतापस्तस्मिन्नेवाग्नौ प्राणान् परित्यक्तुकामोऽमात्यैर्महता यत्नेन वारितः। ततः स तस्याः शरीरोपभुक्तानि दग्धशेषाण्याभरणानि परिष्वज्य मोहमुपगतः।'

इमां करुणां वार्तां निशम्य सर्वेऽप्यार्द्रान्तरात्मानो बभूवुः, हाशब्दं च प्रतिमुहुरुदीरयामासुः । वासवदत्ताचक्षुषी तु सबाष्पे अजायेताम् । तामश्रुमुखीं दृष्ट्वा पद्मावती 'एकान्तसानुक्रोशाऽऽवन्तिका' इत्युन्निनाय।

अवशिष्टं वृत्तं वर्णयितुमनुयुक्तो वर्णी भूयो जगाद— 'ततः शनैः शनैः प्रतिलब्धसंज्ञः संवृत्तः। '

तं लब्धचैतन्यं श्रुत्वा पद्मावती समाहिता बभूव । व्रती पुनरुवाच—'महीतलपरिसर्पणपांसुपाटलशरीरः स राजा सहसोत्थाय "हा वासवदत्ते ! हाऽवन्तिराजपुत्रि! हा प्रिये! हा प्रियशिष्ये !" इति किमपि किमपि बहु प्रलपितवान् । किं बहुना,

नैवेदानीं तादृशाश्चक्रवाका
नैवाप्यन्ये स्त्रीविशेषैर्वियुक्ताः ।
धन्या सा स्त्री यां तथा वेत्ति भर्ता
भर्तृस्नेहात् सा हि दग्धाऽप्यदग्धा ॥' ४ ॥

यौगन्धरायण आह—'अथ भोः ! तं तु पर्यवस्थापयितुं न कश्चिद् यत्नवानमात्यः ?'

वर्णी प्रत्यभाषत—' अस्ति रुमण्वान् नामामात्यो दृढं प्रयत्नवांस्तत्रभवन्तं पर्यवस्थापयितुम् । स हि

अनाहारे तुल्यः प्रततरुदितक्षामवदनः
शरीरे संस्कारं नृपतिसमदुःखं परिवहन् ।
दिवा वा रात्रौ वा परिचरति यत्नैर्नरपतिं
नृपः प्राणान् सद्यस्त्यजति यदि तस्याप्युपरमः ॥ ५ ॥

"इह तया सह हसितम्", "इह तया सह कथितम्", "इह तया सह पर्युषितम्", "इह तया सह कुपितम्", "इह तया सह शयितम्" इत्येवं विलपन्तं राजानममात्यैर्महता यत्नेन तस्माद् ग्रामाद् गृहीत्वाऽपक्रान्तम् । ततो निष्क्रान्ते राजनि प्रोषितनक्षत्रचन्द्रमिव नभोऽरमणीयः संवृत्तः स ग्रामः । ततोऽहमपि निर्गतोऽस्मि ।'

वृत्तान्तमिदं श्रावयित्वा ब्रह्मचार्यसावापृच्छ्य निष्क्रान्तः। यौगन्धरायणोऽपि पद्मावत्याऽभ्यनुज्ञातः काञ्चुकीयमामन्त्र्य यथाभिलषितं जगाम ।

[ २ ]

पद्मावतीवासवदत्ते अन्योन्यं दृढं बद्धानुरागे समजायेताम् । ते सततं सममेवातिष्ठताम् । एकदोभे ते कन्दुकेनाक्रीडताम् । तयोर्मध्ये परिहासोऽपि प्रावर्तत । तदा वासवदत्ता

पद्मावतीमुवाच—'हला ! अतिचिरं कन्दुकेन क्रीडित्वा-ऽधिकसंजातरागौ परकीयाविव ते हस्तौ संवृत्तौ ।'

पद्मावती प्रोवाच—'आर्ये! किमिदानीं मामपहसितुमिव निध्यायसि ?'

वासवदत्ता प्राह—'नहि नहि । हला! अधिक-मद्य शोभते । अभित इव तेऽद्य वरमुखं पश्यामि ।'

जातत्रपा पद्मावती प्रत्युवाच—'अपेहि । मेदानीं माम-पहस ।'

पद्मावत्याः वचनमिदं श्रुत्वा वासवदत्ताऽवदत्—'एषाऽस्मि तूष्णीका भविष्यन्महासेनप्रद्योतवधु !'

अत्रान्तरे चेट्युवाच—'भर्तृदारिका तेन राज्ञा सह संबन्धं नेच्छति । अत्रभवती वत्सराजस्योदयनस्य गुणानभिलषति ।'

एतच्छ्रुत्वा वासवदत्ता चेतासि व्यचिन्तयत्—'आर्यपुत्रं भर्तारमभिलषति ' इति ।

एवं संलपन्त्योस्तयोः पद्मावत्या धात्री प्रियं निवेदितवती-'भर्तृदारिका वत्सराजायोदयनाय दत्ता । तस्य प्रतीष्टा च ।'

इदं श्रुत्वा वासवदत्ताऽत्यन्तं चकिता बभूव । आत्मानं धारयितुमपारयन्ती साऽकाण्डे व्याजहार—'अत्याहितम् !'

धात्र्युक्तवती—'किमत्रात्याहितम् ?'

वासवदत्ता प्रत्यवदत्—'न खलु किंचित् । तथा नाम संतप्योदासीनो भवति इति ।'

धात्री प्राह-'आर्ये ! आगमप्रधानानि सुलभपर्यवस्थानानि महापुरुषहृदयानि भवन्ति । केनापि प्रयोजनेनेहागत-

स्याभिजनविज्ञानवयोरूपं दृष्ट्वा महाराजेन ग्राहिता ।'

इदमाकर्ण्य वासवदत्ता मनसि व्यचारयत्—'एवम् ! अनपराद्ध इदानीमार्यपुत्रः ' इति ।

अत्रान्तरेऽपरा चेटी प्रविश्योवाच—'त्वरतां त्वरतां तावदार्या । "अद्यैव किल शोभनं नक्षत्रम् । अद्यैव कौतुकमङ्गलं कर्त्तव्यम्" इत्यस्माकं भट्टिनी भणति ।'

[ ३ ]

महाराजस्योदयनस्य पद्मावत्या सह परिणयो निश्चित इति श्रुत्वा वासवदत्ताऽतिव्याकुला जाता । किं तु न सा किमपि प्रतिविधातुं पारयति स्म । समादिष्टाऽभूत् साऽमात्येन यौगन्धरायणेन सर्वथाऽप्यात्मानं गोपायितुम् । स्वीयं स्वान्तं क्षुब्धमवेत्य विवाहामोदसंकुलेऽन्तःपुरचतुःशाले परित्यज्य पद्मावतीमद्वितीया प्रमदवनमुपागता । विविधैर्वितर्कैरतिमात्रं व्यथितस्तस्या अन्तरात्मा । 'आर्यपुत्रोऽपि परकीयः संवृत्तः ' इत्ययमर्थस्तस्या मानसमत्यर्थं मथ्नाति । निध्यायति च सा—' धन्या खलु चक्रवाकवधूः, याऽन्योन्यविरहिता न जीवति । न खल्वहं प्राणान् परित्यजामि !'

एवं विविधाधिविह्वलां तामन्विष्यन्ती चेटी प्रविवेश । तथाविधां तामालोक्य सैवमचिन्तयत्—' अम्मो इयं चिन्ताशून्यहृदया नीहारप्रतिहतचन्द्रलेखेवामण्डितभद्रकं वेषं धारयन्ती प्रियङ्गुशिलापट्टक उपविष्टा ' इति । उपसृत्य चैनामाह—' आर्ये ! आवन्तिके ! कः कालस्त्वामन्विष्यामि ।' वासवदत्ताऽवदत्—'किं निमित्तम् ?'

चेटी कुसुमादिकमुपनीयोवाच—'अस्माकं भट्टिनी भणति

—"महाकुलप्रसूता स्निग्धा निपुणेतीमां तावत् कौतुकमालिकां गुम्फत्वार्या ।"

'कस्मा अपेक्षिता '—इत्यावन्तिकया पृष्टा चेटी जगाद— 'अस्माकं भर्तृदारिकायै ।'

एतत्सर्वमाकर्ण्य भृशं दुःखिता वासवदत्ता व्यचिन्तयत्— 'एतदपि मयैव कर्त्तव्यमासीत् । अहो ! अकरुणाः खल्वीश्वराः ।' अथ सा चेट्यनुरोधेन पुष्पमालिकां गुम्फितुमारभत । गुम्फनकाले च सा चेटीमपृच्छत्—'इदं तावदौषधं किं नाम ?'

चेट्युवाच—' अविधवाकरणं नाम ।'

वासवदत्ता व्यचारयत्—'इदं बहुशो गुम्फितव्यं मम च पद्मावत्याश्च ।'

औषधान्तरस्य ' सपत्नीमर्दनम् ' इति नाम ज्ञात्वा सा तां नाल्पमप्यगुम्फयत् । चेटीसंतोषाय चाचकथत्—' उपरता तस्य भार्या, तन्निष्प्रयोजनमिति परित्यज्यते ।'

अत्रान्तर एव काचिदन्या चेटी समागत्य प्राह – 'त्वरतां त्वरतामार्या ! एष जामाताऽविधवाभिरभ्यन्तरचतुःशालं प्रवेश्यते ।'

अथ प्रथमा चेटी मालिकामादाय द्वितीयया सह निष्क्रान्ता । वासवदत्ता च धीरतामपहाय बहुविधैः करुणैर्वाक्यैः सगद्गदमात्मानमाचुक्रोश । तस्या भर्ता अपि परकीयः संवृत्तः खलु ।

[ ४ ]

वत्साधिपतेरुदयनस्योद्वाहोत्सवो हर्षनिर्भरं समपद्यत । अथैकदा पद्मावतीवासवदत्ते प्रमोदवनमगमताम् । तत्र

शेफालिकासुमनसां मनोज्ञां श्रियं विलोकयन्त्यावेकस्मिन्नेव शिलापट्टके समुपविष्टे । काचिच्चेटी कुसुमाञ्जलिमेकमानीय स्वभर्तृदारिकायाः समर्पितवती । अपूर्वेव काप्यभूत् प्रसूनानां रमणीयता । चेट्या भूयोऽवचायमधिकृत्य पृष्टा पद्मावती तां वारितवती ।

वासवदत्तया हेतुमनुयुक्ता सा प्रत्यवदत्—'आर्यपुत्र इहागत्येमां कुसुमसमृद्धिं पश्येत्, येन संमानिता भवेयम् ।'

वासवदत्ता पप्रच्छ—'हला ! प्रियस्ते भर्ता ?'

पद्मावती प्रतिजगाद–'न जानामि । आर्यपुत्रेण विरहितोत्कण्ठिता भवामि ।'

एतदाकर्ण्य वासवदत्ता स्वमनस्याह—'दुष्करं खल्वहं करोमि । इयमपि नामैवं मन्त्रयते ।'

पद्मावत्यूचे–'एकः खलु मे संदेहः । अथ यथा ममार्यपुत्रस्तथैवार्याया वासवदत्तायाः ? इति ।'

वासवदत्ता प्रत्याह—'अतोऽप्यधिकम् । यद्यल्पः स्नेहः, सा स्वजनं न परित्यजति ।'

अस्मिन्नेव समये चेट्येकाऽवदत्—'भर्तृदारिके ! प्राप्तावसरा भर्तारं भण "अहमपि वीणां शिक्षिष्ये" इति ।'

पद्मावती ब्रूते स्म—'उक्तो मयाऽऽर्यपुत्रः । स चाभणित्वा किंचिद् दीर्घं निःश्वस्य तूष्णीकः संवृत्तः ।'

वासवदत्तया महाराजस्य मौनस्य कारणं पृष्टा पद्मावती प्रोवाच—'तर्कयाम्यार्याया वासवदत्ताया गुणान् स्मृत्वा केवलं दाक्षिण्यतया ममाग्रतो न रोदितीति ।'

वासवदत्ता निजमनस्याह—'धन्या खल्वस्मि, यद्येवं सत्यं भवेत् ।'

अत्रान्तरे वत्सेश्वर उदयनो वसन्तकेन सहितः पद्मावतीमन्विष्यन् तत्र समागतः। अकस्माच्छरत्कालनिर्मलेऽन्तरिक्षे बलदेवबाहुदर्शनीया सारसपङ्क्तिर्दृष्टिपथमयासीत्। तां पश्यन्त्यः पद्मावतीप्रभृतयः स्त्रियो राजानमपश्यन्। सर्वास्ता माधवीलतामण्डपं प्रविष्टाः।

वत्सेशवसन्तकौ शिलापट्टकमेकमधिष्ठाय पद्मावतीं प्रतीक्षाञ्चक्रतुः। आतपस्य दुःसहतां विभाव्य वसन्तको माधवीमण्डपप्रवेशं प्रस्तावयामास। तत्र हि पद्मावतीप्रभृतयः पुरस्तादेव स्थिताः। न यावदेतौ तत्र प्रविष्टौ तावत् पद्मावत्याऽनुज्ञाता चेटी मधुकरपरिनिलीनामवलम्बलतामवदुधाव।

उत्पतद्भिर्मधुकरैः पीडितो वसन्तको वत्सेशश्च बहिरेवातिष्ठताम्। एवं पद्मावतीवासवदत्ते तस्मिन्नेव कुञ्जे बन्दीभूते इवाऽऽस्ताम्।

अत्रान्तरे चेटी वासवदत्ताया दृष्टिं साश्रुपातामवलोकितवती। तत्त्वं निह्नुवाना वासवदत्ताऽवदत्—'एषा खलु मधुकराणामविनयात् काशकुसुमरेणुना पतितेन सोदका मे दृष्टिः।'

यदा वत्साधिपवसन्तकौ कुञ्जाद् बहिरतिष्ठतां तदा वसन्तकस्तमपृच्छत्—'भोः! शून्यं खल्विदं प्रमदवनम्। प्रष्टव्यं किंचिदस्ति। पृच्छामि भवन्तम्—का भवतः प्रिया, तदानीं तत्र भवती वासवदत्ता, इदानीं पद्मावती वा?'

भूपतिः प्रत्यवादीत्—'किमिदानीं, भवान् महति बहुमानसङ्कटे मां न्यस्यति।' परं वसन्तकस्याभूत् स्फुटोत्तरश्रवणे

ऽभिनिवेशः। तस्य निर्बन्धवशादवनिपोऽवदत्। 'श्रूयताम्'

पद्मावती बहुमता मम यद्यपि रूपशीलमाधुर्यैः।
वासवदत्ताबद्धं न तु तावन्मे मनो हरति ॥' ६ ॥

नृपतिवचनमिदं वासवदत्तयाऽतीवानन्दनिर्भरमश्रावि। पद्मावत्यपि तत् परमुचितममन्यत। परमत्र चेट्युवाच—'अदाक्षिण्यः खलु भर्ता!'

पद्मावती—'हला मा मैवम्। सदाक्षिण्य एवाऽऽर्यपुत्रः, य इदानीमप्यार्याया वासवदत्ताया गुणान् स्मरति।'

वासवदत्तायाः कथयाऽनया साश्रुपाता दृष्टिरजायत भूभृतः। स आह–'वयस्य! न जानाति भवानवस्थाम्। कुतः'

दुःखं त्यक्तुं बद्धमूलोऽनुरागः
स्मृत्वा स्मृत्वा याति दुःखं नवत्वम्।
यात्रा त्वेषा यद् विमुच्येह बाष्पं
प्राप्तानृण्या याति बुद्धिः प्रसादम् ॥' ७ ॥

क्षितिपतेरश्रुपातक्लिन्नस्य मुखस्य मार्जनायोदकमानेतुं निष्क्रान्तो वसन्तकः। बाष्पाकुलतया पटान्तरितमिव महीभुजो मुखं निरूप्य निभृतं निर्गता वासवदत्ता। पद्मावत्यपि राजानमुपैतुं प्रचक्रमे।

नलिनीपत्रे जलमादाय निवृत्तो वसन्तकः पद्मावतीं दृष्ट्वाऽतीव विस्मितोऽभवत्। जलानयनस्य कारणं पृष्टो वसन्तकस्तामाह–'भवति! वातानीतेन काशकुसुमरेणुनाऽक्षि निपतितेन साश्रुपातं खलु तत्र भवतो मुखम्। तद् गृह्णातु भवतीदं मुखोदकम्।'

जलमादाय पद्मावती नरेन्द्रमुपगता। समं समाग-

च्छुन्तीं पद्मावतीं विलोक्यावनिपातिनाऽपवार्य पृष्टो वसन्तकस्तत्कर्णे पद्मावत्या उक्तं स्ववचोऽश्रावयत्। राज्ञा च साधुवादेन तोषितः। वसुधाधिपोऽपि मुखं प्रक्षाल्य राज्ञ्याः पुरतः पूर्वोक्तमेव हेतुमुपन्यस्तवान्। तद्यथा—

'शरच्छशाङ्कगौरेण वाताविद्धेन भामिनि !
काशपुष्पलवेनेदं साश्रुपातं मुखं मम ॥' ८ ॥

धराधिपेन मनसि चिन्तितम्—

'इयं बाला नवोद्वाहा सत्यं श्रुत्वा व्यथां व्रजेत्।
कामं धीरस्वभावेयं स्त्रीस्वभावस्तु कातरः ॥' ९ ॥

एवं पद्मावतीं व्यूढोऽप्युदयनो वासवदत्तायामनिवृत्तमानसोऽस्थात्।

[ ५ ]

एकदा पद्मावती शीर्षवेदनया दुःखिताऽभूत्। वासवदत्तामाकारयितुं मधुकरिका प्रेषिताऽऽसीत्। पद्मिनिकाऽपि वसन्तकमन्विष्य तन्मुखेन मेदिनीपतये संदिदेश—'शीर्षवेदनया दुःखिता पद्मावती समुद्रगृहके किल भवन्तं प्रतीक्षते' इति। वसन्तक उदयनमुपेत्य तमेवं विलपन्तमपश्यत्—

'श्लाघ्यामवन्तिनृपतेः सदृशीं तनूजां
कालक्रमेण पुनरागतदारभारः।
लावाणके हुतवहेन हृताङ्गयष्टिं
तां पद्मिनीं हिमहतामिव चिन्तयामि ॥' १० ॥

यदा च स पद्मावत्याः शीर्षवेदनाया वृत्तान्तं वसन्तकादश्रृणोत् तदा स वासवदत्तायाः व्यसनं स्मरन्नुवाच—

'रूपश्रिया समुदितां गुणतश्च युक्तां
लब्ध्वा प्रियां मम तु मन्द इवाद्य शोकः ।
पूर्वाभिघातसरुजोऽप्यनुभूतदुःखः
पद्मावतीमपि तथैव समर्थयामि ॥' ११ ॥

अथ शोकग्रस्त उदयनो वसन्तकेन सह समुद्रगृहकं प्रतस्थे। तत्र प्राप्यान्तरा शय्यां न स किमप्यपश्यत् । शून्यं स्थानं वलोक्य वसन्तक उवाच—'तत्र भवती पद्मावती-ह्याऽऽगत्य निर्गता भवेत् ।'

परं महीपतिरवोचत्—'नैवाऽऽगता खलु। पश्य,

शय्या नावनता तथाऽऽस्तृतसमा न व्याकुलप्रच्छदा
न क्लिष्टं हि शिरोपधानममलं शीर्षाभिघातौषधैः ।
रोगे दृष्टिविलोभनं जनयितुं शोभा न काचित् कृता
प्राणी प्राप्य रुजा पुनर्न शयनं शीघ्रं स्वयं मुञ्चति ॥' १२॥

तथा स्थिते तस्यामेव शय्यायामुपविश्य तत्र भवतीं पद्मावतीं प्रतिपालयाञ्चकार वत्सेश्वरः । क्षणेनैव निद्रया बाधितोऽसौ स्ववयस्यं वसन्तकं कामपि कथां कथयितुं नोदयामास ।

वसन्तकोऽचकथत्—'अस्ति नगर्युज्जयिनी नाम । तत्रा-धिकरमणीयान्युदकस्नानानि वर्तन्ते किल ।'

उज्जयिनीनाममात्रेण राजा पुनरपि वासवदत्ताया अस्मरत् । अतो वसन्तकं कामप्यन्यां कथां कथयितुमादिशत् । अन्यस्यां कथायामारब्धायामेव सुप्तः स भूपतिः । तं संविष्टमवेक्ष्य प्रच्छदेन च प्रच्छाद्य स्वप्रावारकमानेतुं निष्क्रान्तो वसन्तकः ।

वासवदत्ताऽपि पद्मावत्याः शीर्षवेदनां श्रुत्वा समुद्रगृहकमगच्छत्। तत्र गत्वा साऽऽत्मन्याह—'अहो परिजनस्य प्रमादः। अस्वस्थां पद्मावतीं केवलं दीपसहायां कृत्वा परित्यजति। हन्त! इयं पद्मावत्यवसुप्ता। दिष्ट्याऽविच्छिन्नसुखनिःश्वासा। निवृत्तरोगया भवितव्यम्। सुप्ताया बोधनं न साम्प्रतम्। यावदुपविशामि। अथवाऽऽसनान्तरपरिग्रहेणाल्प इव स्नेहः प्रतिभाति। तदस्यां शय्यायामुपविशामि। किं नु खल्वेतया सहोपविशन्त्या अद्य प्रह्लादितमिव मे हृदयम्। एकदेशसंविभागतया शयनीयस्य सूचयति मामालिङ्गेति। यावच्छयिष्ये।'

तस्मिन् समये महाराजः स्वप्नायते स्म—'हा वासवदत्ते!'

वासवदत्ताऽतीव विस्मिता सती सहसोदतिष्ठत्, व्यचारयच्च—'हम! अयन्त्वार्यपुत्रः। न खलु पद्मावती। किं न खलु दृष्टाऽस्मि? महान् खल्वार्ययौगन्धरायणस्य प्रतिज्ञाभारो मम दर्शनेन निष्फलः संवृत्तः।'

राजा पुनरुत्स्वप्नायते स्म—'हा अवन्तिराजपुत्रि!'

इदानीं वासवदत्तया व्यज्ञायि—'दिष्ट्या स्वप्नायते खल्वार्यपुत्रः!' इति। व्यमृशच्च सा—'नात्र कश्चिज्जनः। यावन्मुहूर्तकं स्थित्वा दृष्टिं हृदयं च तोषयामि' इति।

नृपः पुनरुवाच—'हा प्रिये! हा प्रियशिष्ये। देहि मे प्रतिवचनम्।'

वासवदत्ताऽपि क्षणं स्थित्वा प्रस्थिता। गच्छन्ती सा शय्याप्रलम्बितं स्वभर्तुर्हस्तं शयनीय आरोपयत्।

स्पर्शमनुभूय वत्सेश्वरः सहसोत्थायोवाच—'वासवदत्ते!

'रूपश्रिया समुदितां गुणतश्च युक्तां
लब्ध्वा प्रियां मम तु मन्द इवाद्य शोकः ।
पूर्वाभिघातसरुजोऽप्यनुभूतदुःखः
पद्मावतीमपि तथैव समर्थयामि ॥' ११ ॥

अथ शोकग्रस्त उदयनो वसन्तकेन सह समुद्रगृहकं प्रतस्थे। तत्र प्राप्यान्तरा शय्यां न स किमप्यपश्यत् । शून्यं स्थानं वलोक्य वसन्तक उवाच—'तत्र भवती पद्मावती-ह्याऽऽगत्य निर्गता भवेत् ।'

परं महीपतिरवोचत्-'नैवाऽऽगता खलु। पश्य,

शय्या नावनता तथाऽऽस्तृतसमा न व्याकुलप्रच्छदा
न क्लिष्टं हि शिरोपधानममलं शीर्षाभिघातौषधैः ।
रोगे दृष्टिविलोभनं जनयितुं शोभा न काचित् कृता
प्राणी प्राप्य रुजा पुनर्न शयनं शीघ्रं स्वयं मुञ्चति ॥' १२ ॥

तथा स्थिते तस्यामेव शय्यायामुपविश्य तत्र भवतीं पद्मावतीं प्रतिपालयाञ्चकार वत्सेश्वरः । क्षणेनैव निद्रया बाधितोऽसौ स्ववयस्यं वसन्तकं कामपि कथां कथयितुं नोद्यामास ।

वसन्तकोऽचकथत्—'अस्ति नगर्युज्जयिनी नाम । तत्राधिकरमणीयान्युदकस्नानानि वर्तन्ते किल ।'

उज्जयिनीनाममात्रेण राजा पुनरपि वासवदत्ताया अस्मरत् । अतो वसन्तकं कामप्यन्यां कथां कथयितुमादिशत् । अन्यस्यां कथायामारब्धायामेव सुप्तः स भूपतिः । तं संविष्टमवेत्य प्रच्छदेन च प्रच्छाद्य स्वप्रावारकमानेतुं निष्क्रान्तो वसन्तकः ।

वासवदत्ताऽपि पद्मावत्याः शीर्षवेदनां श्रुत्वा समुद्रगृहकमगच्छत् । तत्र गत्वा साऽऽत्मन्याह—'अहो परिजनस्य प्रमादः। अस्वस्थां पद्मावतीं केवलं दीपसहायां कृत्वा परित्यजति। हन्त! इयं पद्मावत्यवसुप्ता। दिष्ट्याऽविच्छिन्नसुखनिःश्वासा। निवृत्तरोगया भवितव्यम्। सुप्ताया बोधनं न साम्प्रतम्। यावदुपविशामि। अथवाऽऽसनान्तरपरिग्रहेणाल्प इव स्नेहः प्रतिभाति। तदस्यां शय्यायामुपविशामि। किं नु खल्वेतया सहोपविशन्त्या अद्य प्रह्लादितमिव मे हृदयम्। एकदेशसंविभागतया शयनीयस्य सूचयति मामालिङ्गेति। यावच्छयिष्ये।'

तस्मिन् समये महाराजः स्वप्नायते स्म—'हा वासवदत्ते!'

वासवदत्ताऽतीव विस्मिता सती सहसोदतिष्ठत्, व्यचारयच्च—'हम! अयन्त्वार्यपुत्रः। न खलु पद्मावती। किं न खलु दृष्टाऽस्मि? महान् खल्वार्ययौगन्धरायणस्य प्रतिज्ञाभारो मम दर्शनेन निष्फलः संवृत्तः।'

राजा पुनरुत्स्वप्नायते स्म—'हा अवन्तिराजपुत्रि!'

इदानीं वासवदत्तया व्यज्ञायि—'दिष्ट्या स्वप्नायते खल्वार्यपुत्रः!' इति। व्यमृशच्च सा—'नात्र कश्चिज्जनः। यावन्मुहूर्तकं स्थित्वा दृष्टिं हृदयं च तोषयामि' इति।

नृपः पुनरुवाच—'हा प्रिये! हा प्रियशिष्ये। देहि मे प्रतिवचनम्।'

वासवदत्ताऽपि क्षणं स्थित्वा प्रस्थिता। गच्छन्ती सा शय्याप्रलम्बितं स्वभर्तुर्हस्तं शयनीय आरोपयत्।

स्पर्शमनुभूय वत्सेश्वरः सहसोत्थायोवाच—'वासवदत्ते!

तिष्ठ तिष्ठ।' संभ्रमेण निष्क्रम्यानुधावन्नुदयनो द्वारपक्षे प्रत्याघातमुपेयिवान्। स प्राक् तत् सर्वं स्वप्नं ततश्च भूतार्थं निर्णीतवान्।

वसन्तके प्रत्यागते राजा तमुवाच–'वयस्य! प्रियमावेदये। धरते खलु वासवदत्ता, नोपरता सा।'

अनवसितायामेव महीपतिवाचि वसन्तको वक्तुमारभत–'अविहा वासवदत्ता! कुत्र देवी वासवदत्ता!! चिरात् खलूपरता वासवदत्ता!!!'

राजोवाच–'वयस्य! मा मैवं वद।

शय्यायामवसुप्तं मां बोधयित्वा सखे! गता।
दग्धेति ब्रुवता पूर्वं वञ्चितोऽस्मि रुमण्वता॥' १३॥

वसन्तक उवाच—'अविहा! असंभावनीयमेतत्। आ! उदकस्नानसंकीर्तनेन तत्र भवतीं चिन्तयता सा स्वप्ने दृष्टा भवेत्।'

खिन्नोऽवनिपतिरवादीत्–'एवं!

यदि तावदयं स्वप्नो धन्यमप्रतिबोधनम्।
अथायं विभ्रमो वा स्याद् विभ्रमो ह्यस्तु मे चिरम्॥'१४॥

वसन्तको राजानमुवाच–' वयस्य! एतस्मिन्नगरेऽवन्तिसुन्दरी नाम यक्षिणी प्रतिवसति। सा त्वया दृष्टा भवेत्।'

राजोवाच-' नहि मित्र! नहि,

स्वप्नस्यान्ते विबुद्धेन नेत्रविप्रोषिताञ्जनम्।
चारित्र्यमभिरक्षन्त्या दृष्टं दीर्घालकं मुखम्॥ १५॥

अपि च वयस्य! पश्य पश्य,

योऽयं संत्रस्तया देव्या तथा बाहुर्निपीडितः ।
स्वप्नेऽप्युत्पन्नसंस्पर्शो रोमहर्षं न मुञ्चति ॥' १६ ॥

'मा इदानीं भवाननर्थं चिन्तयतु' इत्युक्त्वा वसन्तकस्तं चतुःशालमनयत्। तत्र काञ्चुकीयमुखाद् विदितं यन्महाराजो दर्शको राजानमेवमाह स्म—'एष खलु भवतोऽमात्यो रुमण्वान् महता बलसमुदयेनोपयातः खल्वारुणिमभिघातयितुम्। तथा हस्त्यश्वरथपदातीनि मामकानि विजयाङ्गानि संनद्धानि। तदुत्तिष्ठतु भवान्! अपि च,

भिन्नास्ते रिपवो भवद्गुणरताः पौराः समाश्वासिताः,
पार्ष्णी याऽपि भवत्प्रयाणसमये तस्या विधानं कृतम्।
यद् यत् साध्यमरिप्रमाथजननं तत् तन्मयाऽनुष्ठितं
तीर्णा चाऽपि बलैर्नदी त्रिपथगा वत्साश्च हस्ते तव ॥ १७ ॥

उदयनोऽपि हर्षोत्साहनिर्भरमुत्थायाब्रवीत्—बाढम्। अयमिदानीम्,

उपेत्य नागेन्द्रतुरंगतीर्णे तमारुणिं दारुणकर्मदक्षम्।
विकीर्णबाणाग्रतरङ्गभङ्गे महार्णवाभे युधि नाशयामि ॥ १८ ॥

[ ६ ]

एकदा खलु प्रद्योतमहासेनेन प्रेषितो रैभ्यसगोत्रः काञ्चुकीयस्तत्र भवत्या चाङ्गारवत्या प्रेषिताऽऽर्या वसुन्धरा नाम वासवदत्ताधात्री महाराजस्योदयनस्य प्रतीहारमुपस्थितौ। तस्मिन् काले प्रतीहारी विजया काञ्चनतोरणद्वारमशून्यं कुरुते स्म। प्रतीहारी काञ्चुकीयं प्राह 'आर्य! अदेशकालः प्रतीहारस्य।' काञ्चुकीयेन कारणं पृष्टा प्रतीहारी सर्वं वृत्तान्तमकथयत्—'अद्य भर्तुः सूर्यामुखप्रासाद-

गतस्य केनापि वीणा वादिता। तां च श्रुत्वा भर्त्रा भणितं "घोषवत्याः शब्द इव श्रूयते" इति। ततस्तत्र गत्वा स वादकः पृष्टः "कुतोऽस्या वीणाया आगमः" इति। तेन भणितम्— "अस्माभिर्नर्मदातीरे कूर्चगुल्मलग्ना दृष्टा। यदि प्रयोजनमनया, उपनीयतां भर्त्रे" इति। तां चोपनीतामङ्के कृत्वा मोहं गतो भर्ता। ततो मोहप्रत्यागतेन बाष्पपर्याकुलेन मुखेन भर्त्रा भणितम् "दृष्टाऽसि घोषवति, सा खलु न दृश्यते" इति। आर्य! ईदृशोऽनवसरः। कथं निवेदयामि।'

काञ्चुकीयः प्रतीहारीं व्याजहार—'भवति! निवेद्यताम्। इदमपि तदाश्रयमेव।'

अत्रान्तरे वीणां गृहीत्वा सूर्यामुखप्रासादादवतरन्तं राजानमवलोक्य विजया तं न्यवेदयत्। राजाऽपि प्रतीहार्यौ पद्मावतीमाकार्य तामुज्जयिनीजनागमनं व्यजिज्ञपत्। साऽपि तद् विज्ञाय हर्षनिर्भरमुवाच—'आर्यपुत्र! प्रियं मे ज्ञातिकुलस्य कुशलवृत्तान्तं श्रोतुम्।'

पृथिवीपतिरुवाच—अभिजनानुरूपमेतद् भवत्याभिहितं "वासवदत्तास्वजनो मे स्वजनः" इति।'

तत्रावस्थानं नाभिमतं बभूव पद्मावत्याः। 'आर्यपुत्रस्यापरः परिग्रहोऽरुचिकरो भवेदुज्जयिनीजनस्य' इत्यासीत् तस्या शङ्का। वत्सराजस्तु 'कलत्रदर्शनार्हं जनं कलत्रदर्शनात् परिहरतीति बहु दोषमुत्पादयति' इति तां तत्रैवोपावेशयत्। राज्ञः पद्मावत्याश्च हृदयं गुरुजनसन्देशायोत्सुकोत्सुकमासीत्। अत्रान्तरे रैभ्यसगोत्रः काञ्चुकीयो धात्री वसुन्धरा च प्रतीहार्या सार्धं तत्रावापतुः।

गच्छतः काञ्चुकीयस्य मनस्यभूत्—'भोः !

सम्बन्धिराज्यमिदमेत्य महान् प्रहर्षः
स्मृत्वा पुनर्नृपसुता निधनं विषादः ।
किं नाम दैव ! भवता न कृतं यदि स्याद्
राज्यं परैरपहृतं कुशलं च देव्याः ॥ १९ ॥

काञ्चुकीयो धात्री च राज्ञः पुरोऽवस्थाय तं जयशब्देनाभिननन्दतुः । कुशलप्रश्नानन्तरं काञ्चुकीय उवाच—महाराजो महासेनः संदिशति–'दिष्ट्या परैरपहृतं राज्यं पुनः प्रत्यानीतम् । अत्र सुमहान् मे प्रहर्षः । कुतः—

कातरा येऽप्यशक्ता वा नोत्साहस्तेषु जायते ।
प्रायेण हि नरेन्द्रश्रीः सोत्साहैरेव भुज्यते ॥' २० ॥

उदयन उवाच—' आर्य ! सर्वमेतन्महासेनस्य प्रभावः । कुतः—

अहमवजितः पूर्वं तावत् सुतैः सह लालितो
दृढमपहृता कन्या भूयो मया न च रक्षिता ।
निधनमपि च श्रुत्वा तस्यास्तथैव मयि स्वता
ननु यदुचितान् वत्सान् प्राप्तुं नृपोऽत्र हि कारणम् ॥ २१ ॥

काञ्चुकीयेन प्रोक्तम्—'एष महासेनस्य संदेशः । देव्याः संदेशमिहात्र भवती धात्री वसुन्धरा कथयिष्यति ।'

धात्री वक्ति स्म—'आह भट्टिनी–" उपरता वासवदत्ता ! मम वा महासेनस्य वा यादृशौ गोपालकपालकौ, तादृश एव त्वम् । प्रथममेवाभिप्रेतो जामातेत्येतन्निमित्तमुज्जयिनीमानीतः । अनग्निसाक्षिकं वीणाव्यपदेशेन दत्ता । आत्मनश्चपलतयाऽनिर्वृत्तविवाहमङ्गल एव गतः । अथ चाऽऽवाभ्यां

तव च वासवदत्तायाश्च प्रतिकृतिं चित्रफलिकायामालिख्य विवाहो निर्वृत्तः। एषा चित्रफलिका तव सकाशं प्रेषिता। एतां दृष्ट्वा निर्वृतो भव" इति।'

राज्ञोक्तम्—'अहो! अतिस्निग्धमनुरूपं चाभिहितं तत्र भवत्या।

वाक्यमेतत् प्रियतरं राज्यलाभशतादपि।
अपराद्धेष्वपि स्नेहो यदस्मासु न विस्मृतः॥' २२॥

पद्मावत्युवाच—'आर्यपुत्र! चित्रगतं गुरुजनं दृष्ट्वाऽभिवादयितुमिच्छामि।'

धात्री पद्मावत्यै चित्रमदात्। पद्मावती चित्रं दृष्ट्वा विस्मिता निजमनस्यचिन्तयत्–' हम्! अतिसदृशी खल्वियमार्याया आवन्तिकायाः।'

सा पुनर्महाराजमप्राक्षीत्—'आर्यपुत्र! सदृशी खल्वियं प्रतिकृतिरार्यायाः?'

राजा प्रत्यवदत्—'न सदृशी। अपि तु सैवेति मन्ये। अहो कष्टम्!

अस्य स्निग्धस्य वर्णस्य विपत्तिर्दारुणा कथम्।
इदं च मुखमाधुर्यं कथं दूषितमग्निना॥' २३॥

पद्मावती प्राब्रवीत्–'आर्यपुत्रस्य प्रतिकृतिं दृष्ट्वा जानामीयमार्यया सदृशी न वेति।'

धात्र्युवाच—'पश्यतु पश्यतु भर्तृदारिका।'

पद्मावती महाराजस्य प्रतिकृतिं दृष्ट्वाऽभ्यधात्–'आर्यपुत्रस्य प्रतिकृत्याः सदृशतया जानामीयमार्यया सदृशीति।'

भूपतिर्नोचे—'देवि! चित्रदर्शनात् प्रभृति प्रहृष्टोद्विग्नामिव त्वां पश्यामि। किमिदम् ?'

पद्मावती निजगाद—'आर्यपुत्र! अस्याः प्रतिकृत्याः सदृशीहैव प्रतिवसति।'

राज्ञाऽवाचि—'किं वासवदत्तायाः ?'

पद्मावती प्रत्युवाच—'आम्।'

राजाब्रवीत्—'तेन हि शीघ्रमानीयताम्।'

पद्मावत्योक्तम्—'आर्यपुत्र! मम कन्याभावे केनापि ब्राह्मणेन मम भगिनिकेति न्यासो निक्षिप्तः। प्रोषितभर्तृका परपुरुषदर्शनं परिहरति। तदार्यां मया सहाऽऽगतां दृष्ट्वा जानात्वार्यपुत्रः।'

राजोवाच—'यदि विप्रस्य भगिनी व्यक्तमन्या भविष्यति।
परस्परगता लोके दृश्यते तुल्यरूपता॥' २४॥

एवं प्रवृत्तायां संकथायां प्रतीहारी महाराजमसूचयत्—'कश्चिदुज्जयिनीयो ब्राह्मणः प्रतीहारमुपस्थितः कथयति—"भट्टिन्या हस्ते मम भगिनिकेति न्यासो निक्षिप्तः। तं प्रतिग्रहीतुमायातः" इति।'

राजा तं सत्वरमानेतुमादिशत्। पद्मावत्यप्यावन्तिकामानेतुं समादिष्टा। प्रविशतस्तस्य ब्राह्मणवेशस्य यौगन्धरायणस्य चेतस्यभूत्—'भोः!

प्रच्छाद्य राजमहिषीं नृपतेर्हितार्थं
कामं मया कृतमिदं हितमित्यवेद्य।
सिद्धेऽपि नाम मम कर्मणि पार्थिवोऽसौ
किं वक्ष्यतीति हृदयं परिशङ्कितं मे॥' २५॥

राज्ञः पुरस्तादुपसृत्य 'जयतु देवः' इति तमभिनन्द्य ब्राह्मणः स्वस्वसारमयाचत। अत्रान्तरे पद्मावत्यापि वासवदत्तया सह समागता।

"साक्षिमन् न्यासो निर्यातयितव्यः" इति विचिन्त्य वत्साधिपती रैभ्यसगोत्रस्य काञ्चुकीयस्य धात्र्या वसुन्धरायाश्च समक्षमेव तद्भगिनीन्यासं प्रत्यर्पयितुं समादिदेश।

पद्मावती कृतब्राह्मणवेषं यौगन्धरायणमुवाच—'आर्य! नीयतामिदानीमार्या।'

धात्री तु तां निशाम्याऽऽशशंस—'अम्मो! भर्तृदारिका वासवदत्ता।'

महाराजः साश्चर्यमवोचत्—'कथं महासेनस्य पुत्री!' पुनः स वासवदत्तां संबोध्याभ्यधत्त—'देवि! प्रविश त्वमभ्यन्तरं पद्मावत्या सह।'

यौगन्धरायणस्तु प्रतिबध्नन्नुवाच—'न खलु न खलु प्रवेष्टव्यम्। मम भगिनी खल्वेषा राजन्!

भरतानां कुले जातो विनीतो ज्ञानवाञ्छुचिः।
तन्नार्हसि बलाद्धर्तुं राजधर्मस्य देशिकः॥' २६॥

राज्ञा भणितम्—'भवतु, पश्यामस्तावद् रूपसादृश्यम्। संक्षिप्यतां यवनिका।'

तदानीं यौगन्धरायणस्तदनु वासवदत्ता च 'जयतु स्वामी' 'जयत्वार्यपुत्रः' इत्यात्मानौ प्रकाशितवन्तौ।

अतिमात्रं विस्मितेन राज्ञा व्याहृतम्—'अये, असौ यौगन्धरायणः! इयं महासेनपुत्री!!

किं नु सत्यमिदं स्वप्नः सा भूयो दृश्यते मया ?
अनयाऽप्येवमेवाहं दृष्टया वञ्चितस्तदा ॥' २७ ॥

यौगन्धरायणो देव्यपनयनापराधं मर्षयितुं राजानमयाचिष्ट । तत्पादयोश्च पतितः ।

राजा तमुत्थाप्योवाच—'यौगन्धरायणो भवान् ननु !

मिथ्योन्मादैश्च युद्धैश्च शास्त्रदृष्टैश्च मन्त्रितैः ।
भवद्यत्नैः खलु वयं मज्जमानाः समुद्धृताः ॥' २८ ॥

अधोमुखो यौगन्धरायणो जगाद—' स्वामिभाग्यानामनुगन्तारो वयम् ।'

पद्मावत्यपि वासवदत्तां क्षमां याचमाना प्राह स—'आर्ये ! सखीजनसमुदाचारेणाजानन्त्याऽतिक्रान्तः समुदाचारः । तच्छीर्षेण प्रसादयामि ।' वासवदत्ता पद्मावतीमुत्थाप्याचकथत्—'अविधवे, अहमेवापराद्धाऽत्र खलु ।'

राजा यौगन्धरायणं वासवदत्तायाः गोपने हेतुमप्राक्षीत् ।

यौगन्धरायणः प्रत्यवदत्–'कौशाम्बीमात्रं परिपालयामीति।

राजा पुनः पप्रच्छ—'अथ पद्मावत्या हस्ते किं न्यासकारणम् ?'

यौगन्धरायणो भणितवान्—'पुष्पकभद्रादिभिरादेशिकैरादिष्टा स्वामिनो देवी भविष्यतीति' ।

इदानीं राज्ञा ज्ञातं यदिदं वृत्तान्तजातं मन्त्री रुमण्वानपि जानाति स्म । परं कौशलमिदं सर्वैः स्वामिहितार्थमेवावलम्बितमासीत् ।

अथ वत्साधिप उभाभ्यां महिषीभ्यामुज्जयिन्यागतजनेन च समं स्वश्वशुरं महाराजप्रद्योतं द्रष्टुं मतिमकरोत् ।

—:o:—

# मालविकाग्निमित्रम्

[ १ ]

अभूद् विदिशायां कश्चिन् महीपतिरग्निमित्रो नाम । तस्य धारिणीरावत्यौ नाम ललनाललामभूते भार्ये बभूवतुः । धारिण्या वसुमित्रो नाम तनूजो वसुलक्ष्मीति कृतनामधेया तनूजा चाऽऽस्ताम् ।

धारिण्याः परिजनेऽवर्तिष्ट काचिच्चेटी मालविका नाम । सा तामभिनयादिके विनेतुं गणदासं नाम नाट्याचार्यं न्ययुङ्क्त ।

महिष्याः परिवारेऽभूदपराऽपि चेटी बकुलावलिका नाम । एकदा कार्यतः क्वचिद् गच्छन्ती बकुलावलिका पथि कौमुदिकानाम्नीमन्यां भृतिकां समासादितवती । सा राज्ञ्याः नागमुद्रासनाथमङ्गुलीयकं शिल्पिसकाशात् तस्या उपनयति स्म । बकुलावलिकां विलोक्य कौमुदिकया पृष्टम्—'सखि ! कुत्र प्रस्थिताऽसि ?'

बकुलावलिकाऽऽललाप—' देव्या एव वचनेन नाट्याचार्यमार्यगणदासं "उपदेशग्रहणे कीदृशी मालविका" इति प्रष्टुम् ।'

कौमुदिका जगाद—'सखि, ईदृशेन व्यापारेणासंनिहिताऽपि दृष्टा किल सा भर्त्रा ! प्रेक्षागृहनियमानुरोधान्न तत्र भर्ता कदाचिदसहायो प्रविशति ।'

बकुलावलिका ब्रवीति स्म—'आम्, देव्याः पार्श्वगतः स जनश्चित्रे दृष्टः।'

कौमुदिका प्राह—'कथमिव?'

बकुलावलिका कथयति—'शृणु। चित्रशालां गता देवी प्रत्यग्रवर्णरागां चित्रलेखामाचार्यस्यावलोकयन्ती तिष्ठति। तस्मिन्नन्तरे भर्तोपस्थितः। ततश्चोपचारानन्तरमेकासनोपविष्टेन भर्त्रा चित्रगताया देव्याः परिजनमध्यगतामासन्नतरां तां प्रेक्ष्य देवी पृष्टा।" अपूर्वेयं दारिका, आसन्ना च देव्या आलिखिता, किंनामधेया?" इति। ततो यावद् देवी न कथयति तावत् कुमार्या वसुलक्ष्म्याऽऽख्यातम्, "आर्य! एषा मालविका" इति। ततः प्रभृति मालविका सविशेषं भर्तुर्दर्शनपथाद् रक्ष्यते।'

तच्छ्रुत्वा कौमुदिकाऽऽत्मनियोगमनुष्ठातुं प्रस्थिता। बकुलावलिकाऽपि संगीतशालातो निष्क्रामन्तं गणदासमवलोक्य तमुपगता, राज्ञ्या अनुयोगं च तस्य श्रावितवती।

गणदासो जगाद—'भद्रे! विज्ञाप्यतां देवी "परमनिपुणा मेधाविनी च" इति। किं बहुना,

यद् यत् प्रयोगविषये भाविकमुपदिश्यते मया तस्यै।
तत् तद् विशेषकरणात् प्रत्युपदिशतीव मे बाला॥' १॥

तादृश्याः सर्वथाऽपि पटोः शिष्याया विशेषं जिज्ञासुर्गणदासोऽभाषत—'भद्रे! तद्विधानामसुलभत्वात् पृच्छामि, कुतो देव्या तत् पात्रमानीतम्।'

बकुलावलिकोवाच—'अस्ति देव्या वर्णावरो भ्राता वीरसेनो नाम। स भर्त्रा नर्मदातीरेऽन्तपालदुर्गे स्थापितः।

तेन शिल्पाधिकारे योग्येयं दारिकेति भगिन्या उपायनं प्रेषिता ।'

गणदासः स्वचेतस्यालोचयत्—'आकृतिविशेषप्रत्ययादेनामनूनवस्तुकां संभावयामि' इति ।

उक्ता च तेन पुनर्बकुलावलिका—'भद्रे ! मया यशस्विना भवितव्यम् । यतः,

पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः ।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥' २ ॥

यदा चात्र गणदासबकुलावलिके मालविकागतमालपतस्तदानीमन्यत्र सचिवो वाहतकोऽग्निमित्रं विदर्भराजस्य पत्रमेकं श्रावयति स्म । तत्र लिखितमभूत्—'पूज्येनाहमादिष्टः "पितृव्यपुत्रो भवतः कुमारो माधवसेनः प्रतिश्रुतसम्बन्धो ममोपान्तिकमुपागच्छन्नन्तरा त्वदीयेनान्तपालेनावस्कन्द्य गृहीतः । स त्वया मदपेक्षया सकलत्रसोदर्यो मोक्तव्यः" इति । तन्न वो न विदितं यत् तुल्याभिजनेषु भूमिहरेषु राज्ञां वृत्तिरीदृशी । अतोऽत्र मध्यस्थः पूज्यो भवितुमर्हति । सोदर्या पुनरस्य ग्रहणविप्लवे विनष्टा । तदन्वेषणाय प्रयतिष्ये । अथावश्यमेव माधवसेनो मया पूज्येन मोचयितव्यः श्रूयतामभिसन्धिः—

मौर्यसचिवं विमुञ्चति यदि पूज्यः संयतं मम श्यालम् ।
मोक्ता माधवसेनं ततोऽहमपि बन्धनात् सद्यः ॥' ३ ॥

अनेन प्रतिवचनेन विदर्भराजमात्मनि कार्यविनिमयेन व्यवहरन्तं वीक्ष्य भृशं कुप्यन्नग्निमित्रस्तं समूलमुन्मूलयितुं

सदण्डचक्रं वीरसेनममात्यमुखेनाऽऽज्ञापितवान् । ततः वाहतकः 'तथा' इत्युक्त्वा निष्क्रान्तः ।

अथ विदिशाधिपतेः सखा गौतमस्तमुपागमत् । स राज्ञा पृष्टः--'वयस्य ! कच्चिदुपेयोपायदर्शने व्यापृतं ते प्रज्ञाचक्षुः ?' गौतमस्तत्कर्णे किमप्यचकथत् । तच्छ्रुत्वा राजाऽतीव प्रीतः समजायत । स स्वसमीहितं सिध्यत् समर्थयामास ।

अत्रान्तरे कुतश्चित् कलहस्य ध्वनिरश्रूयत । कश्चिदुदाजहार–'अलमलं बहु विकत्थ्य । राज्ञः समक्षमेवाऽऽवयोरधरोत्तरव्यक्तिर्भविष्यति' इति ।

तदाकर्ण्य हृष्यन्नवनिपतिरुवाद–'सखे ! त्वत्सुनीति–पादपस्य पुष्पमुद्भिन्नम् ।'

अथाभिनयाचार्यौ हरदत्तगणदासौ तत्र संप्राप्तौ । गणदासो न्यवेदयत्–'देव ! अद्याहममुना हरदत्तेन प्रधानपुरुषसमक्षं "नायं मे पादरजसाऽपि तुल्यः" इत्यधिक्षिप्तः ।'

हरदत्तोऽभ्यधात्–'देव ! अयमेव मयि प्रथमं परिवादकरः "अत्र भवतः किल मम च समुद्रपल्वलयोरिवान्तरम्" इति । तदत्र भवानिमं मां च शास्त्रे प्रयोगे च विमृशतु ।'

गौतमोऽपि प्रस्तावममुं 'समर्थं प्रतिज्ञातम्' इति समर्थयामास । महीपातिस्तु 'पक्षपातमत्र देवी मन्यते' इति तत्पीठमर्दिकया परिव्राजिकया पण्डितकौशिक्या सहितायास्तस्याः समक्षमेव व्यवहारमवेक्षितुं नयानपतेममन्यत । एवं च धारिणीपरिव्राजिके समाहूयेताम् ।

आत्मानं राज्ञीं च क्रमशो हरदत्तगणदासयोस्तत्तत्परिग्रहेण पक्षपातिनावाकलय्य विदिशेश्वरः परिव्राजिकां प्राश्निक-

पदमध्यासितुं निर्दिष्टवान् । आचार्यावपि प्रस्तावममुमनुमुमुदाते । परिव्राजिका प्रथमं निर्णयाभ्युपगमे पराङ्मुखीभूताऽप्यन्ततोऽवशं तत् कार्यं प्रत्यपद्यत ।

क्षितिपतिः परिव्राजिकामब्रवीत्—'ननु स्वाङ्गसौष्ठवाभिनयमुभयोर्दृष्टवती भगवती । तदिदानीमतः परं किमाभ्यां प्रत्याययितव्यम् ?'

परिव्राजिका ब्रूते—

'शिष्टा क्रिया कस्यचिदात्मसंस्था
संक्रान्तिरन्यस्य विशेषयुक्ता ।
यस्योभयं साधु स शिक्षकाणां
धुरि प्रतिष्ठापयितव्य एव ॥ ४ ॥

कौशिकीवचनसमर्थनादृते किमन्यत् प्रतिपद्येत गौतमः । स उवाच—'श्रुतमार्याभ्यां भगवत्या वचनम् । एष पिण्डितार्थः "उपदेशदर्शनेन निर्णयः" इति ।'

हरदत्तगणदासौ तदुररीचक्रतुः । धारिण्यै तु तयोर्विवाद एव नारोचत । साऽवादीत्—'यदा पुनर्मन्दमेधा शिष्योपदेशं मलिनयति तदाऽऽचार्यस्य दोषो नु ?'

महीभुजा जगदे—'देवि ! एवमापद्यते । विनेतुरद्रव्यपरिग्रहोऽपि बुद्धिलाघवं प्रकाशयति ।'

नाभूत् किमप्यविदितं धारिण्याः साम्प्रतम् । सा गणदासं व्याजहार—'अचिरोपनीता ते शिष्या, तदपरिनिष्ठितस्योपदेशस्यान्याय्यं प्रकाशनम् ।'

परं गणदासः प्रत्युदाजहार—'अत एव मे निर्बन्धः ।'

धारिणी स्वीयानामुपक्रमाणामगतिं विभाव्य परिव्राजि-

कायां कुपिता, तद्विषये स्वस्वान्तेऽतर्कयत्—'मूढैषा मां जाग्रतीमपि सुप्तामिव करोति।' ततः प्रतिबद्धुमक्षमा सा तदन्वजानात्। एवमुभयोरुपदेशदर्शनं निश्चितम्। आचार्यौ च प्रेक्षागृहे संगीतरचनां विधातुं प्रस्थितौ।

संरम्भानलदीप्ता धारिणी धरणीधरमभाणीत्—'यदि राजकार्येष्वपीदृश्युपायनिपुणताऽऽर्यपुत्रस्य ततः शोभनं भवेत्।'

वसुन्धराधिपेनोक्तम्—

'अलमन्यथा गृहीत्वा न खलु मनस्विनि! मया प्रयुक्तमिदम्।
प्रायः समानविद्याः परस्परयशःपुरोभागाः॥' ५॥

[ २ ]

अथ सवयस्यो विदिशेन्द्रो, धारिणी, परिव्राजिका विभवतश्च परिवारः संगीतशालायां संनिपतितः। परिव्राजिका गणदासमात्मोपदेशमादितो दर्शयितुं समादिदेश। गणदासो मालविकामाह्वयत्। तस्याः श्रीर्नृपतेर्मनोजहार।

मालविकयोपगानं कृत्वा चतुष्पदवस्तु गीतम्। तद् यथा—

'दुर्लभः प्रियस्तस्मिन् भव हृदय! निराशम्
अहो! अपाङ्गको मे प्रस्फुरति किमपि वामः।
एष स चिरदृष्टः कथमुपनेतव्यो
नाथ! मां पराधीनां त्वयि गणय सतृष्णाम्॥'६॥ इति।

गीत्वा च सा भावमभिनिनाय। शातकुम्भस्य समभूत् सौरभेण संभेदः। अभिनयोऽसौ दृढमालानयन् महीपतिमानसम्।

गानकृत्येऽवसिते मालविका रङ्गभूमेर्निष्क्रमितुमियेष। परं राज्ञोऽधिकाधिकं दर्शनतोषं जनयितुकामश्चपलो गौतमः क्रमभेदविस्मृत्याख्यानव्याजेन तां कियन्तं कालं तत्रैव विलम्बयाम्बभूव। प्रवृत्तश्च तदा कोऽपि परिहासस्तत्र कंचित् कालम्।

अथ परिव्राजिका 'यथादृष्टं सर्वमनवद्यम्' इत्युपदेशमधिकृत्य व्यवस्थापयामास। राजापि चाऽऽत्मन ऐकमत्यमुद्घोषयत्। गणदासोऽपि 'अद्य नर्तयिताऽस्मि' इत्यात्मन आचार्यपदमन्वर्थमाकलयाम्बभूव, मालविकया च सह निष्क्रान्तः।

हरदत्तोऽपि स्वोपदेशं दर्शयितुमनुज्ञां ययाचे। महीभुजा चिन्तितम्—'अवसितो दर्शनार्थः' इति, प्रकाशं च कथयति स्म—'हरदत्त! ननु पर्युत्सुका एव वयम्।'

अनुमतिमधिगम्य हरदत्त आत्मानमनुगृहीतमजगणत्। परं तदानीमेव वैतालिकाद् 'उपारूढो मध्याह्नः' इति विज्ञप्तिर्जगृहे।

प्रत्युत्पन्नमतिर्भोजननिरतश्च गौतमो जगाद—'अविहाऽविहा ब्राह्मणस्य भोजनवेला संवृत्ता, अत्र भवतोऽपि। उचितवेलातिक्रमे चिकित्सका दोषमुदाहरन्ति। हरदत्त! किमिदानीं भणसि?'

हरदत्तेन निवेदितम्—'नास्ति मद्वचनस्यावकाशोऽत्र।'

भूपतिरुवाच—'तेन हि त्वदीयमुपदेशं श्वो वयं द्रक्ष्यामः। विश्राम्यतु भवान्।'

सभा सैवं व्यसृज्यत।

[ ३ ]

अथ कदाचित् परिव्राजिका स्वपरिचारिकां समाभृतिकां
क्ष्मापतिवाटिकायाः प्रमदवनाभिधाया राज्ञ्युपायनार्थं वीज-
पूरकमुपहर्तुमादिदेश। तत्र संप्राप्ता सा प्रमदवनपालिकया
मधुकरिकया कथाप्रसङ्गेनानुयुक्ता—'सखि, कथय तावदन्योन्य-
संघर्षितयोर्नाट्याचार्ययोरुपदेशं दृष्ट्वा कतरो भगवत्या
प्रशंसितः ?'

समाभृतिका प्रत्यब्रवीत्—'द्वावपि किलाऽऽगमिनौ प्रयोग-
निपुणौ च। किं तु शिष्यागुणविशेषेणोन्नमितो गणदासः।'

मधुकरिका पुनरन्वयुङ्क्त—'अथ मालविकागतं कौलीनं
किं श्रूयते ?'

समाभृतिकयाऽऽख्यातम्—'बलवत् खलु साभिलाषस्तस्यां
भर्ता। केवलं देव्या धारिण्याश्चित्तं रक्षन्नात्मनः प्रभुत्वं न
दर्शयति। मालविकाऽप्येषु दिवसेष्वनुभूतमुक्तेव मालतीमाला
म्लायमाना लक्ष्यते। अतः परं न जाने। विसृज माम्।'

मधुकरिकयाऽवादि—'सखि! सममेव गच्छावः।
अहमप्यस्य चिरायमाणकुसुमोद्गमस्य तपनीयाशोकस्य दोहद-
निमित्तं देव्यै विज्ञापयामि।'

एवमुभे प्रस्थिते। एका कौशिकीमुपगता, इतरा च
धारिणीमुपस्थिता।

अग्निमित्रोऽपि मालविकायां दृढमुत्कण्ठते स्म। इरावती
प्रथमं वसन्तावतारसूचकानि रक्ताशोककुरवकाण्युपायनं प्रेष-
यित्वा नववसन्तोत्सवापदेशेन तं निपुणिकामुखेनाभ्यर्थितवती
'इच्छाम्यार्यपुत्रेण सह दोलाधिरोहणसुखमनुभवितुम्' इति।

सोऽपि संदेशममुमवाप्य सवयस्यः प्रमदवनाय प्रयातः।

प्रमदवनमपि तदानीं कामप्यपूर्वामेव श्रियं पुपोष। भूभृतमिव विलोभयितुकामया तच्छ्रिया युवतिवेषलज्जायितृकं वसन्तकुसुमनेपथ्यं जगृहे। रक्ताशोककुरबकतिलकादीनि विविधानि विचित्राणि कुसुमानि विकसन्ति स्म।

पर्युत्सुका मालविकाऽपि धारिणीनियोगात् तत्र समागता। सा तया संदिष्टाऽभूत्—"गौतमचापलाद् दोलापरिभ्रष्टायाः सरुजौ मे चरणौ। त्वं तावद् गत्वा तपनीयाशोकस्य दोहदं निर्वर्तय। यद्यसौ पञ्चरात्राभ्यन्तरे कुसुमं दर्शयति ततोऽहमभिलाषपूरयितृकं प्रसादं दास्यामि" इति। अनुपदमाव्रजन्तीं तच्चरणालङ्कारहस्तां बकुलावलिकां प्रतिपालयन्ती सा तत्रैव स्थिता।

इयमिदानीं सवयस्यस्य जगतीपतेर्नयनविषयं समायाता। दैवयोगात् तौ तथाऽदूरेऽवर्तिषातां यथाऽस्या विस्रब्धं परिदेवनमश्रौष्टाम्। मदनव्याधिनाऽतिमात्रं परामृष्टा सा शशंस—'हृदय! निरवलम्बादतिभूमिलङ्घिनो मनोरथाद् विरम। किं मामायासयसि।' 'मय्येव बद्धाभिलाषेयं बाला' इति राज्ञाऽधुना व्यज्ञायि।

स्तोकेन कालेनालङ्करकनूपुरादिकमादायोपस्थिता बकुलावलिका। सा मालविकामाललाप—'सखि, त्वमिदानीं देव्या योग्यतया नियुक्ता। तस्मादेकं चरणमुपनय। यावत् सालक्तकं सनूपुरं च करोमि। उत्सुका खल्वस्य तपनीयाशोकस्य कुसुमोद्गमे देवी।'

एतदाकर्ण्य नृपेण तर्कितम्—'कथमशोकदोहदनिमित्तोऽयमारम्भः !' इति ।

इदानीमिरावत्यपि दास्या निपुणिकया समं तत्र समायाता। निपुणिका वकुलावलिकामशोकपादपच्छायायां मालविकायाश्चरणालंकारं निर्वर्तयन्तीं न्यरूपयत् । मालविकां तत्र समालोक्य भृशं शङ्कितेरावती । परं निपुणिकयोक्तम्—'तर्कयामि "दोलापरिभ्रष्टया सरुजचरणया देव्याऽशोकदोहदाधिकारे नियुक्ता मालविका" इति । अन्यथा कथं देवी स्वयं धारितं नूपुरयुगलं परिजनस्यानुज्ञास्यति ?'

एकस्य चरणस्यावासिते रागनिक्षेपे वकुलावलिकया मालविकोचे—'अपि रोचते तेऽयं रागरेखाविन्यासः ?'

मालविका प्रत्युवाच—'सखि ! आत्मनश्चरणगत इति लज्जे एनं प्रशंसितुम् । केन प्रसाधनकलायामभिविनीताऽसि ?'

वकुलावलिकाऽऽलपति स्म—'अत्र खलु भर्तुः शिष्याऽस्मि । सखि, अरुणशतपत्रामिव शोभते ते चरणम् । सर्वथा भर्तुरङ्कपरिवर्तिनी भव ।'

इरावत्याऽपि श्रुतमेतद् वचः। सा निपुणिकामुखमवैक्षत। बकुलावलिकाप्युत्तरोत्तरं विस्रब्धं तथा वक्ति यथा मालविका वसुमतीपतेः पर्युत्सुकतां प्रति प्रत्ययं प्रतिपद्येत । "सर्वथाऽपि दूत्ये नियोजितेयं वकुलावलिका" इति सम्प्रतीरावत्या व्यज्ञायि।

स्वल्पेनैव कालेन बकुलावलिकया समपादि द्वितीयस्यापि पादस्य प्रसाधनम् । सा स्वसखीमाह—'एष द्वितीयोऽपि ते निर्वृत्तपरिकर्मा चरणः । यावद् द्वावपि सनूपुरौ करोमि ।'

ततो नूपुरयुगलमामुच्य सा ब्रवीति स्म—'हला ! उत्तिष्ठ। अनुतिष्ठ देव्या अशोकविकासयितृकं नियोगम् ।'

इदानीमिरावत्या विज्ञातं यत् तत् सर्वं धारिण्या नियोगाज्ज्ञातमिति ।

मालविका रचितपल्लवावतंसा सलीलमशोकाय पादं प्रहाय प्राब्रवीत्—'अपि नामाऽऽवयोः सम्भावना सफला भवेत् ?' बकुलावलिकाऽगदत्—'सखि, नास्ति ते दोषः। निर्गुणोऽयमशोको यदि ते चरणसत्कारं लब्ध्वापि कुसुमोद्गमन्थरो भवेत् ।'

लीलामिमामालोक्य मदनोन्मत्तमानसेन महीपतिना शशंसे—'सखे ! वचनावसरपूर्वं प्रवेष्टुमिच्छामि ।'

गौतमः प्रत्यब्रवीत्—'एहि । एनां परिहासयिष्यामि ।'

अथोभौ मालविकां प्रति प्रस्थितौ । निपुणिकैतौ वीक्ष्येरावतीमभ्यधत्त—'भट्टिनि, भर्ताऽत्र प्रविशति ।'

इरावती प्राह—'एतत् प्रथमं मम चिन्तितं हृदयेन ।'

पुरस्ताद् गत्वा गौतमो दोषं गृह्णाति—'भवति ! युक्तं नामात्र भवतः प्रियवयस्योऽयमशोको वामपादेन ताडयितुम् ?'

अत्रोभे अपि सम्भ्रान्ते स्थिते ।

गौतमो निर्भर्त्सयन् भूयोऽपि प्राब्रूत—'बकुलावलिके ! गृहीतार्थया त्वयाऽत्र भवतीदृशमविनयं कुर्वती कस्मान्न निवारिता ?'

वित्रस्ताऽत्र मालविका । बकुलावलिकाऽऽह—'आर्य ! एषा देव्या नियोगमनुतिष्ठति । एतस्मिन्नतिक्रमे परवतीयम् ।

प्रसीदतु भर्ता।' एतदभिधाय साऽऽत्मना सह मालविकां प्रणिपातयामास।

राजोवाच—'यद्येवमनपराद्धाऽसि। उत्तिष्ठ भद्रे।'

महीपतिर्मालविकां हस्तेन गृहीत्वोत्थापयामास। ततश्च विहस्य स शशंस—

' किसलयमृदोर्विलासिनि ! कठिने निहितस्य पादपस्कन्धे।
चरणस्य न ते बाधा सम्प्रति वामस्य वामोरु ! ' ७ ॥

मालविकाऽत्र सत्रपा समजायत।

सा स्वसखीमाचख्यौ—'वकुलावलिके! एहि। अनुष्ठित-मात्मनो नियोगं देव्यै निवेदयावः।'

बकुलावलिकाऽप्यात्मनाऽङ्गीकृतं कृत्यमिदानीं कृतमवधार्य प्रत्याचचक्षे—'तेन हि विज्ञापय भर्तारं "विसर्जय" इति।'

भूभुजाऽभिहितम्—'भद्रे ! यास्यासि ? मम तावदुत्पन्ना-वसरमर्थित्वं श्रूयताम्।

धृतिपुष्पमयमपि जनो बध्नाति न तादृशं चिरात् प्रभृति।
स्पर्शामृतेन पूरय दोहदमस्याप्यनन्यरुचेः ॥' ८ ॥

एतत्सर्वमपीरावत्याऽकर्णितम्। सा सहसोपसृत्य मन्त्र-यामास—'पूरय, पूरय। नन्वशोकः कुसुमं दर्शयति, अयं पुनः पुष्प्यति फलति च।'

इरावतीं वीक्ष्य सर्वेऽपि संभ्रान्ताः। साऽपि मालविका-सहचरीमेवमुपालभत—'बकुलावलिके ! साधु त्वयोप-क्रान्तम्।' तत इतराऽपि तयेदमूचे–'मालविके ! त्वं तावत् सफलप्रार्थनं विधत्स्वार्यपुत्रम्।'

उभाभ्यां प्रत्यभाषि—'प्रसीदतु भट्टिनी। के आवां भर्तुः

प्रणयपरिग्रहस्य ?' एवं चाऽऽवेद्य ते निश्चक्रतुः ।

अथेरावती वसुधाधिपतिमधिक्षेप्तुमारभत—'अहो ! अविश्वसनीयाः पुरुषाः । मया खल्वात्मनो वञ्चनावचनं प्रमाणीकृत्य व्याधगीतरङ्कया हरिण्येवाशङ्कितयैतन्न विज्ञातम् ।' प्रतिपत्तिविमुग्धोऽग्निमित्रः प्रतियोजितवान्—'सुन्दरि ! न मे मालविकया कश्चिदर्थः । मया "त्वं चिरयसि" इति यथाकथंचिदात्मा विनोदितः ।'

इरावती प्रत्यवादीत्—'विश्वसनीयोऽसि । मया न विज्ञातम् "ईदृशं विनोदवस्त्वार्यपुत्रेणोपलब्धम्" इति । अन्यथा मन्दभागिन्यैवं न क्रियते ।'

अथो इरावती रुषा प्रस्थिता । राजाऽपि तामनुसरन्नवोचत्—'प्रसीदतु भवती ।' यदा तु सा कोपवशात् किमपि कर्णेऽकुर्वती रशनासंदितचरणाऽपि व्रजत्येव तदा महीपतिस्तां पुनरभ्यार्थयत—'सुन्दरि ! न शोभते प्रणयिनि जने निरपेक्षता ।' तयाऽभ्यायि—'शठ ! अविश्वसनीयहृदयोऽसि ।'

मुहुरनुनयन् नृपतिस्ततस्तस्याः पादयोरपि पतितः । परं सा 'न खल्विमौ मालविकायाश्चरणौ, यौ ते स्पर्शदोहदं पूरयिष्यतः' इत्यभिधाय प्रयातैव समं दास्या ।

[ ४ ]

अथावनिपतिरनुवेलं शङ्काकुलस्तस्थौ । अतः स तद्वृत्तान्तज्ञानाय स्ववयस्यं गौतमं प्रेषितवान् ।

निवृत्तेन गौतमेन गदितम्—'तत्र भवत्या मे सख्यास्तु स एव वृत्तान्तो यो हि विडालगृहीतायाः परभृतिकायाः । सा खलु तपस्विनी तया पिङ्गलाक्ष्या सारभाण्डगृहे मृत्युमुख

इव निक्षिप्ता। परिव्राजिकया मे कथितम्, "ह्यः किल तत्र भवतीरावती रुजाक्रान्तचरणां देवीं सुखं प्रष्टुमागता। ततः सा देव्या पृष्टा—किं न्ववलोकितो वल्लभजनः—इति। तयोक्तम्—मन्दो व उपचारो यत् परिजने संक्रान्तं वल्लभत्वं न ज्ञायते—इति'। ततस्तयाऽनुबध्यमानया भवतोऽविनयमन्तरेण परिगृहीतार्था कृता देवी। ततः प्रभृति मालविका वकुलावलिका च निगडपद्यावदृष्टसूर्यपादं पातालवासं नागकन्यके इवानुभवतः। सारभाण्डगृहे व्यापृता माधविकाऽपि देव्या संदिष्टाऽस्ति यत्—ममाङ्गुलीयकमुद्रामदृष्ट्वा न मोक्तव्या त्वया हताशा मालविका वकुलावलिका च—" इति।'

तच्छ्रुत्वा विदिशेश्वरो बलवद् व्यथितो बभूव। स सनिःश्वासमुदैरयत्—'अप्यत्र कस्यचिदुपक्रमस्य गतिः स्यात्?'

गौतमेन प्रतिजगदे—'कोऽप्यदृष्टः श्रृणोति। कर्णे ते कथयामि।' ततः स भूपतिमुपश्लिष्य तत्कर्णे उपायमुदाजहार।

प्रतिविधानमुपश्रुत्य जहृषे धरणिधृता। गौतमोपदिष्टेनोपायेन चोपक्रान्तम्। तथा ह्यग्निमित्रो धारिणीं पादवेदनायां विशेषं प्रष्टुं तस्या आयतनं गतः। अचिरादेव यज्ञोपवीतबद्धाङ्गुष्ठः संभ्रान्तो गौतमस्तत्रोपगतः। आगतेनैव तेन तारस्वरेणाऽऽक्रन्दितम्—'परित्रायतां परित्रायतां भवान्। सर्पेण दष्टोऽस्मि' इति।

तदाकर्ण्य सर्वेऽपि विषण्णाः।

भूमिभुजाऽभिहितम्—'कष्टं कष्टम्। क्व भवान् परिभ्रान्तः?'

गौतमः प्रत्यवादीत्—' "देवीं द्रक्ष्यामि" इत्याचारपुष्पग्रहणकारणात् प्रमदवनं गतोऽस्मि।'

अनवसित एव गौतमवचासि मर्मविद्धयेव धारिण्या भणितम्—'हा धिक् ! हा धिक् !! अहमेव ब्राह्मणस्य जीवितसंशयनिमित्तं जाताऽस्मि ।'

निजोपक्रमानुविद्धमर्थावशेषं श्रावणोत्सुको गौतमः पुनरगदत्—'तस्मिन्नशोकस्तवककारणात् प्रसारिते दक्षिणहस्ते कोटरनिर्गतेन सर्परूपेण कालेन दष्टोऽस्मि ।' ततश्च सः 'नन्वेते दंशपदे' इति दंशमप्यदर्शयत् ।'

राज्ञाऽऽज्ञप्तम्—'सम्प्रति विषवैद्यानां कर्म । जयसेने ! क्षिप्रमानीयतां ध्रुवसिद्धिः ।' जयसेनाऽपि 'यद्देव आज्ञापयति' इति निष्क्रान्ता ।

अथ गौतमो विषवेगं रूपयन्नुवाच—'अहो पापेन मृत्युना गृहीतोऽस्मि । आः ! सिमसिमायान्ति मेऽङ्गानि ।'

कातरा धारिणी बभाण—'हा ! दर्शितमशुभं विकारेण । अवलम्बध्वं ब्राह्मणम् ।' परिजनश्च गौतमं ससंभ्रममवलम्बते स्म।

गौतमश्च क्षितिपालमवलोक्याऽऽसन्नावसान इवावदत्—'भोः ! भवतो बाल्यात् प्रियवयस्योऽस्मि । तद् विचार्यापुत्राया मे जनन्या योगक्षेमं वह ।'

अथ जयसेना प्रतिनिवृत्य न्यवेदयत्—'देव ! आज्ञापितो ध्रुवसिद्धिर्विज्ञापयति, "इहैवाऽऽनीयतां गौतमः" इति ।'

मानवेन्द्रेणाभाणि—'तेन हि वर्षवरपरिगृहीतमेनं तत्र भवतः सकाशं प्रापय ।'

व्रजता गौतमेन राज्ञी निवेदिता—'भवति ! जीवेयं वा न वा, यन्मयाऽत्र भवन्तं सेवमानेन तेऽपराद्धं तन्मर्षय ।'

राज्ञ्या प्रत्युक्तम्—'दीर्घायुर्भव ।'

गौतमेन साकं गता जयसेना पुनः प्रत्यागत्याऽऽवेदयत्—'जयतु भर्ता । ध्रुवसिद्धिर्विज्ञापयति, "उदकुम्भविधाने सर्पमुद्रितं किमपि कल्पयितव्यम् । तदन्विष्यताम्" इति ।'

एतदाकर्ण्य धारिण्याऽऽभ्यधायि—'इदं सर्पमुद्रितमङ्गुलीयकम् । पश्चान्मम हस्ते देह्येतत् ।'

राजाऽप्युवाच—'जयसेने ! कर्मसिद्धावाशु प्रतिपत्तिमानय ।'

स्तोकेनैव कालेन जयसेना पुनरुपेत्य 'जयतु देवः । निवृत्तविषवेगो गौतमो मुहूर्तेन प्रकृतिस्थः संवृत्तः' इति प्रियमावेद्य ततो निवेदितवती—'एष पुनरमात्यो वाहतको विज्ञापयति, "राजकार्यं बहु मन्त्रयितव्यम् । तद्दर्शनेनानुग्रहमिच्छामि" इति ।

अथ निरक्रमीद् विदिशेश्वरस्तेन सार्धं जयसेना च । समादिष्टा जयसेना नरपतिं गूढेन पथा प्रमदवनं प्रापयत् । पथ्येव संनिपतितो गौतमः शशंस—'वर्धतां भवान् । सिद्धानि ते मङ्गलकर्माणि ।'

इदानीं महीपतिर्जयसेनां निवर्तयामास । ततः स गौतममनुयुयुजे—'वयस्य ! क्षुद्रा माधविका । न खलु किंचिद् विचारितमनया । "एतयोर्वद्धयोः किंनिमित्तोऽयं मोक्षः ? किं देव्याः परिजनमतिक्रम्य भवान् संदिष्टः"—इत्येवमनया प्रष्टव्यमभूत् ।'

गौतमः प्रतिजगाद—'ननु पृष्टोऽस्मि । मयाऽपि भणितम्, "दैवचिन्तकैर्विज्ञापितो राजा—सोपसर्गं वो नक्षत्रम् । सर्वबन्धनमोक्षः क्रियताम्—इति । तच्छ्रुत्वा देव्येरावतीचित्तं रक्षन्त्या—राजा किल मोचयति—इति जनं ग्राहयितुमहं

संदिष्टः" इति। ततो "युज्यते" इति तया संपादितोऽर्थः। अहमपि समुद्रगृहे सखीसहितां मालविकां स्थापयित्वा भवन्तं प्रत्युद्गतोऽस्मि।'

क्षितीश्वरो स्वसमीहितसाधकं गौतमं सातिशयं प्रशशंस, वयस्यं स्नेहनिर्भरं परिषस्वजे च। तत उभौ समुद्रगृहं प्रस्थितौ। तत्र कुसुमावचायव्यग्रहस्ता राज्ञ्या इरावत्याः परिचारिका चन्द्रिका संनिकृष्टमाव्रजन्ती लक्षिता। तद्दर्शनं परिजिहीर्षू उभौ भित्तिगूढावभूताम्। तत्र गवाक्षात् 'कथं नु मालविका मां प्रतिपालयति' इत्यग्निमित्रस्तां व्यलोकिष्ट।

तदा मालविकावकुलावलिके प्रतिच्छन्दं पश्यन्त्यावास्ताम्। उभाभ्यां प्रणिपत्य 'जयतु भर्ता' इत्युदीरितम्। मालविकयाऽभिदधे—'सखि! तदा संमुखस्थिता भर्तू रूपदर्शनेन न तथा वितृष्णाऽस्मि यथाऽद्य। मया विभावितश्चित्रगतदर्शनो भर्ता।' ततश्च सा पार्श्वपरिवृत्तवदनं भर्तारं पार्श्वगतामिरावतीं स्निग्धं निध्यायन्तं वीक्ष्य स्तोकमखिद्यत। तां तथा वीक्ष्य क्रीडन्ती बकुलावलिकाऽऽललाप—'सखि, भर्तुर्वल्लभैषा।'

तच्छ्रुत्वा कुपितया मालविकयाऽभ्यधायि—'ततः किमिदानीमात्मानमायासयिष्यामि।' सासूयं च सा परावबृते।

अथ सवयस्यो विदिशेश्वर उपेत्यान्वनैषीत्—

'कुप्यसि कुवलयनयने! चित्रार्पितचेष्टया किमेतन्मे।
ननु तव साक्षादयमहमनन्यसाधारणो दासः॥' ६॥

बकुलावलिकोवाद—'जयतु भर्ता।' मालविकाऽपि सव्रीडवदनाऽञ्जलिं चकार।

राजानमवसरं दातुं प्रतिपत्तिमान् गौतमः परिक्रम्य ससंभ्रमसुवाच—'वकुलावलिके ! एष बालाशोकवृक्षस्य पल्लवानि लङ्घयति हरिणः। एहि निवारयाव एनम्।' बकुलावलिकापि 'तथा' इत्युक्त्वातेन सार्धं निष्क्रान्ता। संपूर्णोऽधुना महीभृतोऽभिलाषः। तत्र स मालविकाद्वितीयोऽतिष्ठत्। तदा स स्वप्रियां सभयामवलोक्यावोचत्—

'विसृज सुन्दरि! संगमसाध्वसं तव चिरात् प्रभृति प्रणयोन्मुखे।
परिगृहाण गते सहकारतां त्वमतिमुक्तलता चरितं मयि॥'१०॥

एवं स्थितावभ्यन्तरे। वहिस्तु, वकुलावलिकाऽप्रकाशे स्थातुं निर्गता। द्वाररक्षकत्वेन स्थितो गौतमश्च स्फटिकस्थलमाश्रितः शिलाविशेषस्य सुखस्पर्शतां निर्विशन् निद्रापरवशतामगात्।

चन्द्रिका तं तत्र तथा वीक्ष्य ततो गत्वा निपुणिकां भणितवती—'समुद्रगृहालिन्द एकाकी शयित आर्यगौतमो मम नयनपथमायातः।' निपुणिका च तदुदन्तमिरावतीं विज्ञापितवती।

अथो नरनाथं प्रतिकृतिगतं प्रसादयितुकामेरावती स्वसखीमादिशत्—'तेन हि तत्रैव गच्छामः संशयान् मुक्तमार्यपुत्रस्य प्रियवयस्यं प्रष्टुं च।' ततः 'अथ कथमिदानीं भर्तैव न प्रसाद्यते' इति निपुणिकया पृष्टा सा प्रत्यभाषत—'मुग्धे! यादृशश्चित्रगतस्तादृश एवान्यसंक्रान्तहृदय आर्यपुत्रः। केवलमुपचारातिक्रमं प्रमार्ष्टुमयमारम्भः।'

एवं ते समुद्रगृहकं प्रस्थिते। तत्र निद्रितं गौतमं विलोक्य निपुणिकया भणितम्—'भट्टिनि! एष द्वारदेशे

समुद्रगृहस्य विपणिगत इव बलीवर्दः आर्यगौतम आसीन एव निद्रायते।' गौतमस्तु तदवस्थोऽप्युत्स्वप्नायते स्म—'भवति मालविके ! इरावतीमतिक्रामन्ती भव।'

निपुणिका पुनरुवाच—'एतदत्याहितम् । इमं भुजङ्गभीरुकं ब्रह्मबन्धुमनेन भुजङ्गकुटिलेन दण्डकाष्ठेन स्तम्भान्तरिता भाययिष्यामि।'

'अर्हत्येव कृतघ्न उपद्रवस्य' इत्यतीव कुपितेरावत्यपि तदनुमेने।

ततो निपुणिका गौतमस्योपरि दण्डकाष्ठमपातयत्। सोऽपि सहसा प्रबुध्याऽऽचक्रन्द—'अविहा अविहा ! भोः वयस्य ! सर्पो म उपरि पतितः।'

तदाकर्ण्य नरेशः समनन्तरमेव निस्सृतः। अनुसरन्त्या मालविकया व्याहृतम्—'भर्तः। मा तावत् सहसोपसर्प। सर्प इति भण्यते।'

बकुलावलिकाऽपि समागत्य निष्क्रामन्तं नरेन्द्रं प्रतिरोद्धुमियेष परं स निर्गत एवाभूत्।

स्तम्भान्तरिता सर्वं वीक्षितवतीरावतीदानीमुपेत्य प्राह स—'अपि निर्विघ्नमनोरथो दिवासंकेतो मिथुनस्य ?' ततस्तया बकुलावलिकाऽभिदधे—'बकुलावलिके ! दिष्ट्या दूत्याधिकारविषया संपूर्णा ते प्रतिज्ञा।'

साऽप्यञ्जलिं विधायाभ्यर्थितवती—'प्रसीदतु भट्टिनी, किं नु खलु "दर्दुरा व्याहरन्ति" इति देवः पृथिवीं विस्मरति ?'

शाठ्यमाश्रितः क्षितीशो शशंस—'त्वमन्यथा कल्पयित्वा

ऽस्थाने कुप्यसि । अहं पुनः सत्यमेव कोपस्थानं न पश्यामि । कुतः,

नार्हति कृतापराधोऽप्युत्सवदिवसेषु परिजनो दण्डम् ।
इति मोचिते मयैते प्रणिपतितुं मामुपगते च ॥' ११ ॥

इदानीं विकलेव जयसेना तत्र समुपेत्य सावेगमभिहितवती—'देव ! कुमारी वसुलक्ष्मीः कन्दुकमनुधावन्ती पिङ्गलवानरेण बलवत् त्रासिताऽङ्कनिषण्णा देव्याः प्रवातकिसलयमिव वेपमाना न किंचित् प्रकृतिं प्रतिपद्यते ।'

एतत् संश्रुत्य व्यथितया संत्रासजनितविकारवृद्धिभीतया चेरावत्याऽपि कुमारीं समाश्वासयितुं त्वरयितो मेदिनीपतिः 'अयमेनां संज्ञापयामि' इति सत्वरं निष्क्रान्तः ।

अथ तस्य वयस्य इरावती निपुणिका जयसेना च तथैव निश्चक्रमुः । यावद् भयार्ता मालविका कथयति—'सखि ! देवीं चिन्तयित्वा वेपते मे हृदयम् । न जाने "अतः परं किं वाऽनुभवितव्यं भविष्यति" इति' तावदेव प्रमदवनपालिकाया मधुकरिकायाः 'आश्चर्यमाश्चर्यम् । अपूर्ण एव पञ्चरात्रे दोहदस्य मुकुलैः संनद्धस्तपनीयाशोकः। यावद्देव्यै निवेदयामि' इति हर्षोद्घोषमाकर्ण्य प्रहृष्टे ते उभे तस्या एव पृष्ठतो बभूवतुः ।

[ ५ ]

सेनापतिः पुष्यमित्रो निजपुत्रमग्निमित्रं अधिपतिं चकार । स्वयं चानेकशः प्रबलान् भूमिवल्लभानवजित्य सोऽश्वमेधाय दीक्षितो बभूव । तेन राजपुत्रशतपरिवृतमात्मनः पौत्रं वसुमित्रं गोप्तारमादिश्य संवत्सरोपावर्तनीयो निरर्गलस्तुरगो विसृष्टः । यदा प्रभृत्येतच्छ्रुतं धारिण्या तदा प्रभृति सा कुमारायुर्निमित्त-

मष्टादशसुवर्णपरिमाणां दक्षिणां दक्षिणीयैः परिग्राहयति ।

एकदा धारिणी मङ्गलगृह आसनस्था भूत्वा विदर्भ-विषयाद् भ्रात्रा वीरसेनेन प्रेषितं लेखकैर्वाच्यमानं लेखं शृणोति स्म । वशीकृतोऽभूत् वीरसेनप्रमुखैर्विदिशेश्वर-विजयदण्डैर्विदर्भनाथः, मोचितश्चावर्तिष्ट तस्य दायादो माधवसेनः । दूतश्च पत्रेण सममेव वीरसेनेन महासाराणि रत्नवाहनानि शिल्पकारिकाभूयिष्ठं परिजनं चोपायनीकृत्य विदिशेन्द्रस्य सकाशं प्रेषितोऽभूत्, यो ह्यागामिन्यहनि राजानं द्रष्टाऽऽसीत् ।

अनेन विजयोदन्तेन सर्वत्र नृपप्रासादो हर्षपूरपरिप्लावितो-ऽभूत् । धारिण्या हृष्टतायास्तु हेत्वन्तरमप्यवर्तिष्ट । तच्च गौतमस्यापि विदितमविद्यत । तेनोक्तो भूपतिः—'यथाऽहं पश्यामि सपद्येकान्तसुखितो भवान् भविष्यति ।'

नृपतिः प्रतिपप्रच्छ—'कथमिव ।'

गौतमेनोक्तम्—'अद्य किल देव्या पण्डितकौशिकी भणिता, "भगवति ! यत् त्वं प्रसाधनगर्वं वहसि, तद् दर्शय मालविकायाः शरीरे विवाहनेपथ्यम्" इति । तया च स-विशेषमलंकृता मालविका । तत्र भवती कदाचित् पूरयेद् भवतोऽपि मनोरथम् ।'

अवनीशेनाऽऽशशंसे—'सखे ! मदपेक्षानुवृत्त्या निवृत्ते-र्ष्याया धारिण्याः पूर्वचरितैः सम्भाव्यत एतत् ।'

अत्रान्तरे जयसेनयोपगम्य न्यवेदि—'जयतु भर्ता । देवी विज्ञापयति, "तपनीयाशोकस्य कुसुमसौभाग्यदर्शनेन ममाऽऽरम्भः सफलः क्रियताम्" इति । देवी चर्यार्हसमान

सुखितमन्तःपुरं विसृज्य मालविकापुरोगेणाऽऽत्मनः परिजनेन सह तत्रैव देवं प्रतिपालयति ।'

अथाग्निमित्रः सवयस्यो जयसेनया समं तत्र प्रस्थितः। तत्र प्रमदवनेऽभूतपूर्वैवाभूद् वसन्तश्रीः। तां निशाम्य सर्वथापि चमत्कृतौ नृपतिगौतमौ। रक्ताशोकं वीक्ष्य गौतमोऽब्रवीत्–'भोः! अयं स दत्तनेपथ्य इव कुसुमस्तवकैस्तपनीयाशोकः। विलोक्यतां भवता।'

वसुमतीवल्लभोऽवदत्–' स्थाने खल्वयं प्रसवमन्थरोऽभूत्, यदिदानीमनन्यसाधारणीं शोभामुद्वहति । पश्य,

सर्वाशोकतरूणां प्रथमं सूचितवसन्तविभवानाम्।
निर्वृत्तदोहदेऽस्मिन् संक्रान्तानीव कुसुमानि ॥' १२ ॥

मालविकाऽपि रामणीयकनिधेरधिदेवताभूताऽभूत् । साऽऽलोचयति स्म—'जानामि निमित्तं कौतुकालंकारस्य, तथापि बिसिनीपत्रगतमिव सलिलं वेपते मे हृदयम्। अपि च दक्षिणेतरदपि मे नयनं बहुशः स्फुरति।'

यदा च महीपतिस्तत्र प्राप्तस्तदा धारिणी मालविकां पार्श्वपरिवर्तिनीमनुमन्यमाना तयाऽनूत्थिता तमभ्युत्तस्थौ। तपनीयाशोकस्य यौवनवतीं कुसुमशोभां निरूप्योपविष्ट एव राजनि मौद्गल्येन निवेदितम्–'विजयतां देवः। देव! अमात्यो विज्ञापयति, "तस्मिन् विदर्भविषयोपायने द्वे शिल्पकारिके मार्गपरिश्रमादलघुशरीरे इति पूर्वं न प्रवेशिते। संप्रति ते देवोपस्थानयोग्ये संवृत्ते। तदाज्ञां देवो दातुमर्हति" इति।'

राज्ञाऽनुमतप्रवेशे ते उपसृत्य प्रणिपत्याऽऽज्ञयोपविष्टे।

नृपेणाभिहितम्—'कस्यां कलायामभिविनीते भवत्यौ ?'

उभेऽब्रूताम्—'भर्तः! संगीतेऽभ्यन्तरे स्वः।'

महीभुजाऽभ्यधायि—'देवि! गृह्यतामनयोरन्यतरा।'

धारिण्यभणत्—'मालविके! इतः पश्य। कतरा ते संगीतसहकारिणी रोचते?'

धारिणीवचनमाकर्ण्य शिल्पकारिके मालविकां निर्वर्ण्य सविस्मयमूचतुः—'अहो भर्तृदारिका!' ततश्च प्रणम्य भणितवत्यौ—'जयतु जयतु भर्तृदारिका!' ते च तया सह बाष्पं व्यसृजताम्। सर्वे विस्मिता व्यलोकन्त।

क्षितिपोऽप्राक्षीत्—'के भवत्यौ? का चेयम्?'

उभे प्रत्यूचतुः—'देव! इयमस्माकं भर्तृदारिका।'

भूपतिनाऽनुयुक्तम्—'कथमिव?'

उभेऽभाषताम्—'शृणोतु भर्ता। यः स भर्त्रा विजयदण्डैर्विदर्भनाथं वशीकृत्य बन्धनान् मोचितः कुमारो माधवसेनो नाम, तस्येयं कनीयसी भगिनी मालविका नाम।'

इदं श्रुत्वा चकिता धारिण्यभाणीत्–'कथं राजदारिकेयम्! चन्दनं खलु मया पादुकापरिभोगेण दूषितम्।'

राजोवाच—'अथात्र भवती कथमित्थंभूता?'

मालविका निःश्वस्य स्वमनसि मन्त्रयामास—'विधिनियोगेन।

शिल्पकारिकयोरन्यतरा वक्ति स्म–'शृणोतु भर्ता। दायादवशंगतेऽस्माकं भर्तृदारके माधवसेने तस्यामात्येनाऽर्यसुमतिनाऽस्मादृशं परिजनमुज्झित्वा गूढमपनीतैषा। अतः परं न जानीमः।'

अत्र परिव्राजिका व्याजहार–'अतः परमहं मन्दभाग्या कथयिष्यामि ।'

अथ शिल्पकारिके स्वरसंयोगाद् 'इयमार्यकौशिकी' इति व्यभावयताम् । ततः परिव्राजिका वृत्तान्तावशेषं कथयितुमारेभे । तद्यथा—'माधवसेनसचिवं सुमतिं ममाग्रजमवगच्छ । स इमां तथागतभ्रातृकां मया सार्धमपवाह्य भवत्संबन्धापेक्षया पथिकसार्थं विदिशागामिनमनुप्रविष्टः । स चाटव्यन्ते निविष्टो गताध्वा वणिग्जनो विश्रमितुम् । ततः,

तूणीरपट्टपरिणद्धभुजान्तराल–
माकर्णलम्बिशिखिपिच्छकलापधारि ।
कोदण्डपाणि निनदत् प्रतिरोधकाना–
मापातदुष्प्रसहमाविरभूदनीकम् ॥ १३ ॥

ततो मुहूर्तं बद्धयुद्धास्ते पराङ्मुखीकृताः सार्थवाहयोद्धारस्तस्करैः । ततः स मत्सोदर्यः,

इमां परीप्सुर्दुर्जाते पराभिभवकातराम् ।
भर्तृप्रियः प्रियैर्भर्तुरानृण्यमसुभिर्गतः ॥' १४ ॥

ततः परिव्राजिका वाष्पं विसृजति स्म । शिल्पकारिके अपि तदवस्थे बभूवतुः । ताः पर्यवस्थापयितुं नृपतिना गदितम्—'भगवति ! तनुभृतामीदृशी लोकयात्रा । न शोच्यस्तत्र भवान् सफलीकृतभर्तृपिण्डः । ततस्ततः ?'

परिव्राजिकयोक्तम्—'ततोऽहं मोहमुपगता यावत् संज्ञामुपलभे, तावदियं दुर्लभदर्शना संवृत्ता । ततो भ्रातुः शरीरमग्निसात् कृत्वा पुनर्नवीभूतवैधव्यदुःखया मया त्वदीयं देशमवतीर्येमे काषाये गृहीते । इयञ्च तत आटविकेभ्यो

वीरसेनम्, वीरसेनाच्च देवीं गता, देवीगृहे लब्धप्रवेशया मया पुनर्दृष्टा, इत्येतदवसानं कथायाः।'

अथ धारिण्याऽब्रूयत—'भगवति ! त्वयाऽभिजनवतीं मालविकामनाचक्षाणयाऽसाम्प्रतं कृतम्।'

परिव्राजिकया प्रत्यवाचि—'शान्तं पापम्! शान्तं पापम्!! कारणेन खलु मया नैभृत्यमवलम्बितम्। तच्चैवम्। इयं पितरि जीवति केनापि देवयात्रागतेन सिद्धादेशेन साधुना मत्समक्षमादिष्टा, "संवत्सरमात्रमियं प्रेष्यभावमनुभूय ततः सदृशभर्तृगामिनी भविष्यति" इति। तदवश्यं भाविनमादेश-मस्यास्त्वत्पादशुश्रूषया परिणमन्तमवेक्ष्य "कालप्रतीक्षया मया साधुकृतम्" इति पश्यामि।'

अथ मौद्गल्य उवाच—'देव! कथान्तरेणान्तरितम्। अमात्यस्य पुनरियं विज्ञप्तिर्यत् "विदर्भगतमनुष्ठेयमवधारित-मस्माभिः। देवस्य तावदभिप्रेतं श्रोतुमिच्छामि" इति।'

राज्ञा प्रत्यवाचि—'मौद्गल्य! तत्र भवतोर्भ्रात्रोर्यज्ञसेनमाधव-सेनयोर्द्वैराज्यमिदानीमवस्थापयितुकामोऽस्मि।

तौ पृथग्वरदाकूले शिष्टामुत्तरदक्षिणे।
नक्तंदिवं विभज्योभौ शीतोष्णकिरणाविव॥' १४॥

कञ्चुकिनाऽयमादेशोऽमात्यपरिषदे श्रावितः। ततश्च निवृत्य स आचख्यौ—'विजयतां देवः। देव! अमात्यो विज्ञापयति, "कल्याणी देवस्य बुद्धिः। मन्त्रिपरिषदोऽप्येवमेव दर्शनम्। कुतः,

'द्विधा विभक्तां श्रियमुद्वहन्तौ धुरं रथाश्वाविव संग्रहीतुः।
तौ स्थास्यतस्ते नृपती निदेशे परस्परावग्रहनिर्विकारौ॥' १६॥

राजोवाच—'तेन हि मन्त्रिपरिषदं ब्रूहि, "सेनापतये वीरसेनाय लिख्यताम्—एवं क्रियताम्—इति।"'

अमात्यं राज्ञः सन्देशमाख्यातुं निष्क्रान्तः कञ्चुकी सप्रदेशनं लेख्यं गृहीत्वा प्रतिनिवृत्य जगाद—'अनुष्ठिता प्रभोराज्ञा। अयं पुनरिदानीं देवस्य सेनापतेः पुष्यमित्रस्य सकाशात् सप्राभृतको लेखः प्राप्तः। प्रत्यक्षीकरोत्वेनं देवः।'

महीपः सहसोत्थाय तत् सर्वं सोपचारं गृहीत्वा, प्राभृतकं परिजनायार्पितवान्। अथ स उपविश्य लेखमुद्वेष्ट्य वाचितवान्। ततश्च व्यज्ञायि 'राजयज्ञाय मुक्तो वाजी सिन्धोर्दक्षिणरोधसि चरन्नश्वानीकेन यवनानां प्रार्थितः। तत उभयोः सेनयोर्महानासीत् संमर्दः।

ततः परान् पराजित्य वसुमित्रेण धन्विना।
प्रसह्य ह्रियमाणो स वाजिराजो निवर्तितः॥' १७॥ इति।

पत्रान्ते चैवमभूल्लिखितम्—'सोऽहमिदानीमंशुमतेव सगरः पौत्रेण प्रत्याहृताश्वो यक्ष्ये। तदिदानीमकालहीनं भवता वधूजनेन सह यज्ञसेवनायाऽऽगन्तव्यम्' इति।

परं परितुष्टाः सर्वेऽपि कुमारविजयेन। प्रहृष्टोऽग्निमित्रो यज्ञसेनश्यालं मौर्यसचिवमूरीकृत्य सर्वान् बन्धनस्थान् मुमोच।

धारिण्या तु प्रागेव मालविकाया विदिशेश्वराय प्रतिपादनं संकल्पितमभूत्। तस्या अभिजनं विज्ञाय तदिरावत्याऽपि सहर्षमनुमोदितम्। धारिणी मालविकामवगुण्ठनवतीं विधायावनीन्द्रं व्याजहार—'इदमार्यपुत्रः प्रियनिवेदनानुरूपं पारितोषिकं प्रतीच्छतु।' हर्षोत्फुल्लमना राजाऽपि सव्रीडं तां प्रतिगृहीतवान्।

——:o:——

# विक्रमोर्वशीयम्

[१]

आसीत् कश्चित् परमप्रसिद्धः सोमवंशसम्भवः पुरूरवा नाम राजा। तस्य च राजधानी प्रतिष्ठानपुरमासीत्। एकदाऽसौ सूर्योपस्थानात् प्रतिनिवर्तमानः "परित्रायतां परित्रायतां यः सुरपक्षपाती, यस्य वाऽम्बरतले गतिरस्ति" इति शब्दमश्रौषीत्। आपन्नानुकम्पी पुरूरवा रथमारुह्य त्वरितमेव शब्दस्थानं जगाम। स तत्र रम्भा मेनका 'सहजन्यादयो वीक्ष्य ता भयनिमित्तं पप्रच्छ।

मेनकोवाच—'महाराज! या तपोविशेषपरिशङ्कितस्य सुकुमारं प्रहरणं महेन्द्रस्य, प्रत्यादेशो रूपगर्वितायाः श्रियः, अलङ्कारः स्वर्गस्य, सा नः प्रियसख्युर्वशी कुबेरभवनात् प्रतिनिवर्तमाना हिरण्यपुरवासिना केशिना दानवेन चित्रलेखाद्वितीया अर्धपथ एव बन्दिग्राहं गृहीता। स च जाल्मः पूर्वोत्तरेण दिग्भागेन गतः।'

भीतिहेतुं विज्ञाय समाश्वासिता पुरूरवसाऽप्सरसः। ततः स ताः 'हेमकूटशिखरे प्रतिपालयितव्योऽहं भवतीभिः' इत्यभिधायोर्वशीप्रत्यानयनाय प्रस्थितः।

पूर्वप्रस्थितं वैनतेयमप्यासादयितुं क्षमस्य पुरूरवसो रथवेगस्य कः स मघोनोऽपकारी दानवः। राजा तं क्षणादेव प्राप्तवान्। तं पराजित्य स सचित्रलेखामुर्वशीं स्वरथमारोपितवान्।

इतश्च हेमकूटपर्वते रम्भाद्या अप्सरसः पुरूरवसं प्रतिपालयन्त्यः तद्विक्रममधिकृत्याऽऽलपन्ति स्म। तद्विजये संशयानां रम्भां मेनका बभाषे—'सखि! तव संशयो मा भूत्। उपस्थितसम्परायो महेन्द्रोमध्यमलोकात् सबहुमानमानाय्य तमेव विजयसेनामुखे नियोजयति।'

अन्यतस्तु भृशं परित्रस्तोर्वशीदानीमपि मूर्च्छामुञ्चन्ती स्यन्दने तिष्ठति। तस्याः हृदयं भयेनातितरां कम्पते स्म। उर्वशीं प्रत्यागच्छन्तीं निशाम्य राज्ञा जगदे—'अयि प्रकृतिमापद्यते ते सखी। पश्य—

आविर्भूते शशिनि तमसा मुच्यमानेव रात्रि-
नैशस्यार्चिर्हुतभुज इव छिन्नभूयिष्ठधूमा।
मोहेनान्तर्वरतनुरियं लक्ष्यते मुक्तकल्पा
गङ्गा रोधःपतनकलुषा गृह्णतीव प्रसादम्॥' १॥

संज्ञां प्रतिपन्ना सा सखीमपृच्छत्—'किं प्रभावदर्शिना महेन्द्रेणाभ्युपपन्नास्मि?' चित्रलेखाऽकथयत्—'न महेन्द्रेण, महेन्द्रसदृशानुभावेनानेन राजर्षिणा।' अथ राजानं विलोक्योल्लसितयोर्वश्याऽऽलोचितम्—'उपकृतं दानवैः, कथमन्यथैतादृशोऽपूर्वः पुरुषो दृष्टिपथमवतरेत्।'

नृपोऽपि संचितां जगतीतलसमृद्धिमिव तां निर्वर्ण्यामन्दानन्दसन्दोहाम्भासि विगाहमानः स्वचेतस्यकल्पयत्—'स्थाने खलु। नारायणमृषिं विलोभयन्त्यस्तदूरुसम्भवामिमां दृष्ट्वा व्रीडिताः सर्वा अप्सरस इति। अथवा नेयं तपस्विनः सृष्टिर्भवितुमर्हति। तथाहि—

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तप्रभः
शृङ्गारैकरसः स्वयं नु मदनो मासो न पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥' २ ॥

अथ पथि गच्छतोस्तयोर्विरूढप्रेमाङ्कुरयोः सम्भाषणं तयोराभिजात्यभावगाढताद्यनुरूपमुत्तरोत्तरं प्रीतिव्रतति-वर्धकं च बभूव ।

दूरादेवाऽऽगच्छन्तं रथं पश्यन्त्योऽप्सरसो भृशमहृष्यन् । रम्भा सहर्षं व्याहार्षीत्—'सख्यः ! एष चित्रलेखाद्वितीया-मुर्वशीं गृहीत्वा विशाखासमीपगत इव चन्द्र उपस्थितो राजर्षिः ।' अपरिक्षतशरीरं राजानं, सकुशलं प्रत्यानीतां च स्वप्रियसखीमुर्वशीमवलोक्य सख्यो महान्तं हर्षमुपागताः । राजानं च ता यथोचितं सभाजयामासुः । उर्वशी सोत्कण्ठाः स्वसखीः पर्यष्वजत । अतिवर्णनं नु तद् दृश्यमभूत् पुरूरवा चाऽऽसीदस्य पुनर्दर्शनस्यहेतुभूतः । अतस्ता अस्य सविशेषं कृतवेदिन्यो भूत्वा भूयो भूयस्तं वासवोपमं प्रशशंसुः । 'सर्वथा कल्पशतानि महाराजः पृथिवीं पालयिता भवतु' इति च ताभिस्तत्रानेकशोऽभ्यर्थितम् ।

अथ पूर्वस्यां दिशि महता रथवेगेनोपदर्शितः शब्दः । तप्तचामीकराङ्गदो देदीप्यमानः कश्चित्पुरुषः गगनादवरो-हन्नदृश्यत । क्षणेनैव प्राप्तस्तत्र चित्ररथः । स महेन्द्रोपकार-पर्याप्ते विक्रममाहिम्नि पुरूरवसमभिनन्दन् तमभ्यधात्— 'वयस्य नारदादुपश्रुत्य प्रत्याहरणार्थमस्याः शतक्रतुना गन्धर्वसेना समादिष्टा । ततो वयमन्तरा चारणेभ्यस्त्वदीय

जयोदाहरणं श्रुत्वा त्वामिहस्थमुपागताः । स भवानिमां पुरस्कृत्य सहास्माभिर्मघवन्तंद्रष्टुमर्हति । महत् खलु तत्र भवतो मघोनः प्रियमनुष्ठितं भवता ।' पुरूरवा प्रत्यब्रवीत्—'सखे ! मा मैवम्—

नतु वज्रिण एव वीर्यमेतद् विजयन्ते द्विषतो यदस्य पक्ष्याः ।
वसुधाधरकन्दराभिसर्पी प्रतिशब्दोऽपि हरेर्भिनत्ति नागान् ॥ ३ ॥

अन्यच्च सखे ! नायमवसरो मम शतक्रतुं द्रष्टुम् । मर्षणीयोऽयं जनः । त्वमेवात्रभवतीं प्रभोरन्तिकं प्रापय ।" चित्ररथेन सहाप्सरसो गन्तुमुपक्रान्ताः । उर्वशी चित्रलेखां जनान्तिक मवोचत्—'हला ! चित्रलेखे ! उपकारिणमपि राजर्षिं न शक्नोम्यामन्त्रयितुम् । तत्त्वं मम मुखं भव ।'

चित्रलेखयेलापतिरुपेत्योचे–'महाराज ! उर्वशी विज्ञापयति "महाराजेनाभ्यनुज्ञातेच्छामि प्रियसखीमिव महाराजस्य कीर्तिं सुरलोकं नेतुम् " इति ।'

तथा पृष्टेन पुरूरवसाऽभिहितम्—'गम्यतां पुनर्दर्शनाय ।'

एतदनन्तरं चित्ररथोऽप्सरसश्च गगनमुत्पतिताः । उत्पतनभङ्गं रूपयन्त्युर्वश्यात्मनोदगिरत्—'अहो ! लताविटपे ममैकावली लग्ना ।' एवं व्याजेन राजानं पश्यन्ती सा चित्रलेखामलपत्—'चित्रलेखे ! मोचय तावदेनाम् ।

चित्रलेखया सस्मितमवादि ' दृढं खलु लग्ना । दुर्मोचेव मम प्रतिभाति । भवतु, यतिष्ये तावत् ।'

तस्या अभिप्रायं लक्षयन्त्युर्वशी शशंस—'स्मर तावदेतदात्मनो वचनम् ।'

चित्रलेखा मालां मोचयितुं प्रस्तुता । आत्मानमवलोक-

यन्तीमुर्वशीमवलोक्य राजाऽऽत्मन्यकथयत्—

'प्रियमाचरितं लते ! त्वया मे गमनेऽस्याः क्षणविघ्नमाचरन्त्या ।
यदियं पुनरप्यपाङ्गनेत्रा परिवृत्तार्धमुखी मयाऽद्य दृष्टा ॥' ४ ॥

मोचितायां वैजयन्तिकायामुर्वशी राजानमवलोकयन्ती सवयस्या गन्धर्वेण साकं गता । राजा पुरूरवा च रथमारुह्य निजमायतनं प्रति प्रस्थितः । आविष्टमिवाभूत् तन्मनस्तया । तस्य मदनो दुर्लभाभिनिवेशी भाति स्म ।

[ २ ]

पुरूरवसो मित्रं माणवको निमन्त्रणोपायनेन ब्राह्मण इव राजरहस्येन स्फुटन्नाशङ्कोज्जनाकीर्णे आत्मनो जिह्वां रक्षितुम् । 'एतद्रहस्यगोपनाक्षमोऽहं न खलु कश्चित् प्रकटीकुर्याम्' इत्याशङ्कितोऽसौ यावत् कार्यासनगतः पुरूरवा न तत उत्तिष्ठति तावद् विरलजनसंपाते विमानप्रतिच्छन्दपरिसरे स्थातुं मतिं कृत्वा तत्र गतः ।

तस्मिन् समये माणवकमन्विष्यन्ती निपुणिका नाम्नी दासी तत्राऽगता । सा च राजमहिष्या माणवकसकाशाद् राजरहस्यं ज्ञातुं प्रेषिताऽऽसीत् । तां चेटिकां दृष्ट्वा तद् राजरहस्यं माणवकहृदयं भित्त्वा निष्क्रमितुमिव प्रवृत्तम् । माणवकेन सा संगीतव्यापारमुज्झित्वा निर्गमनस्य प्रयोजनं पृष्टा ।

निपुणिका न्यवेदयत्—'देवी भणति "सदाप्यार्यो मयि पक्षपाती न मामनुचितवेदनादुःखितामुपेक्षते" इति ।'

माणवकेन सवितर्कमुक्तम्—'किंवा वयस्येन तत्र भवत्याः प्रतिकूलमाचरितम् ?'

निपुणिका प्रत्युवाच—'आर्य ! यन्निमित्तं भर्ता

उत्कण्ठितस्तस्याः स्त्रिया नामधेयेन भर्त्रा देव्यालपिता ।'

अथ माणवकेन चेतसि चिन्तितम्—'कथं स्वयमेव तत्र भवता रहस्यभेदः कृतः। किमिदानीमहं जिह्वायन्त्रणेन दुःखमनुभवामि।' ततः स उवाच—'किमामन्त्रिता तत्र भवती "उर्वशी" इति। तस्या दर्शनेन उन्मादितस्तत्र भवान् न केवलं तत्र भवतीं मामपि विनोदविमुखो दृढं पीडयति। तत् त्वं मद्वचनेन विज्ञापय तत्र भवतीम् "यते तावन्मृगतृष्णिकाया निवर्तयितुं वयस्यम्। ततो देव्या मुखं द्रक्ष्यामि" इति।'

दासी आत्मन उद्दिष्टं संसाध्य देव्याः समीपं जगाम।

यदा च क्षोणीश्वरस्तत्राऽऽव्रजन्नलक्ष्यत, तदा माणवक उत्थाय तस्य पार्श्ववर्त्ती बभूव। उर्वश्यां भृशं समुत्सुकं पुरूरवसं वीक्ष्य माणवको मनस्यतर्कयत्—'संपीडिता खलु तावत् तपस्विनी काशिराजपुत्री।' माणवकमौर्ख्यं मनसि कृत्वा तस्मिन्ननिशं संशयानो नरेशस्तं पप्रच्छ—'अपि रक्ष्यते रहस्यनिक्षेपः ?'

तथानुयुक्तो माणवकः सविषादमचिन्तयत्—'हा धिक् हा धिक्! अभिसंहितोऽस्मि, अन्यथा न वयस्य एवं पृच्छेत्।'

तं मौनमाश्रितं वीक्ष्य जातशंको राजर्षिरुवाच—'किं भवांस्तूष्णीमास्ते ?'

तच्छ्रुत्वा माणवकेन प्रत्यभाणि—'एवं मया नियन्त्रिता जिह्वा यद् भवतोऽपि सहसा प्रतिवचनं न ददामि।'

उर्वश्या विरहेण संतप्तहृदयो राजाऽऽत्मानं विनोदयितुं सवयस्यः प्रमदवनं गतः। तत्र तस्यौत्सुक्यं पूर्वतोऽपि

समधिकं समजायत। मलयमारुतः प्रवहति स्म। कुसुमयोजितकामकार्मुकस्य मधोरासीत् समयः। रमणीयशोभमभूत् कृत्स्नं काननम्। सर्व एव प्रमदवनपरिसरः माधव्या श्रिया सश्रीक आसीत्।

प्रमदवनं प्रविष्टावुभौ वासन्तीलतामण्डपे न्यस्तायां स्फटिकशिलायामुपविश्य व्यश्रमताम्। न तु कथमपि सन्तापोपशमो भवति स्म पुरूरवसः। स्रोतोजवोह्यमानस्य प्रतीपतरणमिव हि तत् सर्वमभिरामदृश्यरामणीयकं सर्वथा तस्य प्रतिकूलमाचरति स्म। उपायचिन्तनेऽसमर्थौ राजा माणवकमवोचत्—'वयस्य! नाद्यापि कश्चिदुपायश्चिन्तितो भवता, यथाऽहं सफलप्रार्थनो भवेयम्?'

माणवकोऽवदत्—'एष चिन्तयामि। मा पुनः परिदेवितेन मम समाधिं भिन्द्धि।'

अस्मिन् समये राज्ञो मनः कामपि परां निर्वृतिं प्राप। चिन्तितं च तेन स्वस्वान्ते—

'न सुलभा सकलेन्दुमुखी च सा किमपि चेदमनङ्गविचेष्टितम्।
अभिमुखीष्विव कांक्षितसिद्धिषु व्रजति निर्वृतिमेकपदे मनः॥' ५॥

अन्यत उर्वशी पुरूरवसे समाकुलाऽविद्यत। सापि सचित्रलेखा आकाशयानेनाऽऽगता तं द्रष्टुम्। पथि सा स्वसख्याऽनुयुक्ता—'सखि! क्वानिर्दिष्टकारणं गम्यते?' तथा पृष्टोर्वशी हेमकूटशिखरात् प्रस्थानकालं चित्रलेखामसस्मरत्। 'एषा राजर्षेः पुरूरवसः सकाशं प्रस्थिताऽस्ति' इतीदानीं चित्रलेखयाऽवगतम्।

उर्वश्याऽभिहितम्—'सखि! आदिश्यतां मार्गो यथा

गच्छन्त्योरन्तरायो न भवेत् ।'

चित्रलेखोवाच—' सखि ! विस्रब्धा भव ! ननु भगवता देवगुरुणाऽपराजितां नाम शिखाबन्धनविद्यामुपदिशता त्रिदशप्रतिपक्षस्यालङ्घनीये कृते स्वः ।'

उभे च तथा प्रमदवनमुपस्थिते तिरस्करिणीप्रतिच्छन्ने पुरूरवसः पार्श्ववर्तिन्यौ भूत्वा तस्य माणवकेन सह संलापं श्रोतुं प्रववृताते ।

पुरूरवसा माणवक उर्वशीसमागमोपायं चिन्तयितुमुक्त आसीत् । सोऽधुना राजानमवदत्—'भो ! चिन्तितो मया दुर्लभप्रणयिनीसमागमोपायः ।'

स्वविचारेषु निमग्नो भूवल्लभस्तूष्णीमेवातिष्ठत । जात-संदेहयोर्वश्या व्यमृश्यत्—' का नु खल्वेषा स्त्री याऽनेन प्रार्थ्यमानाऽऽत्मानं विकत्थते ।'

माणवकेन स्वचिन्तितोपायमावेदयितुं पुनरामन्त्रितो राजाऽवादीत्–'तेन हि कथ्यताम् ।'

माणवक उवाच—' स्वप्नसमागमकारिणीं निद्रां सेवतां भवान् । अथवा तत्र भवत्या उर्वश्याः प्रतिकृतिमालिख्य तामेवावलोकयंस्तिष्ठ ।'

एतदाकर्ण्योर्वशी राजर्षेः परिदेवितानामात्मानं लक्ष्यं संप्रधार्य प्रहर्षमुपगता ।

धरणिधवो माणवकमभाणीत्—'उभयमप्यनुपपन्नम् ।

हृदयमिषुभिः कामस्यान्तः सशल्यमिदं सदा
कथमुपलभे निद्रां स्वप्ने समागमकारिणीम् ।

न च सुवदनामालेख्येऽपि प्रियामसमाप्य तां
मम नयनयोरुद्बाष्पत्वं सखे न भविष्यति ॥' ६ ॥

श्रुतमेतन्निखिलमुर्वश्याऽपि। न पुनस्तत् पर्याप्तं तस्या हृदयस्य। तच्चेतस्त्वधुनाऽप्यवितृप्ततया राजानुरागरज्जुदृढतानिर्णयमेव धावति।

माणवकोऽवोचत् राजर्षिम्—'एतावान् मम मतिविभवः।'

इदानीं सर्वथाऽपि निरुपक्रमो मदनव्याधिपरामृष्टः पुरूरवा सनिःश्वासमाशशंस—

' नितान्तकठिनां रुजं मम न वेद सा मानसीं
प्रभावविदितानुरागमवमन्यते वाऽपि माम्।
अलब्धफलनीरसान् मम विधाय तस्मिञ्जने
समागममनोरथान् भवतु पञ्चबाणः कृती ॥' ७ ॥

अथ साम्प्रतं राज्ञः प्रेमाणमधिकृत्याशेषतः प्रत्यायितोर्वशी। अग्रतो प्रतिवचनेऽसमर्थामात्मानं समर्थयमानया तया त्वरितमेव प्रभावनिर्मिते भूर्जपत्रे सम्पादितो लेखोऽधस्तात् प्रक्षिप्तः। स च यथा—

' स्वामिन् सम्भाविता यथाऽहं त्वयाऽज्ञाता।
तथाऽनुरक्तस्य यदि नाम तवोपरि ॥ ८ ॥

ननु मम लुलितपरिजातशयनीये भवन्ति।
नन्दनवनवाता अप्यत्युष्णकाः शरीरके ॥' ९ ॥

माणवकः पतन्तं तत्पत्रं गृहीत्वाचकथत्—'न खल्वदृष्टया तत्र भवत्योर्वश्या भवतः परिदेवितं श्रुत्वा समानानुरागसूचकान्यक्षराणि विसर्जितानि स्युः।'

राज्ञा पत्रं गृहीत्वाऽनुवाच्य सहर्षमुक्तम्—'सखे! प्रसन्नस्ते

तर्कः।' ततः स तत्पत्रं तं श्रावयितुमवाचयत्।

तच्छ्रुत्वा माणवकेन भणितम्—'दिष्ट्योपलब्धं समाश्वासनं भवता!' भूपतिर्बभाषे—'समाश्वासनमिति किमुच्यते—

तुल्यानुरागपिशुनं ललितार्थबन्धं
पत्रे निवेशितमुदाहरणं प्रियायाः।
उत्पक्ष्मणो मम सखे मदिरेक्षणाया-
स्तस्याः समागतमिवाऽऽननमाननेन ॥' १० ॥

'अंगुलिस्वेदेन दूष्येरन्नक्षराणि' इति विचिन्त्य राज्ञा स्वप्रियायाः स्वहस्तो माणवकहस्ते समर्पितः। उर्वशी यावदुपगमनकातरं हृदयं राजानमुपस्थातुं पर्यवस्थापयति तावत् तया चित्रलेखाऽऽत्मनः क्षमं भणितुं पुरूरवसः सकाशं प्रहिता।

चित्रलेखामभिनन्द्यावनीन्द्रोऽवदत्—' भद्रे!

न तथा नन्दयसि मां सख्या विरहिता तया।
संगमे पूर्वदृष्टेव यमुना गङ्गया विना ॥' ११ ॥

चित्रलेखाऽपि समयानुरूपं प्रत्यवादीत्—'ननु प्रथमं मेघराजिर्दृश्यते पश्चाद् विद्युल्लता।'

क्षणेनैवोर्वश्यपि तिरस्करिणीमपनीयाऽऽविरासीत्। राजा तां हस्ते गृहीत्वा आसन उपावेशयत्।

अस्मिन्नेवावसरे देवदूतेनाऽऽगत्योक्तम्—' चित्रलेखे, त्वरयोर्वशीम्।

मुनिना भरतेन यः प्रयोगो भवतीष्वष्टरसाश्रयो नियुक्तः।
ललिताभिनयं तमद्य भर्ता मरुतां द्रष्टुमनाः सलोकपालः ॥' १२ ॥

एतदाकर्ण्यातीव विषण्णा देववनिता। महाराजेनाभ्यनुज्ञाता चित्रलेखोर्वशीं सममात्मना निनाय।

पुरूरवा सम्प्रति स्वचक्षुषो वैयर्थ्यं समर्थयति स्म। आत्मानं विनोदयितुं स भूर्जपत्रं माणवकमयाचिष्ट। तत्तु तेन क्वचित् प्रभ्रष्टमभूत्। तस्मात् तेन परिवर्तितः कथाप्रसङ्गः। परं राजर्षिर्भूयोऽपि तत्पत्रमर्थयाञ्चक्रे।

माणवकः परितो दृष्ट्वा सविषादमाह—'हन्त! न दृश्यते गतमुर्वश्याः मार्गेण।'

राजा प्रमादिनं माणवकं भर्त्सयित्वा तं तत् पत्रमितस्ततो विचेतुमादिदेश।

ततो मनाक् पूर्वं काशिराजापत्यमौशीनरी नाम महाराज्ञी सपरिवारा तत्राऽऽगत्य सन्तिष्ठते स्म। निपुणिकया रहस्यं विज्ञाय सा याथार्थ्यं वेत्तुमियेष। माणवकेन सहोपविष्टं क्षितिदयितमवलोक्य तयोर्विस्रब्धान्यामन्त्रितानि श्रोतुं लतान्तरिता सा नैभृत्यमास्थिता। अत्रान्तरे मारुतेनाऽऽनीयमानं किमपि वस्तु नयनपथमायातम्। तच्चोत्पत्यौशीनर्या नूपुरकोट्या लग्नम्। निपुणिका विभाव्य 'साक्षरविन्यासं भूर्जपत्रम्' इति व्यज्ञासीत्। गृहीत्वा राज्ञ्याज्ञयाऽनुवाच्ये च तयोक्तम्—'भट्टिनि! तदेव कौलीनमिव प्रतिभाति। "भर्त्तारमुद्दिश्योर्वश्याः काव्यबन्धः" इति तर्कयामि।' ततो महिष्या समादिष्टा सा तत् पत्रं तस्यै वाचितवती।

'अत्रानेनैवोपायनेनाप्सरः कामुकं पश्यामि' इति महाराज्ञ्या विचारितम्। माणवकोऽद्यापि तदेव भूर्जपत्रं मार्गयितुं वृथाप्रयासपरोऽवर्तिष्ट। अनभ्याशमुत्पतन्तं वाताविद्धं

मयूरपिच्छं प्रियाया स्वहस्तं मन्वानो पुरूरवा उत्थाय मलय-मारुतमुद्दिश्याभ्यभाषत—' भगवन् वसन्तप्रिय दक्षिणवायो !

वासार्थं हर सम्भृतं सुरभिणा पौष्पं रजो वीरुधां
किं मिथ्या भवतो हृतेन दयितास्नेहस्वहस्तेन मे ।
जानीते हि मनोविनोदनफलैरेवंविधैर्धारितं
कामार्तं जनमञ्जनां प्रति भवानालक्षितप्रार्थनः ॥' १३ ॥

अथ महाराज्ञ्या तत्र गत्वा तत्पत्रं नरपतेरग्रतोविन्यस्तम् । अतर्कितोपगतां राज्ञीं दृष्ट्वा सम्भ्रान्तनृपस्तस्यै स्वागतं व्याजहार । ततश्च स माणवकं जनान्तिकं पृष्टवान्—'सखे ! किमत्र प्रतिविधेयम् ।'

सोऽब्रवीत्--'लोत्रेण गृहीतस्य कुम्भीरकस्यास्ति वा प्रतिवचनम् ।'

वसुमतीश औशीनरीं शशंस—'देवि ! नेदं मया मृग्यते । स खलु परसमन्वेषणार्थमारम्भोऽयम् ।'

आक्षिपन्त्या महाराज्ञ्योक्तम्—'युज्यत आत्मनः सौभाग्यं प्रच्छादयितुम् ।' प्रकृतं परिहासेनैव वारयितुकामो माणवकोऽमन्त्रयत्—' भवति ! त्वरयास्य भोजनं यत् पित्तोपशमनसमर्थं भवति ।'

महाराज्ञ्याऽभिहितम्–'निपुणिके ! शोभनं खलु ब्राह्मणेनाऽऽश्वासितो वयस्यः ।'

माणवकोऽब्रवीत्—'भवति ! ननु पश्याऽऽश्वासितो पिशाचोऽपि भोजनेन ।'

राजाऽब्रवीत्—'मूर्ख, बलादपराधिनं मां प्रतिपादयासि ।'

महाराज्ञ्योक्तम्—'नास्ति भवतोऽपराधः । अहमेवात्रा-

पराद्धा, या प्रतिकूलदर्शना भूत्वाऽग्रतस्ते तिष्ठामि। इतोऽहं गमिष्यामि।'

एवं कोपं व्यञ्जयन्ती महीशमहिषी प्रस्थिता। तदा राज्ञोक्तम्—

'अपराधी नामाहं प्रसीद रम्भोरु ! विरम संरम्भात्।
सेव्यो जनश्च कुपितः कथं नु दासो निरपराधः॥' १४॥

ततश्च स तस्याः पादयोरपतत्। परं सा किमप्यनभिदधती राजानमपहाय प्रावृण्नदीवाप्रसन्ना गतैव सपरिवारा।

गतायां तस्यामुत्थाय निजगाद राजा—'वयस्य, नेदमुपपन्नम्। पश्य—

प्रियवचनशतोऽपि योषितां दयितजनानुनयो रसादृते।
प्रविशति हृदयं न तद्विदां मणिरिव कृत्रिमरागयोजितः॥' १५॥

एवं स्थितेऽपि, तथा चोर्वशीगतमनसोऽपि मे स एव देव्यां बहुमानः, अथापि प्रणिपातलंघनादहमस्यां धैर्यमवलम्बिष्ये।'

[ ३ ]

विबुधालये लक्ष्मीस्वयम्वरे नाम प्रयोगाभिनय उर्वशी लक्ष्म्या भूमिकां, मेनका च वारुण्या परिगृहीतवत्यौ। तत्र मेनकयोर्वशी पृष्टा—'सखि, समागता एते त्रैलोक्यसुपुरुषाः सकेशवा लोकपालाः, कतमस्मिंस्ते भावाभिनिवेशः?' उर्वश्या 'पुरुषोत्तमे' इति भणितव्ये 'पुरूरवसि' इति निर्गता वाणी। अथ क्रुद्धेन मुनिनाऽभिशप्तोर्वशी—'येन ममोपदेशस्त्वया लङ्घितस्तेन न ते दिव्यं स्थानं भविष्यति' इति।

महेन्द्रेण पुनः प्रेक्षणावसाने लज्जयावनतमुखी सा भणिता

"यस्मिन् बद्धभावाऽसि तस्य मे रणसहायस्य राजर्षेः प्रियमत्र करणीयम्। सा त्वं यथाकामं पुरूरवसमुपतिष्ठस्व, यावत् स त्वयि दृष्टसन्तानो भवेत्" इति। एवं मुनेरभिशाप आशीर्भावेन परिणतः।

अन्यतश्च राज्ञे संरब्धौशीनरी यद्यपि निर्गता तथाप्यवधूतप्रणिपाततया पश्चात् सन्तप्यमानमना प्रियानुप्रसादनं नाम व्रतं सम्पादयितुं मतिमकरोत्। तदर्थं निपुणिकामुखेन तया याचितो नरनाथः कञ्चुकिद्वारेण पुनः सन्दिष्टः। अभूत् तदा रमणीयः प्रदोषावसरः। समाणवकमवसितसंध्याजाप्यं पुरूरवसं निरीक्ष्य कञ्चुकिनाऽऽवेदितम्—'जयतु जयतु देवः। देवी विज्ञापयति, "मणिहर्म्यपृष्ठे सुदर्शनश्चन्द्रः। तत्र संनिहितेन देवेन प्रतिपालयितुमिच्छामि यावद् रोहिणीसंयोगः" इति।'

अभ्यर्थनां प्रतिपद्यमानोऽवनिरमणोऽवदत्—'आर्य लातव्य! विज्ञाप्यतां देवी, "यस्ते छन्दः" इति।'

प्रयाते कञ्चुकिनि राज्ञा माणवकः पृष्टः—'वयस्य ! किं परमार्थत एव देव्या व्रतनिमित्तोऽयमारम्भः स्यात्।'

माणवकः प्रत्युवाच—'भोः ! तर्कयामि "जातपश्चात्तापा तत्र भवती व्रतापदेशेन भवतः प्रणिपातलंघनं प्रमार्ष्टुकामा" इति।' राजोवाच—'उपपन्नं भवानाह।'

अथ निर्दिष्टसमयात् प्रागेव राजा सवयस्यो मणिहर्म्यपृष्ठमगमत्। प्रत्यासन्न आसीच्चन्द्रोदयः। तिमिररिच्यमानं पूर्वदिङ्मुखमालोकसुभगं दृश्यते स्म। तदानींतनया प्रकृतिकान्त्या चमत्कृतो भूपतिरुवाच—

'उदयगूढशशाङ्कमरीचिभिस्तमसि दूरमितः प्रतिसारिते ।
अलकसंयमनादिव लोचने हरति मे हरिवाहनदिङ्मुखम् ॥' १६॥

क्षणेनैवोदितः क्षपानाथः । प्रसन्नो माणवको बभाण—'ही ही भोः ! एष खण्डमोदकसश्रीक उदितो राजा द्विजातीनाम् ।'

सस्मितं राजाऽब्रवीत्—'सर्वत्रौदरिकस्याभ्यवहार्यमेव विषयः ।' 'परं मुहूर्त्तादागमनं देव्याः' इति विमृश्य पुरूरवा पुनरप्युर्वशीगतमालपितुं प्रवृत्तः । तन्मनो हि बलवदभितप्यते स्म उर्वश्यै । माणवकस्तमात्मानं धारयितुमुपदिदेश । दक्षिणबाहोः स्पन्दितैराश्वासितस्यापि तस्य मनसोऽभितापो न खल्वपचीयते स्म ।

तदैवाभिशप्ता देवाङ्गनाप्यभिसारिकावेषा चित्रलेखाद्वितीया विमानमारुह्य भूलोकमवतरति स्म । मार्गे प्रश्नोत्तरयोरासीद्धारासंपात इव । उभे यदा राज्ञः सकाशमधिगते तदा तिरस्करिणीप्रतिच्छन्ने राजमाणवकयोराभाषणमाकर्णयितुं प्रवृत्ते ।

नृपतेस्तु रजन्या सह विजृम्भते स्मोर्वशीकृता कामबाधा । 'नन्वेतेऽमृतगर्भाः सेव्यन्तां चन्द्रपादाः'—इति माणवकेन भणितो धरणिधरोऽभ्यधात्—'वयस्य ! एवमादिभिरनुपक्रम्योऽयमातङ्कः । पश्य—

कुसुमशयनं न प्रत्यग्रं न चन्द्रमरीचयो
न च मलयजं सर्वाङ्गीणं न वा मणियष्टयः ।
मनसिजरुजं सा वा दिव्या ममालमपोहितुम्
रहसि लघयेदारब्धा वा तदाश्रयिणी कथा ॥' १७ ॥

सखे, एवं मन्ये,

'अयं तस्या रथक्षोभादंसेनांसो निपीडितः ।
एकः कृती शरीरेऽस्मिन् शेषमङ्गं भुवो भरः ॥' १८ ॥

एवं नृपतेर्हार्दं विज्ञाय साऽभिसारिकाऽऽत्मानं धन्यां समर्थितवती । सहसोपसृत्याऽऽत्मनोऽग्रतोऽप्युदासीनमिव वसुमतीवल्लभमवेक्ष्य सा भृशं विस्मयवशं गता । तदा चित्रलेखा तां सस्मितमस्मारयत्—'अतित्वरिते ! अनुत्क्षिप्त-तिरस्करिणीकाऽसि ।'

इदानीमौपहारिकहस्तपरिजना, सितांशुका, मङ्गलमात्र-भूषणा, पवित्रदूर्वाङ्कुरलाञ्छितालका, व्रतापदेशोज्झित-गर्ववृत्तिना वपुषा क्षितिपतौ प्रसन्ना लक्ष्यमाणा महिषी औशीनरी तत आपतन्ती दृश्यते स्म । चन्द्रमसमवलोक्य राज्ञ्योक्तम्—'हञ्जे निपुणिके ! रोहिणीसंयोगेनाधिकं शोभते भगवान् मृगलाञ्छनः ।'

दास्याऽभिहितम्—'ननु देवीसहितो भर्त्ता विशेष-रमणीयः ।'

एवमालपन्ती सा नृपतेरन्तिकमाजगाम । सोऽपि हस्ते गृहीत्वा तामुपावेशयत् । साऽब्रवीत्—'आर्यपुत्रं पुरस्कृत्य कोऽपि व्रतविशेषो मया संपादनीयः । तन्मुहूर्त्तमुपरोधः सह्यताम् ।'

राजाऽब्रवीत्—'मा मैवम् । अनुग्रहः खलु, नोपरोधः । किंनामधेयं पुनरेतद्देव्या व्रतम् ?'

देवी निपुणिकामैक्षत ।

निपुणकया भणितम्—'भर्त्तः ! प्रियानुप्रसादनं नाम ।'

राज्ञीं विलोक्य राज्ञा जगदे—

'अनेन कल्याणि ! मृणालकोमलं
व्रतेन गात्रं ग्लपयस्यकारणम् ।
प्रसादमाकाङ्क्षति यस्तवोत्सुकः
स किं त्वया दासजनः प्रसाद्यते !' १६ ॥

एतदाकर्ण्योर्वश्याऽभिहिता चित्रलेखा—'सखि, महान् खल्वस्यैतस्यां बहुमानः ।'

चित्रलेखोवाच—'अयि मुग्धे, अन्यसंक्रान्तप्रेमाणो नागरिका अधिकं दक्षिणा भवन्ति ।'

राज्ञः प्रतिवचो निशम्य राज्ञी व्याजहार—'नन्वेतस्यैव व्रतपरिग्रहस्यायं प्रभावो यदेतावन्मन्त्रित आर्यपुत्रः ।'

ततो देव्या परिजनादौपहारिकमादायाभ्यर्चिता मणिहर्म्यगताश्चन्द्रपादाः, औपहारिकमोदकाश्च ततो माणवकं लम्भिताः । तदनु राज्ञोऽपि सपर्याविधिं सम्पाद्य प्राञ्जलिः प्रणिपत्य राज्ञी विज्ञापितवती–'एषाऽहं देवतामिथुनं रोहिणीमृगलाञ्छनं साक्षीकृत्याऽऽर्यपुत्रमनुप्रसादयामि । "अद्य प्रभृति यां स्त्रियमार्यपुत्रः प्रार्थयते, या वाऽऽर्यपुत्रस्य समागमप्रणयिनी, तया सह मया प्रीतिबन्धेन वर्त्तितव्यम्" इति ।'

'अहो न जाने किंपरमस्या वचनम् ?' इति सविमर्शामुर्वशीं चित्रलेखाऽऽचचक्षे—'सखि ! महानुभावया पतिव्रतयाऽभ्यनुज्ञातोऽनन्तरायस्ते प्रियसमागमो भविष्यति ।'

देव्या वच आकर्ण्य माणवकेनापवारितकमुक्तम्—'छिन्नहस्तो मत्स्ये पलायिते निर्विण्णो धीवरो भणति "धर्मो मे

भविष्यति" इति ।' ततश्च स प्रकाशमाशशंस—'भवति, किं तादृशः प्रियस्तत्र भवान् ?'

काशीश्वरकन्यकयाऽभिहितम्—'मूढ, अहं खल्वात्मनः सुखावसानेऽऽर्यपुत्रं निर्वृतशरीरं कर्तुमिच्छामि। एतावता चिन्तय तावत् प्रियो न वेति।'

राजोवाच—

'दातुं वा प्रभवसि मामन्यस्यै हर्तुमेव वा दासम्।
नाहं पुनस्तथा त्वं यथा हि मां शङ्कसे भीरु !' २० ॥

राज्ञी प्रतिबभाषे—'भव वा मा वा। यथानिर्दिष्टं संपादितं प्रियानुप्रसादनं व्रतम्। दारिकाः ! एत, गच्छामः।'

एवमभिधाय निष्क्रान्तौशीनरी सपरिवारा। ततो माणवकोऽभणत्—'असाध्य इति वैद्येनाऽऽतुर इव स्वैरं मुक्तो भवांस्तत्र भवत्या।'

राजा तु पुनरप्युर्वशीं ध्यायन्नतिष्ठत्। स उवाच—'अपि नामोर्वशी—

गूढा नूपुरशब्दमात्रमपि मे कान्ता श्रुतौ पातयेत्
पश्चादेत्य शनैः कराम्बुजवृते कुर्वीत वा लोचने।
हर्म्येऽस्मिन्नवतीर्य साध्वसवशान् मन्दायमाना बला-
दानीयेत पदात् पदं चतुरया सख्या ममोपान्तिकम् ॥'२१ ॥

अथोर्वशी त्वरितं पृष्ठतो गत्वा राज्ञो नयने समावृणोत्। रोमाञ्चितं क्षणात् पुरूरवसो वपुः। स तां हस्ते गृहीत्वैकासन उपवेशितवान्।

उर्वश्या चित्रलेखामुद्दिश्याऽभिहितम्—'सखि, देव्या दत्तो महाराजः। ततोऽस्य प्रणयवतीव शरीरसंपर्कं गता-

ऽसि। मा खलु मां पुरोभागिनीं समर्थयस्व।'

नृपः प्राह—

'देव्या दत्त इति यदि व्यापारं व्रजसि मे शरीरेऽस्मिन्।
प्रथमं कस्यानुमते चोरितमेतत् त्वया हृदयम्॥' २२॥

अत्र चित्रलेखोवाच—'वयस्य, निरुत्तरैषा। साम्प्रतं मम विज्ञाप्यं श्रूयताम्। वसन्तानन्तरमुष्णसमये भगवान् सूर्यो मयोपचरितव्यः। तद् यथेयं मे प्रियसखी स्वर्गस्य नोत्कण्ठते तथा वयस्येन कर्तव्यम्।'

अथोर्वशीं परिष्वज्य चित्रलेखा स्वर्लोकं प्रतस्थे। सम्पन्नाश्च सम्प्रत्युर्वशीपुरूरवसोर्मनोरथाः।

[ ४ ]

प्रियसखीवियोगेन शोकविह्वला चित्रलेखा सहजन्यया निर्वेदकारणं पृष्टा। सा करुणं प्रत्यूचे—'उर्वशी किल तं रतिसहायं राजर्षिममात्येषु निवेशितराज्यधुरं गृहीत्वा गन्धमादनवनं विहर्तुं गता। तत्र खलु मन्दाकिन्याः पुलिनेषु गता सिकतापर्वतकेलिभिः क्रीडन्ती विद्याधरदारिकोदयवती नाम तेन राजर्षिणा चिरं निध्याता' इति कुपितोर्वशी भर्तुरनुनयमप्रतिपद्यमाना गुरुशापसंमूढहृदया विस्मृतदेवतानियमा स्त्रीजनपरिहरणीयं कुमारवनं प्रविष्टा। प्रविष्टमात्रा च काननोपान्तवर्तिलताभावेन परिणतमस्या रूपम्।'

तदाकर्ण्य सहजन्याप्याविष्टा शोकेन। सोवाच—'नास्ति विधेरलङ्घनीयम्।'

चित्रलेखोवाच—'राजाऽपि तस्मिन्नेव कानने प्रियतमां विचिन्वन्नहोरात्राण्यतिवाहयति।'

सहजन्याऽब्रवीत्—'सखि ! तादृशा आकृतिविशेषाश्चिरं दुःखभागिनो न भवन्ति । अवश्यं किमप्यनुग्रहनिमित्तं भूयोऽपि समागमकारणं भविष्यति ।'

महत्यां खलून्मादावस्थायां ववृते पुरूरवा गन्धमादन-वने । प्रियाविरहव्याकुलः स इतस्तत उर्वशीं मार्गयति स्म । तस्मिन् काले स इतस्ततः पृष्ठतः पुरस्ताद् दिशि अन्त-र्बहिः सर्वत्रैव विहायोर्वशीं न किञ्चिदपि ददर्श । सर्व-वस्तुषूर्वश्या गात्रनीकाशतामात्रमपश्यत् ।

विहायसि वारिवाहमवलोक्य भ्रान्तः सोऽतर्कयत्—'असौ कश्चिद्राक्षसः मे प्रियतमामादाय गच्छति ।' अभिक्रुद्धः स तं प्रहर्तुमियेष, परं सम्यग् विभाव्यासावालोचयत्—

'नवजलधरः संनद्धोऽयं, न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं, न नाम शरासनम् ।
अयमपि पटुर्धारासारो, न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत्, प्रिया न ममोर्वशी ॥'२३॥

स भूयो व्यचिन्तयत्–'क्व नु खलु रम्भोरूर्गता स्यात् ?

तिष्ठेत् कोपवशात् प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन् मयि पुनर्भावार्द्रमस्या मनः ।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमदर्शनं नयनयोर्यातेति कोऽयं विधिः ॥' २४ ॥

मेघान् पश्यन् पुना राजा विहस्याचिन्तयत्—'मुधैव खलु मनसः परितापवृद्धिरुपेद्यते । यथा मुनयोऽपि व्याहरन्ति "राजा कालस्य कारणम्" इति । तत्किमहं जलधरसमयं न

प्रत्यादिशामि ? अथवा प्रावृषेण्यैरेव लिङ्गैर्मम राजोपचारः सम्प्रति । तथा हि—

विद्युल्लेखाकनकरुचिरं श्रीवितानं ममाभ्रं
व्याधूयन्ते निचुलतरुभिर्मञ्जरीचामराणि ।
घर्मच्छेदात् पटुतरगिरो बन्दिनो नीलकण्ठा
धारासारोपनयनपरा नैगमाः सानुमन्तः ॥'२५ ॥

पुनरपि दयितायां स्मृतिविषयमायातायां स तां प्रागिवान्वेष्टुं प्रवृत्तः । क्वचित् परं हर्षमुपागतो राजर्षिरचिन्तयत्—

'हृतोष्ठरागैर्नयनोदबिन्दुभिर्निमग्ननाभेर्निपतद्भिरङ्कितम् ।
च्युतं रुषा भिन्नगतेरसंशयं शुकोदरश्याममिदं स्तनांशुकम् ॥' २६ ॥

ततो विभाव्य स उवाच—'कथम् ! सेन्द्रगोपं नवशाद्वलम् । कुतो नु खलु निर्जने वने प्रियाप्रवृत्तिरवगमयितव्या ?'

ततस्तेनाऽऽसारोच्छ्वसितशैलेयस्थलीपाषाणमारूढः कश्चिन् मयूरो दूरोन्नमितेन कण्ठेन पयोदानालोकयन् दृष्टः । पुरूरवा उपेत्य तमपृच्छत्—

'नीलकण्ठ ! ममोत्कण्ठा वनेऽस्मिन् वनिता त्वया ।
दीर्घापाङ्गा सितापाङ्ग ! दृष्टा दृष्टिक्षमा भवेत् ॥' २७ ॥

स त्वदत्त्वैव प्रतिवचनं नर्तितुं प्रवृत्तः । तस्य हर्षकारणं भृशं विमृश्य विरहातुरेण तेनावधारितम्—

'मृदुपवनविभिन्नो मत्प्रियाया विनाशाद्
घनरुचिरकलापो निःसपत्नोऽस्य जातः ।
रतिविगलितबन्धे केशहस्ते सुकेश्याः
सति कुसुमसनाथे किं करोत्येष बर्ही ॥' २८ ॥

ततः 'भवतु, परव्यसननिर्वृतं न खल्वेनं पृच्छामि' इति मनसि कृत्वा किञ्चिदग्रतो गत्वाऽसौ जम्बूविटपमध्यासीनां परभृतिकामालोकयत् । तां विहङ्गेषु पण्डितां मत्वा सोऽभ्यर्थयाञ्चक्रे—

'त्वां कामिनो मदनदूतिमुदाहरन्ति
मानावभङ्गनिपुणं त्वममोघमस्त्रम् ।
तामानय प्रियतमां मम वा समीपं
मां वा नयाऽऽशु कलभाषिणि ! यत्र कान्ता ॥' २९ ॥

यदा साऽनिशम्यैव तद् यथापूर्वं जम्बुफलानि भुङ्क्ते तदा महीपतिरतर्कयत्—

'महदपि परदुःखं शीतलं सम्यगाहुः
प्रणयमगणयित्वा यन्ममापद्गतस्य ।
अधरमिव मदान्धा पातुमेषा प्रवृत्ता
फलमभिमुखपाकं राजजम्बूद्रुमस्य ॥' ३० ॥

एवं गतेऽपि 'प्रियेव मे मञ्जुस्वना' इति न कोपोऽस्याम् ।' अथ राजा राजहंसं कमप्यप्राक्षीत्—'भो भो जलविहङ्गमराज !

पश्चात् सरः प्रति गमिष्यसि मानसं तत्
पाथेयमुत्सृज बिसं ग्रहणाय भूयः ।
मां तावदुद्धर शुचो दयिताप्रवृत्त्या
स्वार्थात् सतां गुरुतरा प्रणयिक्रियैव ॥' ३१ ॥

राजहंसस्तु उन्मुख एव व्यलोकयत् । "मानसोत्केन न मया लक्षिता" इत्येवं वचनमाह ' राजहंसः इति नरनाथेनाग्राहि । निर्वेदसमाकुलमानसो भूवल्लभः सम्प्रति वलवदुन्मादितो

बभूव। तेन पतत्रिणं तमवोचत्—

'यदि हंस! गता न ते नतभ्रूः सरसो रोधसि दर्शनं प्रिया मे।

मदखेलपदं कथं नु तस्याः सकलं चोर! गतं त्वया गृहीतम्? ३२॥

हंस! प्रयच्छ मे कान्तां गतिरस्यास्त्वया हृता।

विभावितैकदेशेन देयं यदभियुज्यते॥' ३२॥

उदडयत स राजहंसः। '"एष स्तेनानुशासी राजा" इति भयादुत्पतितः' इति विगणयन् राजा जहास।

अथो नृपो परतः समन्वेषणार्थमग्रतो व्रजंश्चक्रवाकमेकं पप्रच्छ—

'रथाङ्गनामन्! वियुतो रथाङ्गश्रोणिबिम्बया।

अयं त्वां पृच्छामि रथी मनोरथशतैर्वृतः॥' ३४॥

तस्य शब्दं 'कः? कः?' इति मत्वा स विज्ञापयामास—

'सूर्याचन्द्रमसौ यस्य मातामहपितामहौ।

स्वयं वृतः पतिर्द्वाभ्यामुर्वश्या च भुवा च यः॥' ३५॥

तं ततोऽपि तूष्णीकमवलोक्य स उपालभत—

'सरसि नलिनीपत्रेणापि त्वामावृतविग्रहां

ननु सहचरीं दूरे मत्वा विरौषि समुत्सुकः।

इति च भवतो जायास्नेहात् पृथक्स्थितिभीरुता

मयि च विधुरे भावः कान्ताप्रवृत्तिपराङ्मुखः॥' ३६॥

अत्रापि राजा स्वभाग्यविपर्ययमाऽऽचुक्रोश। अथान्यत्र भ्रमरमेकमवलोक्य पृष्टवान्—

'मधुकर! मदिराक्ष्याः शंस तस्याः प्रवृत्तिं

वरतनुरथवा ते नैव दृष्टा प्रिया मे।

यदि सुरभिमवाप्स्यस्तन्मुखोच्छ्वासगन्धं
तव रतिरभविष्यत् पुण्डरीके किमस्मिन् ॥' ३७ ॥

अथ नातिदूरे गजराजः कश्चिद् दृष्टिपथमवतीर्णः। राजा तमप्यप्राक्षीत्—

'मदकल ! युवतिशशिकला गजयूथप ! यूथिकाशबलकेशी।
स्थिरयौवना स्थिता ते दूरालोके सुखालोका ?' ३८ ॥

तस्य स्निग्धमन्द्रेण गर्जितेन किञ्चित्समाश्वासितो राजा। प्रसीदन् स तमुवाच—'साधर्म्यात् त्वयि मे भूयसी प्रीतिः।

मामाहुः पृथिवीभृतामधिपतिं नागाधिराजो भवा-
नव्युच्छिन्नपृथुप्रवृत्ति भवतो दानं ममाप्यर्थिषु।
स्त्रीरत्नेषु ममोर्वशी प्रियतमा यूथे तवेयं वशा
सर्वं मामनु ते प्रियाविरहजां त्वं तु व्यथां माऽनुभूः॥'३९॥

साधयामस्तावत्।

अथ मनुजेशः पार्श्वतः पर्वतमेकमवलोक्याचिन्तयत्— 'अये, सुरभिकन्दरो नाम विशेषरमणीयः सानुमानालोक्यते। प्रियश्चायमप्सरसाम्। अपि नाम सुतनुरस्योपत्यकायामुपलभ्येत।' तेनासौ शिलोच्चयं तमपृच्छत्—

'अपि वनान्तरमल्पकुचान्तरा श्रयति पर्वत ! पर्वसु संनता।
इदमनङ्गपरिग्रहमङ्गना पृथुनितम्ब ! नितम्बवती तव॥' ४० ॥

अलब्धप्रतिवचनः सोऽचिन्तयत्—'शङ्के विप्रकृष्टो न शृणोति।' तेन हि समीपमेत्य स पृष्टवान्—

'सर्वक्षितिभृतां नाथ ! दृष्टा सर्वाङ्गसुन्दरी।
रामा रम्ये वनोद्देशे मया विरहिता त्वया॥' ४१ ॥

अथ कन्दरमुखविसर्पिणं प्रतिशब्दमाकर्ण्य सोऽन्वया-

न्तरेणाऽऽत्मनो वाक्यमेव पर्वतप्रतिवचस्त्वेन परिगृह्य परां प्रसत्तिमुपेतः । परं विशोऽवलोक्य तदनुपलम्भेन याथार्थ्य-मधिगम्य विषादमुपगतः ।

ततः पर्वतापगायास्तीरे स्थितः स तरङ्गवातमासेवत । तां नवाम्बुकलुषां पश्यतस्तस्योर्वशीभ्रमो जातः । स व्यचारयत्—

'तरङ्गभ्रूभङ्गा क्षुभितविहगश्रेणिरशना
विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम् ।
यथाऽऽविद्धं याति स्खलितमभिसंधाय बहुशो
नदीभावेनेयं ध्रुवमसहना सा परिणता ॥' ४२ ॥

ततः साञ्जलिस्तामनुनयन्नपि न यदा प्रतिवचनमुपालभत तदा स व्यमृशत्—'अथवा परमार्थसरिदेवैषा । न खलूर्वशी पुरूरवसमपहाय समुद्राभिसारिणी भविष्यति । भवतु, अनिर्वेदप्राप्याणि श्रेयांसि । यावदमुं प्रदेशं गच्छामि यत्र मे नयनयोः सुनयना तिरोभूता ।'

स्तोकान्तरं व्रजित्वा कदम्बतरुमेकं वीक्ष्याऽऽनन्दतरङ्गा-न्तरमनुभवतस्तस्यैवमभून् मनसि—'हन्त, दृष्टमुपलक्षणं तस्या मार्गस्य—

'रक्तकदम्बः सोऽयं प्रियया घर्मान्तशंसि यस्यैकम् ।
कुसुममसमग्रकेसरविषममपि कृतं शिखाभरणम् ॥' ४३ ॥

अथ पुरूरवसो दृष्टिः शिलाभेदान्तर्गते कठोररक्ते कस्मिंश्चिद् वस्तुनि निपातिता । तदालोक्य स न्यध्यायत्—

'प्रभालेपी नायं हरिहतमृगस्याऽऽमिषलवः
स्फुलिङ्गः स्यादग्नेर्गहनमभिवृष्टं घनरिहम् ।'

ततो विभाव्य स आकलयत्—

'अये रक्ताशोकस्तबकसमरागो मणिरयं
यमुद्धर्तुं पूषा व्यवसित इवाऽऽलम्बितकरः ॥ ४४ ॥

हरति मे मनः। आदास्ये तावदेनम्। अथवा,

'मन्दारपुष्पैरधिवासितायां यस्याः शिखायामयमर्पणीयः।
सैव प्रिया संप्रति दुर्लभा मे किमेनमस्रोपहतं करोमि ॥' ४५ ॥

एतस्मिन्नेव काले गगने ध्वनिरश्रूयत—

'संगमनीय इति मणिः शैलसुताचरणरागयोनिरयम्।
आवहति धार्यमाणः संगममचिरात् प्रियजनेन ॥' ४६ ॥

तदाकर्ण्य पुरूरवसाऽध्यायि—'को नु खलु मामेवमनुशास्ति ?' पुनर्दिशो वलोक्य तेन ज्ञातम्—'अये ! अनुकम्पते मां कश्चिन् मृगचारी मुनिर्भगवान्।' ततो मणिमादाय स उवाच—'हंहो, संगमनीय !'

'तया वियुक्तस्य विलग्नमध्यया भविष्यसि त्वं यदि संगमाय मे।
ततः करिष्यामि भवन्तमात्मनः शिखामणिं बालमिवेन्दुमीश्वरः ॥' ४७ ॥

अथेदानीमुपान्तवर्तिन्या लतयाऽहारि तन्मनः। बलवद् विस्मितेन धरणिरमणेन भणितं स्वमनसि—'अये ! किं नु खलु कुसुमरहितामपि लतामिमां पश्यतो मे रतिरुपलब्धा। अथवा स्थाने मनोरमा ममेयम्। इयं हि,

'तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः
शून्येवाऽऽभरणैः स्वकालविरहाद् विश्रान्तपुष्पोद्गमा।
चिन्तामौनमिवाऽऽस्थिता मधुलिहां शब्दैर्विना लक्ष्यते
चण्डी मामवधूय पादपतितं जातानुतापेव सा ॥' ४८ ॥

'यावदस्याः प्रियानुकारिण्याः परिष्वङ्गप्रणयी भवामि'

लतामालिङ्ग्योर्वशीगात्रसंपर्कादिव परां निर्वृतिमाप पुरूरवाः। अथापि नाऽऽसीत् तस्य प्रत्ययः। तेनाऽशाङ्कि—

'समर्थये यत् प्रथमं प्रियां प्रति क्षणेन तन्मे परिवर्ततेऽन्यथा।
अतो विनिद्रे सहसा विलोचने करोमि न स्पर्शविभावितप्रियः॥'४१॥

भीतभीतः स यावच्छनैश्चक्षुषी उन्मीलयति तावत् तत्र तत्प्रसादं याचमाना सुरयुवतिरदृश्यत।

अवनिनाथेनान्वयोजि–'कथय, कथमियन्तं कालमवस्थिता मया विना भवती?'

उर्वशी प्रत्यब्रवीत्—'शृणोतु महाराजः। भगवता कुमारेण शाश्वतं कुमारव्रतं गृहीत्वाऽकलुषो नाम गन्धमादनकच्छोऽध्यासितः। कृतश्चैषविधिः, "याप्येतं प्रदेशं स्त्री प्रविशति सा लताभावेन परिणंस्यति, गौरीचरणरागसम्भवं मणिं विना ततो न मोक्ष्यते" इति। साऽहं गुरुशापसंमूढहृदया देवतासमयं विस्मृत्यागृहीतानुनया कुमारवनं प्रविष्टा। प्रवेशानन्तरमेव वासन्तीलता संवृत्ता।'

अथ राजा तं सङ्गममणिमुर्वश्या अदर्शयत्। साऽपि मणिमादाय सबहुमानं मूर्धन्युवाह। ततः सा क्षितिपतिमवदत्—'महान् खलु कालस्तव प्रतिष्ठानान् निर्गतस्य। असूयिष्यन्ति मह्यं प्रकृतयः। तदेहि निवर्तावहे। प्रस्तुत एष त्वदभिलाषमनुरुध्य विमानतां गमितो वारिवाहः।'

[ ५ ]

अथ चिरस्य कालस्योर्वशीसहायो नन्दनवनप्रमुखेषु देवतारण्येषु विहृत्य प्रतिष्ठानपुरं प्रतिनिवृत्तः पुरूरवाः। सत्कारोपचारैः प्रकृतिभिरनुरज्यमानः स स्वभुजे भुवो भार

मासससञ्ज। असन्तानत्वं वर्जयित्वा न तदाऽभूत्तस्य किमपि हीनम्।

अथ कदाचित् तिथिविशेषे भगवत्योः गङ्गायमुनयोः संभेदे राज्ञीभिः सह कृताभिषेकः चन्दनचर्चादिभिरलङ्क्रियमाण उपकार्यायामुपविष्टः स वहिः कोलाहलमश्रृणोत्, "दुकूलोत्तरच्छदे तालवृन्ताधारे निक्षिप्य नीयमानः कयाचिद् भृतिकया भूभृदभ्यन्तरविलासिनीमौलिरचनायोग्यो मणिरामिषशङ्किना गृध्रेणाऽऽक्षिप्तः।" तदाकर्ण्य राजा कञ्चुकी सूतो व्याधप्रभृतिरनल्पपरिजनश्च तत्र संनिपतितः। मुखकोटिलग्नहेमसूत्रेण मणिनाऽऽलिखन्निवाऽऽकाशं परिबभ्राम स विहगः। तं पश्यता राज्ञा धनुर्याचितं, परं यावत् तदानीयते तावत् बाणपथमतीतोऽसौ क्रव्यभोजनः। पतत्रिणा दूरं नीतोऽपि स मणिर्नक्तं परुषघनच्छेदसंयुक्तो लोहिताङ्ग इवाऽऽभाति स्म।

अथ राज्ञा 'सायं निवासवृक्षाश्रयी विचीयतां विहगदस्युः' इति नागरिकः समादिष्टः। तस्मिंश्च मणौ नृपतेर्न 'रत्नम्' इति प्रियत्वम्, परं 'तेन संगमनीयेन प्रियया संगमितः' इति तादृशः समादरः तस्य।

अथ केनापि कालेन सशरं मणिमादाय कञ्चुकी समाजगाम। राज्ञोऽद्भिः प्रक्षालितं मणिं प्रतिपादयता तेनाभिदधे—

'अनेन निर्भिन्नतनुः स बध्यो बलेन ते मार्गणतां गतेन।
प्राप्यापराधोचितमन्तरिक्षात् समौलिरत्नः पतितः पतत्री ॥' ५० ॥

पेटके मणिनिवेशनमादिशता महीभृता पृष्टम्—'लातव्य! अपि जानीते भवान् "कस्यायं बाणः" इति?'

कञ्चुकिनाऽभिहितम्—'नामाङ्कितो दृश्यते, न तु मे वर्णविचारक्षमा दृष्टिः ।'

राजा बाणमुपनाय्य नामाक्षराण्यनुवाचितवान् । तत्राङ्कितमभूत्—

'उर्वशीसंभवस्यायमैलसूनोर्धनुर्भृतः ।
कुमारस्याऽऽयुषो बाणः संहर्तुर्द्विषदायुषाम् ॥' २१ ॥

तद्विज्ञाय हृष्टो माणवकः सुतंगमं तं महीपतिं दिष्ट्या वर्धयामास । पुरूरवसस्तत्प्रसूतं सविशेषं विस्मयं 'प्रभावनिगूढानि दिव्याङ्गनाचरितानि' इति माणवकः समादधे ।

इदानीं च्यवनाश्रमात् कुमारं गृहीत्वा तापसी संप्राप्ता । तं विलोक्य माणवकेनाऽवभाषे—'किं नु खलु स एष तत्र भवान् क्षत्रियकुमारको यस्य नामाङ्कितो गृध्रलक्ष्यवेध्यर्धनाराचः ? तथा बहुतरं भवन्तमनुकरोति ।'

तस्मिन् दृष्टमात्रे परां तृप्तिमुपगते क्षितिभृतश्चक्षुषी । वात्सल्यानुबन्धी च बभूव तदन्तरात्मा ।

प्रतिगृहीतसपर्या तापसी राजानमुवाच—'महाभाग ! सोमवंशविस्तारयिता भव । एष दीर्घायुरायुर्जातमात्र एवोर्वश्या किमपि निमित्तमपेक्ष्य मम हस्ते न्यासीकृतः । अस्य जातकर्मादिविधानं तत्र भवता च्यवनेनाशेषमनुष्ठितम् । गृहीतविद्यो धनुर्वेदेऽभिविनीतः । अद्य पुष्पकुशसमिदर्थमृषिकुमारकैः सह गतेनानेनाऽऽश्रमपादपशिखरे निलीयमानो गृहीतामिषः किल गृध्रो लक्ष्यीकृतः बाणस्य । आश्रमधर्मविरुद्धं खल्वेतदाचरणम् । ततश्चोपलब्धवृत्तान्तेन भगवता च्यवनेनाहं समादिष्टा, "हस्तन्यासं निर्यातय" इति ।

तदिच्छामि देवीमुर्वशीं द्रष्टुम् ।'

पुरूरवा उर्वशीमाह्वयत् । सुतं च परिष्वज्यान्तिकमुपावेशयत् । उर्वश्या दूरादेव महाराजस्य सविधमुपविष्टः कुमार आयुर्दृष्टः । अन्तिकमुपेतायामुर्वश्यां कुमारेण मातुरभिवादनं कृतम् । उर्वश्याऽपि तापस्याः पादप्रणामो विहितः । तापस्या राज्ञः पुरूरवसः समक्षं निर्यातितो हस्तनिक्षेपः । ततश्चात्मानं विसर्जयितुं विज्ञापितोर्वशी । तया विसृष्टा च सा प्रययौ ।

यत् सत्यं भूवल्लभस्याभ्युदयः सीमानमतिक्रान्तः । स पुत्रवतीं तामभिनन्दन्नुवाच—'कल्याणि !

अद्याहं पुत्रिणामग्रयः सत्पुत्रेणामुना तव ।
पौलोमीसंभवेनेव जयन्तेन पुरन्दरः ॥' ४२ ॥

एतच्छ्रुत्वोर्वशी परिदिदेव । विस्मयमुपगतेन राज्ञा सावेगमभिहितम्—'उपपन्ने मम महति प्रमोदे त्वं कथं प्ररुदिताऽसि?'

उर्वशी प्रत्युवाच—'शृणोतु महाराजः । प्रथमं पुनः पुत्रदर्शनेन विस्मृताऽस्मि । इदानीं तु महेन्द्रसंकीर्तनेन समयो मम हृदयमायासयति ।'

राज्ञोक्तम्—'कथ्यतां समयः ।'

उर्वश्याऽऽचचक्षे—'अहं पुरा महाराजगृहीतहृदया गुरुणा भरतेनाभिशप्ता सती सानुक्रोशेन महेन्द्रेण समयं विधाय शापं निवर्तयताऽनुगृहीतास्मि । तद्यथा "यदैष मम प्रियसखो राजर्षिस्त्वयि समुत्पन्नस्य वंशकरस्य मुखं द्रक्ष्यति तदा त्वया भूयोऽपि मम समीपमागन्तव्यम्" इति । ततो मया महाराजवियोगभीरुतया जातमात्र एव विद्यागमनिमित्तं

भगवतश्च्यवनस्याऽऽश्रमपदे आर्यायाः सत्यवत्या हस्तेऽप्रकाशं निक्षिप्तः। अद्य पितुराराधनसमर्थः संवृत्त इति कलयन्त्या निर्यातितो मे दीर्घायुः। तदेतावान् मे महाराजेन सह संवासः।'

तदाकर्ण्य राजा सनिःश्वासमाह स्म—'अहो सुखप्रत्यर्थिता दैवस्य!

आश्वासितस्य मम नाम सुतोपलब्ध्या
सद्यस्त्वया सह कृशोदरि! विप्रयोगः।
व्यावर्तितातपरुजः प्रथमाभ्रवृष्टया
वृक्षस्य वैद्युत इवाग्निरुपस्थितोऽयम्॥ ५३॥

न हि सुलभवियोगा कर्तुमात्मप्रियाणि
प्रभवति परवत्ता शासने तिष्ठ भर्तुः।
अहमपि तव सूनावायुषि न्यस्तराज्यो
विचरितमृगयूथान्याश्रयिष्ये वनानि॥'५४॥

आयुरप्येकेनैव दिवसेन तानि तानि चित्राणि जगतीतल-चरित्रवैचित्र्यचित्रकाणि दशापरिवर्तनानि वीक्षमाणोऽति-मात्रं विस्मितो व्याजहार—'नार्हति तातः पुंगवधारितायां धुरि दम्यं नियोजयितुम्।'

'अयि वत्स, मा मैवम्। गन्धद्विपः कलभोऽपि सन् महतो गजान् शमयति ननु' इत्युक्तवता राज्ञा आयुषो-ऽभिषेकसंभारार्थमाज्ञप्ता मन्त्रिपरिषत्।

अथैतर्हि निरभ्रेऽप्याकाशे विद्युत्संपात इवादृश्यत। 'पतत्यधो धाम विसारि सर्वतः किमेतत्' इति जनैराकुल-मीक्षितः क्रमाद् विभक्तावयवो नारदस्तत्राऽऽविरासीत्।

शनैः शनैः स राज्ञोऽन्तिकमवतीर्णः । राजदम्पती नारदं यथाविधि समानर्चतुः । भगवान् नारद आशशासे—'अविरहितौ दम्पती भूयास्ताम् !'

मध्यमलोकपालश्चैतस्यतर्कयत्—'अपि नामैवं स्यात् ?'

ततः सबहुमानमुपवेशितो नारदः सर्वेष्वनूपविशत्स्वेवमुवाच—'राजन् ! प्रभावदर्शी मघवा वनगमनाय कृतबुद्धिं भवन्तमनुशास्ति "त्रिकालदर्शिभिर्मुनिभिरादिष्टः सुरासुरसंगरो भावी । भवांश्च सांयुगीनः सहायो नः । तेन त्वया न शस्त्रं संन्यसितव्यम् । इयं चोर्वशी यावदायुस्तव सहधर्मचारिणी भवतु" इति ।'

महेन्द्रस्य कृतज्ञतां वदति सर्वोऽपि जनः । दुःखं सुखेन परिणतम् । नारदः स्वयं सर्वमभिषेकविधिं संपादयामास । भगवन्तं प्रणम्य पितरौ चाभिवाद्योर्वशीपुरूरवोभ्यां पुरस्कृतः कुमार आयुरौशीनरीं सभाजयितुमुर्वशीकथनात् प्रयातः । सर्वतः सुखमिव ववर्ष । भगवान् नारदोऽपि स्वं विधेयमनुष्ठाय प्रतिनिवृत्तः ।

—:o:—

# प्रियदर्शिका

[१]

बभूव किलाङ्गेषु दृढवर्मा नाम राजा। स स्वदुहितरं प्रियदर्शिकां कलिङ्गकान्तेन प्रार्थ्यमानामपि वत्साधिपतय उदयनाय दत्तवान्। एवं बद्धानुशयः, 'वत्सवल्लभो बन्धनान् न निवर्तते' इति च लब्धरन्ध्रः कलिङ्गराजोऽङ्गस्वामिनं सहसाऽभियुयोज। एकान्तनिष्ठुरमभूद् दैवं दृढवर्मणि। तस्य कञ्चुकी विनयवसुः 'यथाकथंचिदेनां वत्सराजायोपनीय स्वामिनमनृणं करिष्यामि' इति मत्वा राजपुत्रीं तादृशात् प्रलयकालदारुणादवस्कन्दसंभ्रमादपवाह्य स्वभर्तुर्मित्रभावान्वितस्य नृपतेर्विन्ध्यकेतोर्गृहे स्थापितवान्।

अथ नातिदूरमिति स्नानायागस्त्यतीर्थं गते विनयवसौ क्षणात् कैरपि निपत्य हतो विन्ध्यकेतुः। नृशंसैररातिभी रक्षोभिरिव निर्मानुषीकृतं दग्धं चाविकलं स्थानम्। प्रतिनिवृत्य कञ्चुकिना निपुणं विचित्यापि नोपलब्धा काऽपि राजदारिकायाः प्रवृत्तिः।

अथो 'बन्धनात् परिभ्रष्टः प्रद्योततनयामपहृत्य वत्सराजः कौशाम्बीमागतः' इति स्मृतिरभूद् विनयवसोः। 'किं तत्रैव गच्छामि?' इति विकल्पस्तस्य हृदि क्षणं स्थितिमलभत। तत आत्मनोऽवस्थां पश्यता तेन निःश्वस्य तर्कितम्—'किमिव हि राजपुत्र्या विना तत्र गत्वा कथयिष्यामि?' अनन्तरञ्च

विन्ध्यकेतुप्रोक्तं "महाराजदृढवर्मा जीवति बद्धश्च तिष्ठति" इति स्मृत्वाऽसौ कारायां पातितं गाढप्रहारजर्जरीकृतं स्वस्वामिनं गत्वा पादपरिचर्यया जीवितशेषमात्मनः सफलयितुं निश्चिकाय।

अन्यतश्च चारकात् पलायितो वत्सेश्वरः सह वासवदत्तयाऽवन्तिकायाः कौशाम्बीमासाद्य सुतरां जहर्ष। सम्प्रति कारावासनिर्वासितिरपि सूदर्का तस्य भाति। विचक्षणस्य तस्याभूद् तदाऽयं विलक्षण उन्नयः,

'भृत्यानामविकारिता परिगता दृष्टा मतिर्मन्त्रिणां
मित्राण्यप्युपलक्षितानि विदितः पौरानुरागोऽधिकम्।
निर्व्यूढा रणसाहसव्यसनिता स्त्रीरत्नमासादितं
निर्व्याजादिव धर्मतः किमिव न प्राप्तं मया बन्धनात्॥'१॥

सङ्गत्यन्तरकुशलो वसन्तकोऽवदत्—'भो वयस्य! यदि तावद्बन्धनं सुखनिबन्धनं भवति तत्कस्मात्त्वं "दृढवर्मा बद्धः" इति कलिङ्गराजस्योपरि रोषं बध्नासि?'

वत्सेश्वरः सहासमूचे—'धिङ्मूर्ख! न खलु सर्वो वत्सराजो य एवं वासवदत्तामवाप्य बन्धनान्निर्यास्यति। तदास्तां तावदियं कथा। विन्ध्यकेतोरुपरि बह्वन्यहानि विजयसेनस्य प्रेषितस्य। न तत्सकाशात्कश्चिदागतः। तदाहूयतां तावदमात्यो रुमण्वान्।

इदानीं दैवाद् रुमण्वद्विजयसेनौ समुपेतौ। अथावसितेऽभिवादनविधौ विन्ध्यकेतुवृत्तं प्रजेश्वरेण पृष्टो विजयसेनः।

विजयसेनोऽब्रवीत्—'देव! श्रूयताम्। इतो वयं देवपादादेशाद् यथादिष्टेन करितुरगपदातिसैन्येन महान्तमप्यध्वानं दिवसत्रयेणोल्लङ्घ्य प्रभातवेलायामतर्किता एव विन्ध्य-

केतोरुपरि निपतिताः स्मः। ततो सोऽपि प्रतिबुद्धः केसरीव विन्ध्यकन्दरान्निर्गत्य विन्ध्यकेतुरनपेक्षितबलवाहनो यथासन्निहितकतिपयसहायोऽस्मानभियोद्धुं प्रवृत्तः।'

राज्ञा भणितम्—'साधु समाचरितं विन्ध्यकेतुना। ततस्ततः?'

विजयसेन उवाच—'ततो द्विगुणतरवद्धमत्सरोत्साहैरस्माभिर्महता विमर्देन क्षणादेव निःशेषितसहायः समेधितबलक्रोधवेग एक एव स दारुणतरं संप्रहारमकरोत्। यदा च तस्य सर्वः प्रहरणनिवहः परिसमाप्तस्तदाऽसौ खड्गहस्त एव करिकरकदलीकाननच्छेदलीलां कर्तुं प्रवृत्तः।

एवं बलत्रितयमाकुलमेक एव
कुर्वन् कृपाणकिरणच्छुरितांसकूटः।
शस्त्रप्रहारशतजर्जरितोरुवक्षाः
श्रान्तश्चिराद् विनिहतो युधि विन्ध्यकतेुः॥ २॥

राजोवाच—'रुमण्वन्! खलु सत्पुरुषोचितमार्गमनुगच्छतो यत् सत्यं विन्ध्यकेतोर्मरणेन व्रीडिता एव वयम्। विजयसेन! अप्यस्ति विन्ध्यकेतोरपत्यं यत्रास्य परितोषस्य फलं दर्शयामि?'

तेनोक्तम्—'देव! इदमपि विज्ञापयामि। एवं सबन्धुपरिवारे हते विन्ध्यकेतौ तमनुसृतासु सहधर्मचारिणीषु विन्ध्यशिखराश्रितेषु जनपदेषु शून्यीभूते तत्स्थाने "हा तात! हा मातः!" इति कृतकृपणप्रलापा विन्ध्यकेतोर्वेश्मनि कन्यकैका दृष्टिपथमवतीर्णा। सा च राजदारिकेत्यस्माभिरानीता द्वारि तिष्ठति। तां प्रति देवः प्रमाणम्।'

राज्ञा सा राजकुमारी वासवदत्तायाः सविधे 'भगिनी-बुद्ध्यैव त्वया सर्वदा द्रष्टव्यैषा। गीतनृत्तवाद्यादिषु विशिष्ट-कन्यकोचितं सर्वं शिक्षयितव्या। यदा वरयोग्या भविष्यति तदा मां स्मारय' इति संदिश्य प्रेषिता। भगवता सहस्र-दीधितिना नभोमध्यमध्यास्यमानं विलोक्य व्यसृज्यत सभा वत्साधिपेन।

[ २ ]

अथ कदाचिद् वासवदत्ता कमपि व्रतमनुष्ठितवती। तया स्वस्तिवाचननिमित्तं वसन्तकः शब्दायितः। गमनात् प्राग् वसन्तको धारागृहोद्यानदीर्घिकायां स्नातुमयात्। तत्र गच्छन्तमुदयनो मार्गे मिलितः। स वसन्तकं तत्प्रसत्त्यति-शयकारणं पृष्टवान्।

वसन्तकोऽब्रवीत्—'अर्चति खलु देवी ब्राह्मणम्। चतु-र्वेदपञ्चवेदषड्वेदब्राह्मणसहस्रपर्याकुले राजकुले प्रथममहमेव देवीसकाशात्स्वस्तिवाचनं लभे।'

तन्निशम्य विहसन् पृथिवीपतिः प्रतियोजितवान्—'वेद-संख्ययैवाऽवेदितं ब्राह्मण्यम्। तदागच्छ महाब्राह्मण! धारा-गृहोद्यानमेव गच्छावः।'

उभौ धारागृहोद्यानं प्रस्थितौ। तत्र समासाद्य तौ धारागृहोद्यानस्य मनोहारिणीं सश्रीकतां विलोकयन्तावा-त्मानं विनोदयितुं प्रचक्रमाते।

अथो इन्दीवरिका नाम चेटी तत्र समागता। अभूत्सा खलु वासवदत्तयाऽऽज्ञप्ता यथा 'हञ्जे इन्दीवरिके! अद्य मया ऽगस्त्यमहर्षयेऽर्घो दातव्यः। तद्गच्छ त्वम्। शेफालिका-

कुसुममालां लघु गृहीत्वाऽऽगच्छ' इति । तदानीमेवाऽऽरण्यिकाऽप्यादिष्टाऽभूद् 'धारागृहोद्यानदीर्घिकाया यावदेव विकसितनानि कमलानि नास्ताभिलाषिणा सूर्येण मुकुलाय्यन्ते तावदेव लब्ववचित्याऽगच्छ' इति । आरण्यिका तपस्विनी तां दीर्घिकां नाजानात् । अतो द्वे अपि सहैव तत्र प्रस्थिते ।

उद्विग्नेवाऽऽसीत् तदारण्यिका । सा सबाष्पोद्वेगमेवमचिन्तयत्—तथा नाम तादृशे वंश उत्पन्नयाऽन्यजनमाज्ञाप्य स्थितया, साम्प्रतं परस्य मयाऽऽज्ञप्तिः कर्तव्येति, नास्ति खलु दुष्करं दैवस्य । अथवा ममैवेष दोषो येन जानन्त्याऽपि न व्यापादित आत्मा । तत्किं साम्प्रतं करिष्यामि ? वरमेवैतदपि । यन्न पुनरात्मनो महार्घं वंशं प्रकाशयन्त्या मया लघूकृत आत्मा । तत्का गतिः ? यथाभणितमनुष्ठास्यामि ।'

दीर्घिकाभूमिमुपेतयोरेवोदयनवसन्तकयोर्दृष्टिर्दैवादारण्यिकायां निपतिता । तामवलोक्य वसन्तक उवाच—'भोः वयस्य ! कैषा ? यस्याः कुसुमपरिमलसुगन्धां वेणीमभितो मधुकरावलिर्गुञ्जति । यत्सत्यं प्रत्यक्षचरीवोद्यानदेवता विचरति ।'

राजा ततो विलोकयन्नपि न तां प्रत्यभिजज्ञौ । तस्याः निरतिशयस्वरूपशोभे तस्य हृदयमाजह्रतुः ।

निर्वर्णयन् वसन्तकस्तदुपकण्ठत इन्दीवरिकामपश्यत् । सवयस्यो भूपतिर्गुल्मान्तरितोभूत्वा तयोरालापं श्रोतुं प्रस्तुतः ।

स्वसखीं 'आरण्यिके अवचिनु त्वं पद्मानि' इत्यभिधायेन्दीवरिका शेफालिकाकुसुमान्यवचेतुं गन्तुं प्रचक्रमे । परमारण्यिकयाऽभिहितम्—'हलेन्दीवरिके ! न शक्नोमि त्वया विना

मुहूर्तमप्यत्रासितुम् ।'

विहस्येन्दीवरिकाऽब्रवीत्–'यादृशमद्य मया देव्या मन्त्रितं श्रुतं तादृशेन चिरमेव मया विना त्वयाऽऽसितव्यम् ।'

आरण्यिकयाऽनुयुयुजे—' किं देव्या मन्त्रितम् ? '

इन्दीवरिका ललाप—' एतत् । " तदैषाऽहं महाराजेन भणिता यथा—यदैषा विन्ध्यकेतोर्दुहिता वरयोग्या भविष्यति तदाऽहं स्मारयितव्यः—इति । तत्साम्प्रतं महाराजं स्मारयामि येनास्या वरचिन्तापर्याकुलो भविष्यति " '

अनेन वचनेन सा विन्ध्यकेतोर्दुहिता इति विज्ञायोदयनो हर्षनिर्भरं वसन्तकमुवाच—'वयस्य ! निर्दोषदर्शना कन्यका खल्वियम् । विश्रब्धमिदानीं पश्यामः ।'

ततस्तु आरण्यिका कर्णौ पिधाय सरोषं बभाषे—'तद्गच्छ त्वम् । न मम त्वयाऽसम्बद्धप्रलापिन्या प्रयोजनम् ।'

पुष्पाण्यवचेतुमिन्दीवरिका एकतोऽपसृता । आरण्यिकाऽपि कमलावचयं कर्तुं प्राक्रमत । परं विधुतेष्वेवारविन्देषु तत्रोपविष्टैर्मकरन्दास्वादनपरैश्चञ्चरीकैः सा परित आक्रान्ता । एवमायासिता सा तपस्विन्युत्तरीयेणमुखं पिधाय सभयमिन्दीवरिकामात्मपरित्राणार्थमाकारयितुं व्यवसिता ।

अनुरूपमवसरं वीक्ष्य वसन्तको वसुधाधिपं तूष्णींभावेन तत्रोपसर्प्तुं मन्त्रयाम्बभूवे । स यदा तत्र प्राप्तस्तदा तमिन्दीवरिकां बुध्यन्त्यारण्यिका वसुमतीशं परिषस्वजे । उदयनोऽपि सस्नेहं स्वहस्तं तस्याः ग्रीवायां व्यापारयन् स्वीयेनोत्तरीयेण भ्रमरांश्च निवारयन्नुवाच—

' अयि विसृज विषादं भीरु ! भृङ्गास्तवैते

परिमलरसलुब्धा वक्त्रपद्मे पतन्ति ।
विकिरसि यदि भूयस्त्रासलोलायताक्षी
कुवलयवनलक्ष्मीं तत्कुतस्त्वां त्यजन्ति ॥' ३ ॥

असंस्तुतं स्वरं निशम्य साध्वसमुपगताऽऽरण्यिका सहसा महीपतिं त्यक्त्वाऽपससार । आत्मसमक्षं चापरिचितं पुरुषं पश्यन्ती सा पुन इन्दीवरिकामाकारयितुं प्राक्रमत ।

वसन्तकेनाभिहितम्—'भवति ! सकलपृथ्वीपरित्राण-समर्थेन वत्सराजेन परित्रायमाणा चेटीमिन्दीवरिकामाक्रन्दसि नरनाथोऽपि 'अयि विसृज०' इत्यादि पुनरुदीरयामास ।

अथ तं परमार्थतोऽवगम्य सस्पृहमवलोकयन्त्याः सव्रीडाया आरण्यिकाया एवमभून् मनसि—'अयं खलु स महाराजो यस्याहं तातेन दत्ता । स्थाने खलु तातस्य पक्षपातः ।'

आरण्यिकाया क्रन्दनमाकर्ण्येन्दीवरिकयोच्चैरुदाजह्रे—'आरण्यिके ! मा बिभिहि । एषोपगतास्मि ।'

अथ तामुपयातां विज्ञाय पुनर्न्यलीयत प्रजेशः । अन्यथा तु दासीमुखेन सर्वं उदन्तो वासवदत्ताया विदितो भवेदेव ।

अथेन्दीवरिका तामादाय प्रतिनिवृत्ता । परिणतप्रायोऽवर्तिष्ट दिवसः । राजाऽपि तामेव ध्यायन् वसन्तकद्वितीयो प्रासादमभिप्रतस्थे ।

[ ३ ]

समादिश्यत मनोरमा वासवदत्तया यथा—' हञ्जे मनोरमे ! यः स साङ्कृत्यायन्याऽऽर्यपुत्रस्य मम च वृत्तान्तो नाटकोपनिबद्धस्तस्य नर्तितव्यशेषमद्य युष्माभिः कौमुदीमहोत्सवे नर्तितव्यम्' इति । मनोरमाऽचिन्तयद्—' ह्यः खल्वारण्यिकया

प्रियसख्या शून्यहृदययाऽन्यथैव नर्तितम्। अद्य पुनर्वासवदत्ताभूमिकया तया यदि तथा क्रियते ततोऽवश्यं देवी कुप्यति। तत् कुत्र तावत् तां प्रेक्ष्योपालप्स्ये।'

अथ सा दीर्घिकातीरे कदलीगृहं प्रविशन्तीमात्मनैव किमपि किमपि मन्त्रयमाणामारण्यिकामपश्यत्। साऽपि गुल्मान्तरिता भूत्वा तस्या विश्रब्धजल्पितानि श्रोतुमारब्धा।

आरण्यिका दीर्घं निःश्वसन्ती कथयति स्म—'हृदय! दुर्लभजनं प्रार्थयमानं त्वं कस्मान्मां दुःखितां करोषि?' ततः सा सास्रं जल्पति—'कथं तथा नाम सौम्यदर्शनो भूत्वा महाराज एवं सन्तापयति माम्?' भूयोऽपि निःश्वस्य साऽकल्पयत्—'अथवा ममैवैषाऽभागधेयता। न पुनर्महाराजस्य दोषः। कस्मै तावदेतं वृत्तान्तं निवेद्य सह्यवेदनमिव दुःखं करिष्यामि।' भृशं विमृश्य तस्या स्फुरितम्—'अस्ति मे हृदयनिर्विशेषा प्रियसखी मनोरमा। तस्या अप्येतल्लज्जया न पारयामि कथयितुम्। सर्वथा मरणं वर्जयित्वा कुतो मे हृदयस्यान्या निर्वृतिः। अयं स उद्देशो यस्मिन् मधुकरैरायास्यमानाऽवलम्ब्य समाश्वासितास्मि "भीरु! मा बिभिहि" इति।'

'एषा दृष्टा महाराजेन' इत्यवेत्य सुतरां जहर्ष मनोरमा। साऽचिन्तयत्—'सर्वथाऽस्त्यस्या जीवितस्योपायः। यावदुपसृत्य समाश्वासयाम्येनाम्।' अथ सहसोपसृत्य साऽऽरण्यिकामभणत्—'युक्तं नाम हृदयस्यापि लज्जितुम्।'

सत्रपा समजायत साम्प्रत्यारण्यिका। सा मनस्यचिन्तयत्–'हा धिक्! हा धिक्!! सर्वं श्रुतमेतया। तदत्र युक्तमेव

प्रकाशयितुम् ।' अथ सा मनोरमामामन्त्रयत्—'प्रियसखि! मा कुप्य मा कुप्य । लज्जैवात्रापराध्यति ।'

तां समाश्वासयन्त्या मनोरमया निजगदे—'दृष्टाऽसि खलु त्वं महाराजेन । तदलं सन्तापितेन । स एवेदानीं दर्शनोपाय-पर्याकुलो भविष्यति ।'

एवमालपन्त्योरेव तयोर्वसन्तकस्तत्राऽऽयान्नदृश्यत । स खलु व्रजन्नात्मना प्रलपति स्म—'अतिमहान् खलु प्रियवयस्य-स्याऽऽरण्यिकाया उपर्यनुरागो येन परित्यक्तराजकार्यस्तस्या एव दर्शनोपायं चिन्तयन्नात्मानं विनोदयति ।'

तं वीक्ष्य प्रसेदतुरारण्यिकामनोरमे । तमारण्यिकामुद्दिश्य प्रलपन्तं विज्ञाय ते तूष्णीं भूत्वा तस्याऽऽलापं श्रोतुं प्रवृत्ते ।

वसन्तकेन पुनर्वक्तुमुपक्रान्तम्—'यदा तावन्मया प्रिय-वयस्यस्य वचनेन देव्योर्वासवदत्तापद्मावत्योरन्यासां च देवीनां भवनान्यन्विष्यता न सा दृष्टा तदा "यत्र दीर्घिकायां दृष्टा, तदपि तावत्प्रेक्षिष्ये" इति विचिन्त्यात्रागतोऽस्मि । तद्यावदिहापि नास्ति । किमिदानीं करिष्ये ?'

मनोरमया निगदितम्—'श्रुतं प्रियसख्या ?'

वसन्तकः पुनरपि प्रचक्रमे—'अथवा भणित एवाहं वय-स्येन "यदि तामन्विष्यन्न प्रेक्षसे तत्ततोऽपि तावद्दीर्घिकात-स्तस्याः करतलस्पर्शेन द्विगुणितसुखशीतलानि नलिनीपत्राणि गृहीत्वाऽऽगच्छ" इति । तत्कथमेतानि ज्ञातव्यानि ?'

एवं विदितोऽभूत् तयोरुदयनानुरागः । मनोरमा तमुपसृत्य हस्ते गृहीत्वा व्याजहार—'वसन्तक ! एहि । अहं ते ज्ञापयामि ।'

वसन्तकः सभयमुवाच—'कस्य त्वं ज्ञापयसि ? किं देव्याः ? न खलु मया किमपि मन्त्रितम् ।'

मनोरमयाऽब्रूयत—' वसन्तक ! अलं शङ्कया । यादृश्यऽऽरण्यिकायाः कृत आत्मनः प्रियवयस्यस्यावस्था त्वया वर्णिता ततो द्विगुणतरा भर्तुरपि कृते मम प्रियसख्या अवस्था । तत्पश्य पश्य ।'

ततस्तयोपसृत्याऽऽरण्यिका दर्शिता । वसन्तकस्तां वीक्ष्य सहर्षमुवाच—'सफलो मे परिश्रमः । अथ कथय समागमोपायम् ।'

क्षणं विचिन्त्य मनोरमा वसन्तकस्य कर्णे किमप्याचख्यौ । तेन प्रहृष्टो वसन्तकोऽपवार्य तामुदाजहार—'यावदेव युवां नेपथ्यग्रहणं कुरुथस्तावदेवाहमपि वयस्यं गृहीत्वाऽऽगच्छामि ।'

अथ प्रयाते वसन्तक आरण्यिकासहाया मनोरमाऽपि प्रेक्षागृहं प्रस्थिता ।

सपरिवारा महिषी साङ्कृत्यायनी चाप्युपस्थिते । तया राजाङ्गनया स्वाङ्गपिनद्धान्याभरणानि उन्मुच्याऽऽरण्यिकाया आत्मानं प्रसाधयितुं दत्तानि मनोरमा चाभिहिता—'मनोरमे ! त्वमपि नलगिरिग्रहणपरितुष्टेन तातेनाऽऽर्यपुत्रस्य दत्तान्याभरणानीन्दीवरिकासकाशाद् गृहीत्वा नेपथ्यभूमिं गत्वाऽऽत्मानं मण्डय येन सुसदृशी दृश्यसे महाराजस्य ।'

अथ मनोरमा प्रेक्षागृहं प्रविष्टा । स्तोकेनैव च कालेन प्रवृत्ता प्रेक्षा ।

अथ वीणाहस्तया काञ्चनमालयाऽनुगम्यमाना वासवदत्ता गन्धर्वशालां प्रविष्टा । ते च वीणाचार्यमुदयनं प्रतीक्षितुं प्रवृत्ते ।

यदा च मनोरमा तत्रोदयनवर्णिका परिग्राह्याऽऽसीत् तदोदयनस्तत्र न प्राप्तः। मनोरमा तं प्रतीक्षते स्म। सा व्यचिन्तयत्—'चिरयति खलु महाराजः। किं न कथितं वसन्तकेन? अथवा देव्या बिभेति।'

एतावता वसन्तकद्वितीयः संप्राप्तस्तत्र राजा। मनोरमा स्वाङ्गादाभरणान्यवतार्य राजानं पर्यधापयत्।

वसन्तकः सपरिहासमुवाच—'एते खलु राजानो दास्याऽप्येवं नर्त्यन्ते।'

स्मितं विधाय भूपतिर्बभाषे—'मूर्ख! नैष कालः परिहासस्य। निभृतेन प्रविश्य मनोरमया सहास्मन्नृत्तं पश्यता स्थीयताम्।'

उभाभ्यां यथानिर्दिष्टं विहितम्। उदयनोऽपि 'कतमोऽयमुद्देशो वर्तते' इति श्रोतुमवदधे।

काञ्चनमालयाऽभिहितम्—'पृच्छतु भर्तृदारिका।'

आरण्यकाऽब्रवीत्—'सत्यमेव तातो मन्त्रयते एवं यथा "यदि वीणां वादयन्नपहरति मा वत्सराजोऽवश्यं बन्धनान्मुञ्चामि" इति?'

तदाकर्ण्य राजा पटाक्षेपेण प्रविश्य सहर्षं व्याहार्षीत्—'एवमेतत्। कः सन्देहः।

सपरिजनं प्रद्योतं विस्मयमुपनीय वादयन् वीणाम्।
वासवदत्तामपहरामि न चिरादेवेति पश्यामि ॥ ४ ॥

यतः सुसंविहितं सर्वं यौगन्धरायणेन।'

उदयनमवलोक्य सहसोत्तस्थौ वासवदत्ता। सा तस्य जयशब्दमुदैरयत्। 'कथम्, प्रत्यभिज्ञातोऽस्मि देव्या?' इति

संशय उदयनचेतसि समुत्थितः। तदा साङ्कृत्यायन्या सस्मितमभिहितम्—'राजपुत्रि! अलमलं सम्भ्रमेण। प्रेक्षणीयकमेतत्।'

विगतविकल्प इदानीमुच्छ्वासितः क्षितिपतिः। वासवदत्तयाऽप्युपविश्य सविलक्षस्मितमभिदधे—'कथं मनोरमैषा? मया पुनर्ज्ञातमार्यपुत्र एष इति। साधु मनोरमे! साधु। शोभनं नर्तितम्।'

आरण्यिकया भणितम्—'काञ्चनमाले! कथय कथय। ननु सत्यमेव मन्त्रयते तातो "यदि वीणां वादयन्नपहरति मां वत्सराजस्ततोऽवश्यं बन्धनान्मुञ्चामि" इति?'

काञ्चनमाला प्रत्यब्रवीत्—'भर्तृदारिके! सत्यम्। तथा कुरु यथा वत्सराजस्यावश्यं बहुमता भवसि।'

हर्षपूरप्लावितचित्तो विशांपतिरालोचयत्–'निष्पादितमेव काञ्चनमालया यत्तदाऽस्माभिरभिलषितम्।' अथारण्यिका गायन्ती वीणां वादयितुमुपक्रान्ता।

'घनबन्धनसंरुद्धं गगनं दृष्ट्वा मानसं समेतुम्।
अभिलषति राजहंसो दयितां गृहीत्वाऽऽत्मनो वसतिम्॥' १॥

तदा मनोरमा सुप्तं वसन्तकं प्रबोधयन्त्यारण्यिकाया अभिनयं द्रष्टुं प्रणुनोद। स तु सरोषमाशशंस—'दास्याः सुते! त्वमपि न ददासि स्वप्तुम्। यदा प्रभृति प्रियवयस्येनाऽऽरण्यिका दृष्टा तदा प्रभृति तेन सह मया रात्रिंदिवा निद्रा न दृष्टा। तदन्यतो निष्क्रम्य स्वप्स्यामि।'

आरण्यिकया पुनर्गीतम्—

'अभिनवरागाक्षिप्ता मधुकरिका वामकेन कामेन।

उत्ताम्यति प्रार्थयमाना द्रष्टुं प्रियदर्शनं दयितम् ॥' ६ ॥

तच्छ्रुत्वा सहसोपसृत्य श्लाघमानो नरेशो मन्त्रयामास–'अहो ! साधु राजपुत्रि ! साधु । अहो गीतमहो वादित्रम् ।'

वीणां परिष्वज्याऽऽसनादुत्थायाऽऽरण्यिका साभिलाषं निर्वर्णयन्ती धरणिरमणं प्रणनाम ।

रसापतिः सस्मितं शशंस–'यदहमिच्छामि तत्ते भूयात् ।'

आरण्यिकाया आसनं वसुमतीशस्य निर्दिशन्ती काञ्चनमाला तमुवाच—'इहैवोपविशतु उपाध्यायः ।'

तत उपविश्य धराधवेनाभिदधे—'राजपुत्री क्वेदानीमुपविशतु ?'

काञ्चनमाला सस्मितमब्रवीत्—'इदानीमेव भर्तृदारिका विद्यामानेन परितोषिता युष्माभिः । तदर्हत्येवैषोपाध्यायपीठिकायाः ।'

यदा च वसुधाधिपोऽर्धासनमध्यासितुमारण्यिकामभणत् तदा सा काञ्चनमालां प्रत्यवलोकयाञ्चकार । सस्मितया काञ्चनमालयाऽभिहितम्–'भर्तृदारिके, उपविश । कोऽत्र दोषः ?'

तदाकर्ण्याऽऽरण्यिका सलज्जमुपविष्टा ।

अथ व्रीडितया वासवदत्तया साङ्कृत्यायनी भणिता—'भगवत्याऽधिकं कल्पितं काव्यम् । न खल्वहं तस्मिन् काल एकासन आर्यपुत्रेण सहोपविष्टा ।'

राज्ञा भूयोऽपि वीणां वादयितुमाख्याताऽऽरण्यिका । साऽपि स्मितं कृत्वा काञ्चनमालामवोचत्–'चिरं खलु मम वादयन्त्याः परिश्रमो जातः । तन्न शक्नोम्यधिकं वादयितुम् ।'

काञ्चनमालाऽवनिपतये न्यवेदयत्—'उपाध्याय ! सुष्ठु

परिश्रान्ता भर्तृदारिका। कपोलतलबद्धस्वेदलवायाः पश्यास्याः वेपेते अग्रहस्तौ। तत्समाश्वस्ता भवतु मुहूर्तम्।'

राजाऽब्रवीत्—'काञ्चनमाले! युक्तमभिहितम्।'

इति व्याहृत्य धरणीन्द्र आरण्यिकां हस्तेन ग्रहीतु मैच्छत्, परमपसारितस्तया हि हस्तः।

असूययाऽऽविष्टा वासवदत्ताऽब्रवीत्—'भगवति! अधिकमेतदपि त्वया कृतम्। न खल्वहं काञ्चनमाला काव्येन वञ्चयितव्या।'

साङ्कृत्यायनी विहस्योवाच—'आयुष्मति। ईदृशमेव काव्यं भविष्यति।'

ततश्चाऽऽरण्यिका सरोषं काञ्चनमालामुदाहृतवती—'अपेहि काञ्चनमाले! अपेहि। न मे बहुमतासि।'

काञ्चनमालया सस्मितमुक्तम्—'यद्यहं तिष्ठन्ती न बहुमता तदेषा गच्छामि।

यदा सा गन्तुं व्यवसिता तदा ससम्भ्रममारण्यिकोवाच—'काञ्चनमाले! तिष्ठ, तिष्ठ। अयमस्याग्रहस्तः समर्पितः।'

एवं धरणिरमणेनाऽऽरण्यिकाया हस्तो जगृहे।

अथ वासवदत्ता सहसोत्थायाब्रवीत्—'भगवति! पश्य पश्य। अहं पुनरलीकं न पारयामि प्रेक्षितुम्।'

साङ्कृत्यायन्या निजगदे—' राजपुत्रि! धर्मशास्त्रविहित एष गान्धर्वो विवाहः। किमत्र लज्जास्थानम्? प्रेक्षणीयकमिदम्। तन्न युक्तमस्थाने रसभङ्गं कृत्वा गन्तुम्।'

एवं बहुशः कृतप्रयत्नाऽपि साङ्कृत्यायनी न शशाक तां निवारयितुम्। निष्क्रान्तैव वासवदत्ता। इन्दीवरिकाऽपि

तामनुवव्राज। तस्याश्च दृष्टिः प्रेक्षकगृहद्वारे शयाने वसन्तके निपतिता।

'राज्ञाऽप्यत्रैव भवितव्यम्' इति वासवदत्ता तमवलोक्य समभावयत्। तदेव प्रष्टुं प्रबोधितो वसन्तकः।

वसन्तकेनाऽऽकलितम् 'मनोरमा पुनः मां प्रबोधयति' इति स निद्राजडमुत्थायापृच्छत्—'मनोरमे! किं नर्तित्वाऽऽगता प्रियवयस्यः। अथवा नृत्यत्येव?'

एवमभिद्यत सर्वं रहस्यम्। विषण्णा वासवदत्ता तमपृच्छत्—'कथम् आर्यपुत्रो नृत्यति। मनोरमेदानीं कुत्र?'

वसन्तकोऽब्रवीत्—'एषा चित्रशालायां तिष्ठति।'

राज्ञी साक्षेपं हसन्ती सोपालम्भमुवाच—'साधु मनोरमे! साधु। शोभनं त्वया नर्तितम्।'

सभयं कम्पमानया मनोरमया पादयोर्निपत्य निवेदितम्—'भट्टिनी। न खल्वहमत्रापराध्यामि। एतेन खलु हताशेन बलान्मदलङ्काराणि गृहीत्वा द्वारस्थितेनेह निरुद्धा। न पुनर्ममाऽऽक्रन्दन्त्याः शब्दो मुरजनिर्घोषान्तरितः केनापि श्रुतः।'

वासवदत्ता व्याजहार—'हञ्जे! उत्तिष्ठ। ज्ञातं सर्वम्। वसन्तकः खल्वारण्यिकावृत्तान्तनाटके सूत्रधारः।'

पुनः साऽभिदधौ—'मनोरमे! सुगृहीतं कृत्वैनमागच्छ तावत्। प्रेक्षणीयमस्य पश्यामि।'

सम्प्रति मनोरमा समाश्वसिता। सा वसन्तकं करयोर्बध्वोवाच-'हताश! इदानीमनुभवाऽऽत्मनो दुर्नयस्य फलम्।'

अथ वासवदत्ता राजानमुपससार। 'परिज्ञातोऽस्मि। देव्या' इति राज्ञाऽधुना व्यज्ञायि। सोऽनुनयं सर्वथा दुर्लभ-

मपश्यत्। तथापि तेन कोपं त्यक्तुमभ्यार्थिता वासवदत्ता।

सा सोल्लुण्ठं ललाप—'आर्यपुत्र! कोऽत्र कुपितः?'

अथ स तस्याः पादयोर्निपत्य तां प्रसादयितुमैच्छत्। वासवदत्ता तु सोत्प्रासमावभाषे—'आरण्यिके! त्वं कुपितेति सम्भावयन्नार्यपुत्रः "प्रिये प्रसीद" इति प्रसादयति। तदुपसर्प।'

ततः साऽऽरण्यिकामाचकर्ष। तपस्विनी सा भीतभीतमब्रवीत्—'भट्टिनि! न खल्वहं किमपि जानामि।'

वासवदत्ता प्रत्यब्रवीत्—'आरण्यिके! त्वं कथं न जानासि। इदानीं ते शिक्षयामि।'

अथो राज्ञीन्दीवरिकामारण्यिकां ग्रहीतुमादिदेश। राजा पुनरपि पादपतितः क्षमामयाचत। राज्ञी त्ववितीर्णोत्तरैवाऽऽरण्यिकावसन्तकौ सहाऽऽदाय स्वावसथं प्रस्थिता।

[ ४ ]

अभूद् वासवदत्ताया आरण्यिकाया उपरि दीर्घरोषः। सा तपस्विनी बन्धनक्लेशादपि तस्या गुरुतरेण भर्तृदर्शननिराशताजनितेनाऽऽधिनाऽतिमात्रं संतप्यमानाऽऽत्मानं व्यापादयितुमिच्छन्ती कथमपि मनोरमया निवारिता। एतं वृत्तान्तं वसन्तकमुखेनावनीन्द्राय निवेदयित्वा मनोरमाऽऽगच्छत्। अर्धपथे सा साङ्कृत्यायनीमन्विष्यन्तीं काञ्चनमालामपश्यत्। सा मनोरमामन्वयुङ्क्त—'हला मनोरमे! अपि जानासि कुत्र भगवती साङ्कृत्यायनी।'

मनोरमोवाच—'हला काञ्चनमाले! दृष्टा। किं पुनस्तया प्रयोजनम्?'

काञ्चनमालाऽब्रवीत्—'मनोरमे! अद्य देव्याऽङ्गारवत्या

लेखः प्रेषितः। तस्मिन् वाचिते बाष्पपूर्णनयना दृढं संतप्तुमारब्धा देवी। तद्विनोदननिमित्तं तस्या भगवतीमन्विष्यामि।'

लेखविषये परमोत्कण्ठिता मनोरमा पप्रच्छ—'हला! किं पुनस्तस्मिंल्लेख आलिखितम्?'

काञ्चनमालाऽलपत्—'यथा "या मम भगिनी सा तव जनन्येव। तस्या भर्ता दृढवर्मा तातस्ते। तत्तव किमेतदाख्यातव्यम्? तस्य समधिकं संवत्सरं कलिङ्गहतकेन बद्धस्य। तन्न युक्तमेतं वृत्तान्तमनिष्टं श्रुत्वा समीपस्थितस्य समर्थस्य भर्तुस्त एवमुदासीनत्वमवलम्बितुम्" इति।'

मनोरमा त्वरितमकथयद्—'तेन गच्छ त्वम्। एषा खलु देव्या तथैव सह दन्तवलभ्यां तिष्ठति।'

काञ्चनमालाऽविलम्ब्य ततः प्रयाता।

मनोरमा विममर्श—'चिरं खलु आरण्यिकासकाशादागतायाः। दृढं च निर्विण्णा सा तपस्विन्यात्मनो जीवितेन। कदाचिदत्याहितं भवेत्' इति सा तत्र जगाम।

अथान्यतः वासवदत्ता साङ्कृत्यायनी च सहोपविश्य परस्परमालपताम्। वासवदत्ताऽचकथत्—'भगवति अम्बा पुनर्न जानाति "अद्यापि तादृशी न वासवदत्ता" इति। तव पुनरेष आरण्यिकावृत्तान्तः प्रत्यक्षः।'

साङ्कृत्यायनी प्रसङ्गमेतं गोपयितुमैच्छत्। साऽब्रवीत्—'ननु राज्ञा कौमुदीमहोत्सवे त्वां हासयितुं तथा क्रीडितम्।'

न चैतावता समाश्वासनं वासवदत्तायाः। एतेन कथाप्रसङ्गेन नवीकृतनिकारा सा रोदितुं प्रवृत्ता।

साङ्कृत्यायनी तु 'अलं राजपुत्रि ! रुदितेन। नेदृशो वत्सराजः' इति प्रभृतिभिर्वाक्यैस्तां पर्यवस्थापयितुमैषीत्, परं तस्यास्तु तत्सर्वं स्वप्नसदृशमभात्।

अथेदानीं देवीं प्रसादयितुकामो वत्सराजो बन्धनात् कथमपि परिभ्रश्याऽऽगतं वसन्तकं च राज्ञीसांनिध्यं परिहर्तुकाममपि प्रसभमादाय दैवात्तत्राऽऽजगाम। राजानमागतमवलोक्योत्थिता वासवदत्ता प्रणम्य भूमावुपविष्टा। तां तथाऽवलोक्य वत्सराजोऽपि भूमावेवोपविश्य चरणग्रहणादिभिस्तां प्रसादयितुं प्रायतत।

दुःखान्विता वासवदत्ताऽब्रवीत्—'अतिसुखितो नन्वसि। किमिदानीं दुःखितं जनं विकारयसि ? उत्तिष्ठ। कोऽत्र कुपितः ?'

साङ्कृत्यायन्याप्यामन्त्रितावती—'उत्तिष्ठ महाराज ! किमनेन ? अन्यदेव तावदुद्वेगकारणमस्याः।'

उर्वीश्वरेण तत्कारणं पृष्टा साङ्कृत्यायनी तस्य कर्णे किमप्यकथयत्। तदाकर्ण्य स विहस्य स्वप्रियामब्रवीत्—'यद्येवमलमुद्वेगेन। मयाऽपि ज्ञातम्। "सिद्ध एवास्मिन् प्रयोजने देवीं दिष्ट्या वर्धयिष्यामि" इति नोक्तम्। अन्यथा कथमहं दृढवर्मवृत्तान्ते विस्रब्धस्तिष्ठामि। तत् कतिपयान्यहानि तद्वार्ताया आगतायाः। इदं च तत्र वर्तते—

अस्मद्बलैर्विजयसेनपुरःसरैस्तै-
राक्रान्तबाह्यविषयो विहतप्रतापः।
दुर्गं कलिङ्गहतकः सहसा प्रविश्य
प्राकारमात्रशरणोऽशरणः कृतोऽसौ ॥ ७ ॥

अद्य श्वो वा विभग्ने दुर्गेऽचिरात् तं बद्धं वा हतं वा श्रोष्यसि ।'

एतच्छ्रुत्वा प्रभूतं परितोषमवाप राज्ञी । अथेदानीं विजयसेनो दृढवर्मकञ्चुकी विनयवसुश्च तत्र प्रापतुः ।

जयशब्देनाभिनन्दितो वत्सेश्वरो विजयसेनविनयवसू पर्यष्वजत । ततो विनयवसुस्तमभ्यधात् 'देव ! दिष्ट्या वर्धसे,

हत्वा कलिङ्गहतकं ह्यस्मत्स्वामी निवेशितो राज्ये ।
देवस्य समादेशो निर्व्यूढो विजयसेनेन ॥' ८ ॥

अथ राजा जगाद—'देवि ! दिष्ट्या वर्धसे । प्रतिष्ठितो राज्ये दृढवर्मा ।'

वासवदत्ता प्रतिजगाद—'अनुगृहीताऽस्मि ।'

अवसरविद् वसन्तकोऽवदत्—'ईदृशेऽभ्युदयेऽस्मिन् राजकुल एतत्करणीयम्—(राजानं निर्दिश्य वीणावादनं नाटयन्) "गुरुपूजा" (आत्मनो यज्ञोपवीतं दर्शयन्) "ब्राह्मणस्य सत्कारः" (आरण्यिकां सूचयन्) "सर्वबन्धनमोक्षः" इति ।'

अथ प्रसन्नया वासवदत्तयाऽविलम्बेन प्रेषिता साङ्कृत्यायन्यारण्यिकां मोचयितुम् ।

विनयवसुरपि पुनरारब्धवान्—'इदमपरं संदिष्टं महाराजेन दृढवर्मणा, "त्वत्प्रसादात् सर्वमेव यथाऽभिलषितं संपन्नम् । तदेते प्राणास्त्वदीयाः । यथेष्टमिमान् विनियोक्तुं त्वमेव प्रमाणम् । यद्यपि तुभ्यं प्रतिपादितायाः प्रियदर्शिकाया अस्मद्दुहितुः परिभ्रंशान्न मे सम्बन्धो जात इति दुःखमासीत्,

तथापि वासवदत्तायाः परित्रात्रापि त्वया तदपनीतमेव।" '

वासवदत्ता साम्रमनुयुयुजे—'आर्य कञ्चुकिन्! कथं मे भगिनी परिभ्रष्टा ?'

विनयवसुना प्रत्युदितम्—'राजपुत्रि ! तस्मिन् कालिङ्ग-हतकावस्कन्दे विद्रुतेष्वितस्ततोऽन्तःपुरजनेषु दिष्ट्या दृष्टाम् "इदानीं न युक्तमत्र स्थातुम्" इति तामहं गृहीत्वा वत्सराजान्तिकं प्रस्थितः। ततः संचिन्त्य तां विन्ध्यकेतोर्हस्ते निक्षिप्य निर्गतोऽस्मि। यावत् प्रतीपमागच्छामि तावत् कैरपि तत् स्थानं सह विन्ध्यकेतुना स्मर्तव्यतां नीतम्। तदा प्रभृति न विज्ञायते क्व वर्तत इति।'

एवमेव खल्वालपत्सु तेषु मनोरमयाऽऽगत्य निवेदितम्—'भट्टिनि ! प्राणसंशये वर्तते सा तपस्विनी।'

वासवदत्ताऽपृच्छत्—'किं पुनस्त्वं प्रियदर्शनावृत्तान्तं जानासि ?'

मनोरमा प्रत्यवोचत्—'न खल्वहं प्रियदर्शनावृत्तान्तं जानामि। एषा खल्वारण्यिका विषं पीत्वा प्राणसंशये वर्तते। तत्परित्रायतां भट्टिनी।'

वासवदत्ताऽचिन्तयत्—'हा धिक् ! हा धिक् !! प्रियदर्शनादुःखमपि मेऽन्तरितमारण्यिकावृत्तान्तेन। अतिदुर्जनः खलु लोकः। कदाचिन्मामन्यथा सम्भावयिष्यति।' एवं विमृश्य सा संभ्रममुवाच–'मनोरमे! लघ्विहैवाऽऽनय ताम्। नागलोकाद्गृहीतविषविद्य आर्यपुत्रोऽत्र कुशलः।'

अथ मनोरमा निष्क्राम्याऽऽरण्यिकामादाय प्रतिनिवृत्ता। चिन्तनीयामवस्थां गताऽभूदारण्यिका। तस्या दृष्टिस्तमसाऽऽ-

म्रियत। वासवदत्ता ससंभ्रमं राजानं हस्ते गृहीत्वोऽदर्शापयदऽभ्यधाच्च—'परित्रायतां महाराजः। लघु विपद्यते खल्वेषा तपस्विनी।'

अथाऽऽरण्यिकां निरूपयता विनयवसुना चिन्तितम्—'सुसदृशी खल्वियं मम राजपुत्र्याः प्रियदर्शनायाः।' पुनस्तेन वासवदत्ता पृष्टा—'राजपुत्रि! कुत इयं कन्यका?'

वासवदत्ताऽब्रवीत्—'आर्य! विन्ध्यकेतोर्दुहिता। तं व्यापाद्य विजयसेनेनाऽऽनीता।'

विनयवसुनाऽभिहितम्—'कुतस्तस्य दुहिता। सैवेयं मम राजपुत्री। हा हतोऽस्मि मन्दभाग्यः।' इति मोहमुपगतः स भूमौ निपतितः।

अथ वासवदत्ताऽपि तस्याः परित्राणाय बलवदुद्विग्ना बभूव। साऽब्रवीत्—'आर्यपुत्र! परित्रायस्व, परित्रायस्व। मम भगिनी विपद्यते।'

उदयनोऽपि प्रियदर्शिकाया दशां वीक्ष्य संमुग्धो जातः। परं वसन्तकेन प्रतिबोधितः सोऽग्रत उपसृत्य तस्या उपरि स्वहस्तं निधाय मन्त्रमस्मरत्। ततः प्रियदर्शिका शनैः शनैरुदतिष्ठत्।

"राजपुत्रि! एष ते पितुराज्ञाकरः" इति ब्रुवन् विनयवसुस्तस्याः पादयोः पतितः।

विलोकित एव तस्मिन् पित्रोः स्मरन्ती प्रियदर्शिका रोदितुं प्रवृत्ता।

विनयवसुना व्याजह्रे—'राजपुत्रि! अलं रुदितेन। कुशलिनौ ते पितरौ। वत्सराजप्रभावात्पुनस्तदवस्थमेव राज्यम्।

अथ हृष्टया वासवदत्तया कण्ठे गृहीत्वाऽऽलिङ्गिता निजभगिनी।

वसन्तकः पुनरपि प्रतियोजितवान्—'भवति! त्वं भगिनीं गृहीत्वा कण्ठ एवं परितुष्टाऽसि। वैद्यस्य पुनः पारितोषिकं विस्मृतम्?'

'वसन्तक! न विस्मृतम्।' इत्युक्तवत्यां वासवदत्तायां स राजानं हस्तं प्रसारयितुं मन्त्रयामास। राज्यपि आरण्यकायाः हस्तमर्पयामास। राजा तु स्वहस्तमुपसंहर्तुं व्यवसितः। तदा वासवदत्तोदाजहार—'कस्त्वमग्रहीतुम्? प्रथममेव तातेनेयं दत्ता।'

अथ वासवदत्ता राज्ञो हस्तं बलादाकृष्य प्रियदर्शिकामर्पितवती।



# नागानन्दम्

[ १ ]

आसीद् विद्याधराणामधिपतिर्जीमूतकेतुर्नाम नृपः। तस्याभूद् जीमूतवाहनो नामैककः सूनुः। 'राज्यधुरं वोढुं समर्थोऽयम्' इति जीमूतकेतुर्वनगमनाय मतिमकरोत्। जीमूतवाहनोऽप्यमात्येषु राज्यधुरमासज्य पितृचरणशुश्रूषानुरागेण सहैव पितृभ्यां वनमगात्।

बलवदुदाराशयो जीमूतवाहनः सनिर्वेदमेवमुदैरयत्—'वयस्य आत्रेय!

रागस्याऽऽस्पदमित्यवैमि न हि मे ध्वंसीति न प्रत्ययः
कृत्याकृत्यविचारणासु विमुखं को वा न वेत्ति क्षितौ।
एवं निन्द्यमपीदमिन्द्रियवशं प्रीत्यै भवेद् यौवनं
भक्त्या याति यदीत्थमेव पितरौ शुश्रूषमाणस्य मे॥'१॥

यथासंभवं विषयनिर्वेशं बहु मन्यमानो जीमूतवाहनमित्रमात्रेयस्तूपन्यस्तवान्—'भो वयस्य! ननु निर्विण्ण एव त्वमेतावन्तं कालमेतयोर्जीवन्मृतयोः कृत इदमीदृशं वनवासदुःखमनुभवन्। तत् प्रसीदेदानीमपि तावद् गुरुचरणशुश्रूषानिर्बन्धान् निवृत्येच्छापरिभोगरमणीयं राज्यसुखमनुभवितुम्। अन्यच्च, अन्यदपि ते करणीयमस्त्येव।'

जीमूतवाहनः प्रत्युवाच—वयस्य न ! सम्यगभिहितं त्वया । कुतः,

तिष्ठन् भाति पितुः पुरो भुवि यथा सिंहासने किं तथा
यत् संवाहयतः सुखं हि चरणौ तातस्य किं राजके ।
किं भुङ्क्ते भुवनत्रये धृतिरसौ भुक्तोज्झिते या गुरो-
रायासः खलु राज्यमुज्झितगुरोस्तत्रास्ति कश्चिद्गुणः ॥२॥

अपि च वयस्य ! यदन्यत् करणीयं तदपि कृतमेव । पश्य,

न्याय्ये वर्त्मनि योजिताः प्रकृतयः सन्तः सुखं स्थापिता
नीतो बन्धुजनस्तथाऽऽत्मसमतां राज्ये च रक्षा कृता ।
दत्तो दत्तमनोरथाधिकफलः कल्पद्रुमोऽप्यर्थिने
देहं व्याप्य परार्थमेव निखिलं नूनं मया कल्प्यते ॥ ३ ॥

राज्यमात्रं न दत्तं यत् तद्धि तातानुरोधतः ।
वृथा चिन्ता न कर्तव्या किं मतङ्गविमर्शनात् ॥ ४ ॥

आत्रेय ! आज्ञापितोऽस्मि तातेन यथा "वत्स जीमूतवाहन ! बहुदिवसपरिभोगदूरीकृतसामित्कुसुममुपभुक्तफलमूलकन्दनीवारप्रायमिदं स्थानं वर्तते । तदितो मलयपर्वतं गत्वा किञ्चित्तस्मिन् निवासयोग्यमाश्रमपदं निरूपय" इति । तदेहि मलयपर्वतमेव गच्छावः ।'

अथाऽऽत्रेयद्वितीयो जीमूतवाहनो मलयपर्वतं प्रस्थितः । स्तोकमन्तरं गताभ्यां ताभ्यां दृष्टं रामणीयकं मलयाचलस्य । जीमूतवाहनस्तस्मिन् मनोरमे स्थाने वासयोग्यं किञ्चिदाश्रमपदं निरूपयितुमारेभे । स्थानं निरूपयन्तावेव किल सखायौ तौ मलयपर्वतमारूढौ । अथैतस्मिन्नेव समये जीमूतवाहनस्य

दक्षिणाक्षिस्पन्दनं कामपि शुभफलाकांक्षामाशशंस। किञ्चिद्ग्रतो गताभ्यां च ताभ्यां सविशेषघनस्निग्धपादपविशोभितं तपोवनमदृश्यत।

तत्र प्रविष्टस्यैव जीमूतवाहनस्यैवं प्रत्यभात्—'इह हि

मधुरमिव वदन्तः स्वागतं भृङ्गशब्दै–
नैतिमिव फलनम्रैः कुर्वतेऽमी शिरोभिः।
मम ददत इवार्घं पुष्पवृष्टिं किरन्तः
कथमतिथिसपर्यां शिक्षिताः शाखिनोऽपि ॥' ९ ॥

तत् तपोवनं सः स्वनिवासयोग्यममन्यत। भविष्यतीह वसतामस्माकं निर्वृतिरित्यासीत् तस्य प्रत्ययः।

अथैतस्ततः पश्यत आत्रेयस्यैकस्मिन् मृगनिवहे दृष्टिः पतिता। हरिणाः खलु ईषद्वलितकन्धराः, निश्चलमुखतया निःसरद्दरदलितदर्भकवलाः, समुन्नमितदत्तैककर्णाः, मुखनिमीलितलोचनाश्च किमप्याकर्णयन्त इव लक्ष्यन्ते स्म।

अथावहितो जीमूतवाहनः किमपि काकलीप्रधानं गीयमानमशृणोत्। अङ्गुल्यग्रेणाऽऽत्रेयस्याग्रतो निर्दिशन् स उवाच—'अस्मिन्नायतने देवतामाराधयन्ती काचिद्दिव्या योषिदुपवीणयति।'

आत्रेयेण देवतायतनं तं प्रेक्षितुं विज्ञापितो जीमूतवाहनः। सोऽपि तदनुमन्यमान ऊचे—'वयस्य! साधूक्तं भवता। वन्दनीयाः खलुदेवताः।' किञ्चिदेवाग्रतः उपसृतोऽसौ सहसा स्थित्वा पुनरुवाच—'वयस्य! कदाचिद् द्रष्टुमनर्होऽयं स्त्रीजनो भवति। तदावां तमालगुल्मकेनान्तरितौ देवतादर्शनावसरं प्रतिपालयावः।'

एवं मन्त्रयित्वोभौ तत्रातिष्ठताम्। अथ देवतायतनात् पुनरश्रूयत संगीतध्वनिः—

'उत्फुल्लकमलकेसरपरागगौरद्युते मम हि गौरि !

अभिवाञ्छितं प्रसिध्यतु भगवति ! युष्मत्प्रसादेन ॥' ६ ॥

अनन्तरञ्च प्रणयसिक्तमश्रूयत—'भर्तृदारिके ! चिरं खलु त्वया वादितम्, न खलु तेऽग्रहस्तानां परिश्रमः ?'

राजकुमार्याऽभिहितम्—'चतुरिके ! कुतो मे गौर्याः पुरस्ताद् वीणां वादयन्त्या अग्रहस्तानां परिश्रमः ?'

चतुरिकोवाच—'भर्तृदारिके ! ननु भणामि किमेतस्या देव्या निष्करुणायाः पुरस्ताद् वादितेन। या एतावन्तं कालं कन्याजनदुष्करैर्नियमोपासनैराराधयन्त्या अद्यापि न ते प्रसादं दर्शयति।'

अथैतां कन्यकां निर्धारितवताऽऽत्रेयेणोक्तम्—'भो वयस्य ! कन्यका खल्वेषा ! तत् किं न प्रेक्षावहे ?' जीमूतवाहनोऽप्युवाच—'को दोषः। कन्यका हि निर्दोषदर्शना भवन्ति। किन्तु कदाचिदियमस्मान् दृष्ट्वा बालभावसुलभलज्जासाध्वसान्न चिरमिह तिष्ठेत्। तदनेनैव तमालजालान्तरेण पश्यावः।'

तां कन्यकामवलोक्य तौ महान्तं विस्मयमवापतुः। आत्रेयोऽब्रवीत्—'भो वयस्य। न केवलमियं वीणाविज्ञानेनैव कर्णयोः सुखं करोति, यावदनेन वीणाविज्ञानानुरूपेण रूपेणाप्यक्ष्णोः सुखमुत्पादयति।'

तां कन्यकां सस्पृहमवलोकयतो जीमूतवाहनस्य या दशाऽभूत् तामवलोकयताऽऽत्रेयेण ज्ञातम् 'अयं कुमारस्तस्याः प्रणयरज्जुना निगडितः' इति। ततो देवतायतनात् पुनरपि

शब्दोऽश्रावि—'भर्तृदारिके ! ननु भणामि किमिदानीमेतस्या निष्करुणाया देव्याः पुरस्ताद् गानेन ।'

एवमभिधाय चतुरिकया दास्या तद्धस्तादाक्षिप्ता वीणा । रोषमुपयाता राजकुमारी जगाद—'हञ्जे ! मा भगवतीं गौरीमधिक्षिप । ननु कृतो मेऽद्य स्वप्ने भगवत्या प्रसादः, यथा "वत्से मलयवति ! परितुष्टाऽस्मि त्वया तद् विद्याधर-चक्रवर्त्यचिरेणैव ते पाणिग्रहणं निर्वर्तयिष्यति" इति ।'

अथ हृष्टा चतुरिकाऽब्रवीत्—'भर्तृदारिके ! यद्येवं तत् किं स्वप्न एव भण्यते । ननु हृदयस्थितो वरो भगवत्या देव्या दत्तः ।'

तमालापं श्रुत्वाऽऽत्रेयेण बलादाकृष्य संस्थापितो जीमूत-वाहनस्तत्र तयोरग्रतः, अभिहितं च—'स्वस्ति भवत्यै ! भवति ! सत्यमेव चतुरिका भणाति । स एव वरो देव्या दत्तः ।'

मलयवती ससाध्वसमुत्थायापवार्य चतुरिकामपृच्छत्—'हञ्जे ! को नु खल्वेषः ?'

चतुरिका जीमूतवाहनं निरूप्यापवार्यावोचत्—'अनया-ऽनन्यसदृश्याऽऽकृत्या "एष स भगवत्याः प्रसादः" इति तर्कयामि ।'

मलयवत्या सलज्जं सस्पृहं च जीमूतवाहनोऽवलोकितः । परन्तु लज्जापरवशा सा मुहूर्तमपि तत्र स्थातुं नाशक्नोत् । तेन चतुरिकान्यतश्चालितुमभिहिता ।

अथाऽऽत्रेयस्तामुवाच—'भवति ! किं युष्माकं तपोवन ईदृश आचारः, येनातिथिरागतो वाङ्मात्रेणापि न सम्भाव्यते ?'

मलयवत्यां कुमारस्यानुरक्तां दृष्टिमवलोकितवती निपुणा

चतुरिकाऽब्रवीत्—'भर्तृदारिके! युक्तं भणति ब्राह्मणः। उचितः खलु तेऽतिथिजनसत्कारः। तत्किमीदृशे महानुभाव एवं प्रतिपत्तिमूढा तिष्ठसि! अथवा तिष्ठ त्वम्। अहमेव यथानुरूपं स्वागतं करिष्यामि।'

मलयवत्युवाच—'अयि परिहासशीले! मैवं कुरु। कदापि कोऽपि तापसो मां प्रेक्षते। ततो मामविनीतेति सम्भावयिष्यति।'

अस्मिन्नेव समये कश्चित् प्रत्यासीदन् तापसोऽदृश्यत। स खलु कुलपतिना कौशिकेन आदिष्ट आसीत्। यथा 'वत्स शाण्डिल्य! सिद्धयुवराजो मित्रावसुर्भविष्यद्विद्याधर-चक्रवर्तिनं कुमारजीमूतवाहनमिहैव मलयपर्वते क्वापि वर्तमानं भगिन्या मलयवत्या वरहेतोर्द्रष्टुमागतः। तं च प्रतीक्ष-माणाया मलयवत्याः कदाचिन्मध्यन्दिनसवनवेलावधिरति-क्रामेत्। तदेनामाहूयाऽऽगच्छ' इति।

गुरुणाऽऽदिष्टः शाण्डिल्यः गौरीगृहं गच्छन् मार्गे प्रकाशचक्रचिन्हां पदपङ्क्तिमदर्शत्। पदचिह्नैश्च स चक्रवर्तिनमागतमुन्नीयाग्रतो जीमूतवाहनं निर्दिश्य 'नूनमस्यैव महापुरुषस्य पदवी' इति निश्चिकाय।

तापसमागतं वीक्ष्य जीमूतवाहनो मलयवत्यादयश्च सर्वे तं प्रणेमुः। प्रत्यभिवादनानन्तरं तापसो मलयवतीमुवाच—'राजपुत्रि! त्वामाह कुलपतिः कौशिकः। यथा—"अति-क्रामति मध्यन्दिनसवनवेला। तत्त्वरितमागम्यताम्" इति।'

एकतस्तावद्गुरोरादेश आसीत्, अन्यतश्चाभूद्दयितदर्शने

शब्दोऽश्रावि—'भर्तृदारिके ! ननु भणामि किमिदानीमेतस्या निष्करुणाया देव्याः पुरस्ताद् गानेन ।'

एवमभिधाय चतुरिकया दास्या तद्धस्तादाक्षिप्ता वीणा । रोषमुपयाता राजकुमारी जगाद—'हञ्जे ! मा भगवतीं गौरीमधिक्षिप। ननु कृतो मेऽद्य स्वप्ने भगवत्या प्रसादः, यथा "वत्से मलयवति ! परितुष्टाऽस्मि त्वया तद् विद्याधर-चक्रवर्त्यचिरेणैव ते पाणिग्रहणं निर्वर्तयिष्यति" इति ।'

अथ हृष्टा चतुरिकाऽब्रवीत्—'भर्तृदारिके ! यद्येवं तत् किं स्वप्न एव भण्यते। ननु हृदयस्थितो वरो भगवत्या देव्या दत्तः ।'

तमालापं श्रुत्वाऽऽत्रेयेण बलादाकृष्य संस्थापितो जीमूत-वाहनस्तत्र तयोरग्रतः, अभिहितं च—'स्वस्ति भवत्यै ! भवति ! सत्यमेव चतुरिका भणति। स एव वरो देव्या दत्तः ।'

मलयवती ससाध्वसमुत्थायापवार्य चतुरिकामपृच्छत्—'हञ्जे ! को नु खल्वेषः ?'

चतुरिका जीमूतवाहनं निरूप्यापवार्योवोचत्—'अनया-ऽनन्यसदृश्याऽऽकृत्या "एष स भगवत्याः प्रसादः" इति तर्कयामि ।'

मलयवत्या सलज्जं सस्पृहं च जीमूतवाहनोऽवलोकितः। परन्तु लज्जापरवशा सा मुहूर्तमपि तत्र स्थातुं नाशक्नोत्। तेन चतुरिकान्यतश्चालितुमभिहिता ।

अथाऽऽत्रेयस्तामुवाच—'भवति ! किं युष्माकं तपोवन ईदृश आचारः, येनातिथिरागतो वाङ्मात्रेणापि न सम्भाव्यते ?'

मलयवत्यां कुमारस्यानुरक्तां दृष्टिमवलोकितवती निपुणा

चतुरिकाऽब्रवीत्—'भर्तृदारिके! युक्तं भणति ब्राह्मणः। उचितः खलु तेऽतिथिजनसत्कारः। तत्किमीदृशे महानुभाव एवं प्रतिपत्तिमूढा तिष्ठसि! अथवा तिष्ठ त्वम्। अहमेव यथानुरूपं स्वागतं करिष्यामि।'

मलयवत्युवाच—'अयि परिहासशीले! मैवं कुरु। कदापि कोऽपि तापसो मां प्रेक्षते। ततो मामविनीतेति सम्भावयिष्यति।'

अस्मिन्नेव समये कश्चित् प्रत्यासीदन् तापसोऽदृश्यत। स खलु कुलपतिना कौशिकेन आदिष्ट आसीत्। यथा 'वत्स शाण्डिल्य! सिद्धयुवराजो मित्रावसुर्भविष्यद्विद्याधर-चक्रवर्तिनं कुमारजीमूतवाहनमिहैव मलयपर्वते क्वापि वर्तमानं भगिन्या मलयवत्या वरहेतोर्द्रष्टुमागतः। तं च प्रतीक्ष-माणाया मलयवत्याः कदाचिन्मध्यन्दिनसवनवेलावधिरति-क्रामेत्। तदेनामाहूयाऽऽगच्छ' इति।

गुरुणाऽऽदिष्टः शाण्डिल्यः गौरीगृहं गच्छन् मार्गे प्रकाशचक्रचिन्हां पदपङ्क्तिमदर्शत्। पदचिह्नैश्च स चक्रवर्तिनमागतमुन्नीयाग्रतो जीमूतवाहनं निर्दिश्य 'नूनमस्यैव महापुरुषस्य पदवी' इति निश्चिकाय।

तापसमागतं वीक्ष्य जीमूतवाहनो मलयवत्यादयश्च सर्वे तं प्रणेमुः। प्रत्यभिवादनानन्तरं तापसो मलयवतीमुवाच—'राजपुत्रि! त्वामाह कुलपतिः कौशिकः। यथा—"अति-क्रामति मध्यन्दिनसवनवेला। तत्त्वरितमागम्यताम्" इति।'

एकतस्तावद्गुरोरादेश आसीत्, अन्यतश्चाभूद्दयितदर्शने

सुखम् । एवं गमनागमनविमूढाऽपि मलयवती विवशा तापसेन सहागमत् ।

जीमूतवाहनात्रेयावप्यशनादिकं निर्वर्तयितुं प्रस्थितौ ।

[ २ ]

मलयवतीं हृदयसन्तापोऽधिकतरमबाधत । सा चतुरिकामुवाच—'हञ्जे चतुरिके ! बालकदलीपत्रपरिक्षिप्ते चन्दनलतागृहे चन्द्रमणिशिलातलं सज्जीकुरु ।'

यथाऽऽज्ञप्तमनुष्ठाय चतुरिका मलयवतीं सह नीत्वा चन्दनलतागृहमगच्छत् । उभे शीतले चन्द्रमणिशिलातले उपविष्टे । मलयवत्यास्तु सन्तापस्तत्रापि नोपशान्तः । तया चतुरिकाऽभिहिता—'हञ्जे ! किं पुनः घनपल्लवतया निरुद्ध-सूर्यकिरणमपि चन्दलतागृहमेतन्न मेऽद्यापि सन्तापदुःखम-पनयति ।'

चतुरिकया प्रत्यभिहितम्—'जानाम्यहमत्र सन्तापस्य कारणम् । परमसम्भाविनी भर्तृदारिका न तत्प्रतिपत्स्यते ।'

'कथं लक्षितेवाहमेतया !' इति सम्प्रति समर्थितं मलय-वत्या । तथापि साऽपृच्छत्—'हञ्जे ! किं तद् यन्न प्रतिपद्यते । तत्कथय तावत् किं तत्कारणम् ?'

चतुरिकाऽब्रवीत्—'एष ते हृदयस्थितो वरः सन्तापस्यै-तस्य ते कारणम् । येनैतत् स्वभावशीतलमपि चन्दनलतागृहं न ते सन्तापदुःखमपनयति ।'

मलयवत्युवाच—'सत्यं हञ्जे ! चतुरिकासि त्वम् ।'

चतुरिकाब्रवीत्—'भर्तृदारिके ! अलं संभ्रमेण । मा सन्त-प्यस्व । यद्यहं चतुरिका तदा सोपि भर्तृदारिकामप्रेक्षमाणो न

मुहूर्तमपि प्रियसखि ! अभिरंस्यते। तदिदमपि मया लक्षितम्। किं मधुमथनो वक्षःस्थलेन लक्ष्मीमनुद्वहन् निर्वृतो भवति ?'

मलयवत्याऽभिहितम्—'सखि ! अतः खलु मे सन्तापोऽधिकतरं बाधते यत्स महानुभावो वाङ्मात्रेणाप्यकृतप्रतिपत्तिरदक्षिणेतिमां सम्भावयिष्यति ।'

एवमुक्त्वा मलयवती रोदितुं प्रवृत्ता। चतुरिकया तस्या हृदये चन्दनलतापल्लवरसो दत्तः। परं सोऽप्यनवरतं पतद्भिर्बाष्पबिन्दुभिरुष्णीकृतः । चतुरिका कदलीदलेन वीजयितुमारेभे, परं मलयवत्या उष्णैर्निश्वासैः कदलीदलमारुतमपि उष्णं संजातम् । अथ चतुरिका सन्तापोपशमोपायमनुयुक्ता प्रतिजगाद—'भर्तृदारिके ! यदि सोऽत्रागच्छति ।'

जीमूतवाहनोऽपि मलयवत्यै सातिशयमधीर आसीत्। स्वमित्रमात्रेयमादाय तामेव ध्यायन् तत्र सम्प्राप्तः सम्प्रति। तद्धृदयस्य महान्तमावेगमवच्छिन्नात्रेयः कुत्रैवाऽऽक्षेप्तुमनास्तमामन्त्रयाञ्चकार—'भो वयस्य ! कस्मात् पुनरद्य त्वं लघ्वेव गुरुजनं शुश्रूषित्वेहागतः ?'

जीमूतवाहन उवाच—'वयस्य ! स्थाने प्रश्नः। कस्य वाऽन्यस्यैतत्कथनीयम्। अद्य खलु स्वप्ने जानामि । सैव प्रियतमा अत्र चन्दनलतागृहे चन्द्रकान्तमणिशिलायामुपविष्टा प्रणयकुपिता किमपि मामुपालम्भमानेव रुदती मया दृष्टा। तदिच्छामि स्वप्नानुभूतदयितासमागमरम्येऽस्मिश्चन्दनलतागृहे दिवसशेषमतिवाहयितुम्। तदेहि गच्छावः ।'

अनयोः समीपमागतयोर्लब्धश्चतुरिकया पदशब्दः ।

तेन मलयवती चतुरिका च द्वेऽपि रक्ताशोकपादपेनान्तरितेऽभूताम् ।

तावता जीमूतवाहनात्रेयावपि चन्द्रमणिशिलां प्रत्यासन्नौ । पादपान्तरिते मलयवतीचतुरिके तौ पश्यतः स्म ।

आत्रेयो जीमूतवाहनं चन्द्रमणिशिलातल उपवेष्टुं व्यज्ञापयत् । जीमूतवाहनो निश्वस्य सबाष्पमवादीत्—'भो वयस्य ! एष सा—

शशिमणिशिला सेयं यस्यां विपाण्डुरमाननं
करकिसलये कृत्वा वामे घनश्वसितोद्गमा ।
चिरयति मयि व्यक्ताकूता मनाक् स्फुरिताधरा
नियमितमनोमन्युर्दृष्टा मया रुदती प्रिया ॥ ७ ॥

ततस्तस्यामेव चन्द्रमणिशिलायामुपविशावः ।'

तदाकर्ण्य मलवत्यचिन्तयत्—'कं पुनः प्रणयकुपितं प्रियजनं हृदये कृत्वा मन्त्रयते ?'

आत्रेय उवाच—'भो वयस्य ! तदा सा रुदती त्वया किं भणिता ?'

जीमूतवाहनोऽब्रवीत्—'वयस्य ! इदमुक्ता—

"निष्यन्दत इवानेन मुखचन्द्रोदयेन ते ।
एतद्बाष्पाम्बुना सिक्तं चन्द्रकान्तशिलातलम् ॥" ' ८ ॥

श्रोतुमसह्यमिदमभून्मलयवत्याः । तेनान्यतो गन्तुं व्यवसिता सा चतुरिकयाऽभिहिता—'भर्तृदारिके ! मैवं भण । त्वमेव स्वप्ने दृष्टा ।'

तद्वचोनुरोधान्मलयवती कथावसानं प्रतिपालयितुं तत्रैव स्थितिमादृतवती ।

अथ जीमूतवाहनः स्वप्नेऽवलोकितां तां तस्यां शिलाया-मालिख्य चित्रार्पितया तयाऽऽत्मानं विनोदयितुमियेष। तेन हि स आत्रेयं गिरितटान्मनःशिलाशकलान्यादातुं प्राहिणोत्। सोऽप्येकं वर्णकमानेतुमाज्ञापितः पञ्चजातीयान् वर्णकाशिला-शकलानानीतवान्। चित्रमालिखितुं प्रवृत्तो जीमूतवाहनोऽ-समाप्तमपि चित्रं दर्शं दर्शमतितरां प्रसन्नो बभूव। प्रतिकृति रामणीयकं निरूप्याऽऽमन्त्रितमात्रेयेण—'अप्रत्यक्षेऽप्येवं नाम रूपं लिख्यते! अहो आश्चर्यम् !!'

जीमूतवाहनः सस्मितमुवाच—'वयस्य !

प्रिया सन्निहितैवेयं संकल्पस्थापिता पुरः।

दृष्ट्वा दृष्ट्वा लिखाम्येनां यदि तत् कोऽत्र विस्मयः॥' ६ ॥

'सर्वथाऽपि रमण्यामन्यस्यां बद्धभावोऽयम्' इति जात-प्रत्यया तेन चाऽऽत्मानं नितान्तं विप्रलब्धां मन्यमाना मलयवती सविषादं बाष्पं मुमोच।

अथ जीमूतवाहनमन्विष्यन् मित्रावसुस्तत्र प्राप्तः। स स्वपित्राऽभिहित आसीत्। यथा "वत्स मित्रावसो ! जीमूत-वाहनोऽस्माभिरासन्नभावात् सुपरीक्षितोऽयम्। कुतो-ऽन्योऽस्माद्योग्यो वरः। तदस्मै वत्सा मलयवती प्रतिपाद्य-ताम्" इति। स च "जीमूतवाहनो गौर्याश्रमसम्बन्धे चन्दन-लतागृहे वर्तते" इति श्रुत्वा तस्यानुज्ञामधिगन्तुं तत्रोपागमत्।

तं तत्र प्रत्यासीदन्तं दृष्ट्वा जीमूतवाहनः शिलायामा-लिखितं चित्रं कदलीदलेन प्राच्छादयत्।

मित्रावसुरागत्य पितुर्विश्वावसोः सन्देशमश्रावयत्। स च यथा 'अस्ति मे मलयवती नाम कन्या जीवितमिवास्य

सर्वस्यैव सिद्धराजान्वयस्य। सा मया तुभ्यं प्रतिपाद्यते। प्रतिगृह्यताम्' इति।

जीमूतवाहनः प्रत्यब्रवीत्—'क इह नेच्छेद् भवद्भिः सह श्लाघ्यमीदृशं सम्बन्धम्। किन्तु न शक्यते चित्तमन्यतः प्रवृत्तमन्यतः प्रवर्तयितुम्। ततो नाहमेनां प्रतिग्रहीतुमुत्सहे।'

मुमूर्च्छ खलु मलयवती प्रतिवचस्तदाकर्ण्य। आत्रेयो मित्रावसुमुवाच—'भोः! पराधीनः खल्वेषः। किमनेनाभ्यर्थितेन। तद्गुरुजनमस्य गत्वाऽभ्यर्थयस्व।'

तद्युक्तं प्रतिपद्यमानो मित्रावसुर्जीमूतकेतोः सकाशं जगाम।

अथ संज्ञां प्रतिपन्ना मलयवती स्वजीवितमात्मना धिक् चकार। साऽशोकपादपतलेऽतिमुक्तलतयोद्बध्याऽऽत्मानं व्यापादयितुं मतिं चकार। तन्निमित्तं च चतुरिकामपवाहयितुकामा साऽऽशशंस—'हञ्जे! प्रेक्षस्व तावन्मित्रावसुर्दूरं गतो न वेति। येनाहमपीतो गमिष्यामि।'

सूतिकाऽपि स्वभर्तृदारिकागतं किमप्याशङ्क्य कतिचित् पदानि गत्वा तत्रैवान्तरिताऽस्थात्।

मलयवती दिशोऽवलोक्य पाशं कण्ठेऽर्पयितुं व्यवसिता। तदवलोक्य जातसंभ्रमा चतुरिका 'परित्रायतां परित्रायतामार्यः। एषा भर्तृदारिकोद्बध्याऽऽत्मानं व्यापादयति' इत्युच्चैः समीपस्थं जीमूतवाहनमाकारयत्।

जीमूतवाहनो मलयवतीमवलोक्याऽऽललाप—'कथं सैवेयमस्मन्मनोरथभूमिः?' ततः स मलयवतीं पाणौ गृहीत्वा लतापाशमाक्षिप्य अभिदधे—

'न खलु न खलु मुग्धे ! साहसं कार्यमेतद्
व्यपनय करमेनं पल्लवाभं लतायाः ।
कुसुममपि विचेतुं यो न मन्ये समर्थः
कलयति स कथं ते पाशमुद्बन्धनाय ॥' १० ॥

जातसाध्वसा ततश्च जीमूतवाहनं वीक्ष्य सकोपा मलयवती स्वकरमाक्षिपन्ती जगाद्—'अये ! मुञ्च मुञ्चाग्रहस्तम् । कस्त्वं निवारयितुम् ?'

पाणिममुञ्चञ्जीमूतवाहनो व्याजहार—

'कण्ठे हारलतायोग्ये येन पाशस्त्वयार्पितः ।
गृहीतः सापराधोऽयं स कथं मुच्यते करः ॥' ११ ॥

आत्रेयेण मरणव्यवसायकारणं पृष्टा चतुरिकाऽब्रवीत्—'नन्वेष एव ते प्रियवयस्यः । या सा ते प्रियवयस्येन काऽपि हृदयवल्लभा शिलातल आलिखिता तस्यां पक्षपातिनैतेन प्रतिपादयतोऽपि मित्रावसोर्नाहं प्रतिगृहीतेति जातनिर्वेदयैतद्व्यवसितम् ।'

अथ जीमूतवाहनोऽपि 'इयमेवासौ विश्वावसोर्दुहिता मलयवती' इति विज्ञाय परं हर्षमुपागतः ।

आत्रेयेण प्रतियोजितम्—'भवति ! यद्येवं तदनपराद्धः प्रियवयस्यः । यदि मम न प्रत्येषि ततः स्वयमेव गत्वा शिलातले प्रेक्षतां भवती ।'

जीमूतवाहनोऽपि स्वप्रियाकरमविसृजन्नेव तां चन्दनलतागृहे शिलोपान्तं निनाय ।

मलयवती त्वालिखितां प्रतिकृतिं निर्वर्ण्य 'मदीयैवैषा' इति विदन्ती लज्जिता हृष्टा च ।

आत्रेय उवाच—'भो भोः ! निर्वृत्त इदानीं ते गान्धर्वो विवाहः। तन्मुञ्च तावदस्या अग्रहस्तम्। एषा खलु काऽपि त्वरितत्वरितेत एवागच्छति।'

आसीत्काऽपि दासीयं नवागता। तयाऽऽगत्य सन्दिष्टम्—'भर्तृदारिके! दिष्ट्या वर्धसे। प्रतीष्टा त्वं भर्तुर्जीमूतवाहनस्य गुरुभिः। आज्ञप्ताऽस्मि युवराजमित्रावसुना यथा "अद्यैव मलयवत्या विवाहोत्सवस्य मङ्गलं संवृत्तं भविष्यति। तल्लघु तां गृहीत्वाऽऽगच्छ" इति। तदेहि गच्छावः।'

एवं सानुरागं सव्रीडं च जीमूतवाहनं विलोकयन्ती मलयवती प्रासादमभिजगाम।

[ ३ ]

अथ सुराचषकहस्तो विचित्रविह्वलवेषः कश्चिन्मत्तो जनः शेखरको नाम स्वकां भार्यां नवमालिकां प्रतीक्षते स्म। स्कन्धारोपितसुराभाण्डश्चेटस्तमनुससार। नवमालिकां विलम्बमानां वीक्ष्य स मत्तो व्यचिन्तयत्—'प्रथमप्रहर एव मलयवत्या विवाहमङ्गलं संवृत्तम्। तत्कस्मात् सेदानीं प्रभातेऽपि नाऽऽगच्छति? अथवाऽद्यास्मिन् मलयवतीविवाहमङ्गलोत्सवे सर्व एव निजप्रणयिनीजनसहायः सिद्धविद्याधरलोकः कुसुमाकरोद्यान आपानसुखमनुभविष्यतीति तर्कयामि। तत्रैव नवमालिका मामवेक्षमाणा तिष्ठति। तदहमपि तत्रैव गमिष्यामि।'

एवं विचिन्त्य स मत्तः स्वसेवकसहायः कुसुमाकरोद्यानमगमत्। दैवात् स तत्रागच्छन्तमात्रेयमपश्यत्। तस्य स्कन्धे वस्त्रयुगलं न्यस्तमासीत्। मलयवत्याः

बन्धुजनेन जामातुः प्रियवयस्योऽयमिति कृत्वा सबहुमानं सन्तानकशेखरकस्तस्य शीर्षे पिनद्ध आसीत्। मुखं च तस्य सुगन्धवर्णकैर्विलिप्तमासीत्। ततः सुरभिलुब्धा मधुकरास्तन्मुखमभिपतन्ति स्म। अवशः स चपलो मलयवत्याः सकाशाल्लब्धेन रक्तांशुकयुगलेन स्त्रीवेशं विधायोत्तरीयकृतावगुण्ठनो गन्तुं व्यवसितः।

शेखरक आत्रेयमस्मिन् वेशे गच्छन्तं दृष्ट्वा जग्राह—'एषा खलु नवमालिका मां प्रेद्याहं चिरस्याऽऽगत इति कृत्वा कुपिताऽवगुण्ठनं कृत्वाऽन्यतो गच्छति।' तस्मादसौ स्वकां प्रणयिनीं प्रसादयितुमात्रेयं कण्ठे गृहीत्वा तन्मुखे ताम्बूलमर्पयितुमुद्युयुजे। आत्रेयो मद्यगन्धमासाद्य स्वनासिकां पिधाय मुखं परावृत्याब्रवीत्—'दूरं रे दूरम्। कथमेकेषां दुष्टमधुकराणां सकाशात्परिभ्रष्ट इदानीमन्यस्य दुष्टमधुकरस्य मुखे पतितोऽस्मि।'

'कथं कोपेन पराङ्मुखीभूता' इति सम्भाव्य शेखरकस्तां प्रसादयितुं स्वशिरस्तत्पादयोः पातयित्वाभिदधौ—'प्रसीद नवमालिके! प्रसीद।'

इदानीमेव कस्मिंश्चित् कर्मणि व्यापृता नवमालिकाऽपि ततः समाययौ। सा मलयवत्या जनन्याऽऽदिश्यत यथा "हञ्जे नवमालिके! कुसुमाकरोद्यानं गत्वोद्यानपालिकां पल्लविकां भण—अद्य सविशेषं तमालवीथिकां सज्जी कुरु। मलयवत्या सहितेन जामात्रा तत्र गन्तव्यम्" इति। पल्लविकामादिश्य प्रतिनिवर्तमाना साऽन्यप्रसादनपरं शेखरकमवलोक्य तत्रैव विलीय 'का एषा प्रसाद्यमाना' इति द्रष्टुमारभत।

यदा पुनः शेखरकः 'नवमालिके !' इत्युच्चारयामास तदा कुपित आत्रेय उवाच—'अरे दास्याः पुत्र ! मत्तबालक ! कुतोऽत्र नवमालिका ?'

अथ दास्या नवमालिकया ज्ञातं यथा 'भ्रान्तस्यास्य शेखरकस्याऽऽत्रेये नवमालिकाबुद्धिः' इति। अलीककोपं कृत्वा नवमालिकोभावेतौ परिहसितुं प्रवृत्ता। क्रोधरक्तनयना सा शेखरकमुपसृत्योवाच-'शेखरक ! का खल्वेषा प्रसाद्यते ?'

आत्रेयोऽवगुण्ठनमपनीयाब्रवीत्—'अहं मन्दभागधेयायाः पुत्रः।'

आत्रेयं निरूप्य शेखरकः 'एष मां प्रतारयति' इति मत्वा स्वचेटं तं परिग्रहीतुमादिश्य स्वयं नवमालिकां प्रसादयितुं तस्याः पादयोः पतितः।

नवमालिकाऽब्रवीत्—'शेखरक ! उत्तिष्ठ प्रसन्ना खलु तेऽहम्। एष पुनर्जामातुः प्रियवयस्यो ब्राह्मणस्त्वया खलीकृतः। एतच्छ्रुत्वा कदापि भर्ता मित्रावसुः कोपं करोति। तदादरेण सम्मानयैनम्।'

शेखरक आत्रेयं मोचयित्वाऽब्रवीत्—'मर्षयतु मर्षयत्वार्यो मदपरवशेन यन्मयाऽपराद्धम्।'

'मर्षितं मया सर्वम्' इत्यभिधायापक्रान्तः स आत्रेयो मत्तशेखरकसंगदूषितो दीर्घिकायां स्नातुमगमत्। अथ कृताभिषेकः स कुसुमाकरोद्यानं प्रविशन्नेव मलयवतीं हस्तेऽवलम्ब्याऽऽगच्छन्तं जीमूतवाहनं दृष्ट्वा तत्रैव तं प्रतिपालयितुं स्थितः।

जीमूतवाहनस्तत्र तमवलोक्याब्रवीत्—'वयस्य! चिरादायातोऽसि।'

आत्रेय उवाच—'भो वयस्य! लब्ध्वेवागतोऽस्मि। किं पुनर्विवाहमङ्गलोत्सवमिलनसिद्धविद्याधरापानकदर्शनकौतूहलेन परिभ्रमन्नैतावतीं वेलां विलम्बितोऽस्मि।'

कुसुमाकरोद्यानाज्जीमूतवाहनस्तमालवीथिमगच्छत्। तत्रासौ मलयवतीद्वितीयः स्फटिकशिलायामुपाविशत्।

जीमूतवाहनो सानुरागातिशयमब्रवीत्—'प्रिये!

एतत्ते भ्रूलतोद्भासि पाटलाधरपल्लवम्।
मुखं नन्दनमुद्यानमतोऽन्यत् केवलं वनम्॥' १२॥

दासी सस्मितमात्रेयमुवाच—'श्रुतं त्वया भर्तृदारिका कथं वर्ण्यते? आर्य! आगच्छ, अहं त्वां वर्णयामि।'

'वर्णयामि' इति पदेन चेट्या विवक्षितमजानता आत्रेयेणाभिहितम्—'जीवितोऽस्मि। तत्करोतु भवती प्रसादं येनैष मां पुनरपि न भणति यथा त्वमीदृशस्तादृशः कपिलमर्कटाकार इति।'

दास्याऽभिहितम्—'आर्य! त्वं मया विवाहजागरणे निद्रायमाणो निमीलिताक्षः शोभनो दृष्टः। तथैव तिष्ठ येन वर्णयामि।'

आत्रेयश्चक्षुषी निमील्य मौनमस्थात्। अथ दास्या नीलरसानुकारिणा तमालपल्लवरसेन मुखमस्य कालीकृतम्।

एतदवलोक्य जीमूतवाहनोऽब्रवीत्—'वयस्य! धन्यः खल्वसि योऽस्मासु तिष्ठत्सु त्वमेव वर्ण्यसे। मलयवत्यपि एतद्दृष्ट्वा स्मितमकरोत्।

आत्रेयोऽपृच्छत्—'चेटि ! किं त्वया कृतम् ?'

दासी प्रत्युवाच—'ननु वर्णितोऽसि ।'

आत्रेयेण हस्तेन मुखं प्रमृज्य हस्तं दृष्ट्वा सरोषं दण्डकाष्ठमुद्यम्योक्तम्—'आ दास्याः पुत्रि ! राजकुलं खल्वेतत् । किं ते करिष्यामि ?' पुनः जीमूतवाहनमवलोक्याभिहितम्—'भोः ! युवयोः पुरत एवाहं दास्याः पुत्र्या खलीकृतः । तत्किं ममेहास्थितेन । अन्यतो गमिष्यामि तावत् ।'

कुपितमात्रेयं प्रसादयितुं दास्यपि तमेवानुजगाम । केवलं मलयवतीसहायो जीमूतवाहनस्तत्र तस्थौ ।

किञ्चित्कालोत्तरं दम्पतीमौ दासीमुखेन तत आगच्छन्तं मित्रावसुं विज्ञातवन्तौ । अथ मलयवती प्रासादमभिगता ।

मित्रावसुनाऽऽगत्योक्तम्—'कुमार ! मतङ्गहतकेन किल युष्मदीयं राज्यं समाक्रान्तम् । अतस्तदुच्छित्तय आज्ञां दातुमर्हति कुमारः । एकाकिनैव मयासौ मतङ्गहतको हन्तव्यः ।'

तस्य वधप्रस्तावमाकर्ण्य जीमूतवाहनेनाभिहितम्—'अहह ! दारुणं खल्वभिहितं त्वया । मित्रावसो ! पश्य—

स्वशरीरमपि परार्थे यः खलु दद्यादयाचितः कृपया ।
राज्यस्य कृते स कथं प्राणिवधक्रौर्यमनुमनुते ॥ १३ ॥

अपि च क्लेशान् विहाय ममान्यत्र शत्रुबुद्धिरेव नास्ति । तद्यदि ते प्रियं मे कर्तुमभीष्टं तदनुकम्प्यतामसौ क्लेशवशीकृतस्तपस्वी ।'

मित्रावसुना सामर्षहासं तत्र स्वाननुमतिः प्रकटीकृता । अथ जीमूतवाहनस्तं सम्यग्बोधयितुमभ्यन्तरमनैषीत् ।

[ ४ ]

अथ कदाचिन्महाराजस्य विश्वावसोः कञ्चुकी वसुभद्रो गृहीतरक्तवस्त्रयुगलः क्वापि गच्छति स्म। मार्गे मिलितः सुनन्दनामा प्रतीहारस्तमपृच्छत्—'आर्य वसुभद्र! क्व नु खलु भवान् प्रस्थितः?'

वसुभद्रोऽब्रवीत्—'आदिष्टोऽस्मि देव्या मित्रावसुजनन्या यथा "कञ्चुकिन्! त्वया दशरात्रं यावन्मलयवत्या जामातुश्च रक्तवासांसि नेतव्यानि" इति। राजदुहिता मलयवती च श्वशुरकुले वर्तते। "जीमूतवाहनोऽपि युवराजेन मित्रावसुना सह समुद्रवेलां द्रष्टुं गतः" इति मया श्रुतम्। तन्न जाने किं राजपुत्र्याः सकाशं गच्छामि जामातुर्वेति।'

सुनन्द उवाच—'आर्य! वरं राजपुत्र्याः सकाशं गन्तव्यम्। तत्र हि कदाचिदस्यां वेलायां जामाता स्वयमेवागतो भविष्यति।'

वसुभद्रोऽप्यपृच्छत्—'अथ भवान् पुनः क्व प्रस्थितः?'

सुनन्द उवाच—'आदिष्टोऽस्मि महाराजविश्वावसुना यथा "भोः सुनन्द! गच्छ मित्रावसुं ब्रूहि—अस्मिन् दीपप्रतिपदुत्सवे मलयवत्या जामातुश्च यत् किञ्चित् प्रदीयते। तदुत्सवानुरूपं किञ्चिदागत्य चिन्त्यताम्" इति।'

सुनन्दः समुद्रवेलामगत् वसुभद्रश्च स्वकार्यव्यापृतोऽन्यतो राजपुत्रीसकाशं जगाम।

अन्यतश्च मित्रावसुजीमूतवाहनौ समुद्रतटे भ्रमणमकुरुताम्।

यदा किल अम्बुराशेरासीच्चलनसमयस्तदा मित्रावसुना जलप्रसरणमार्गादपक्रम्य गिरिसानुसमीपमार्गेण चलितुं त्वरायितो जीमूतवाहनः। अथ परिक्रम्यावलोकयञ्जीमूतवाहन उवाच—'मित्रावसो! पश्य पश्य शरत्समयपाण्डुभिः पयोदपटलैः प्रावृताः प्रालेयाचलशिखरश्रियमुद्वहन्त्येते मलयसानवः।'

मित्रावसुरब्रवीत्—'कुमार! नैवामी मलयसानवः। नागानामस्थिसंघाताः खल्वमी।'

एतच्छ्रुत्वोद्विग्नो जीमूतवाहनः प्रपच्छ—'कष्टम्, किं निमित्तममी संघातमृत्यवो जाताः?'

मित्रावसुरुवाच—'कुमार! नैवामी संघातमृत्यवः। श्रूयतां यथैतत्। इह किल स्वपक्षपवनापास्तसमस्तसागरतलपूरं रसातलादुद्धृत्य प्रतिदिनमेकैकं नागमाहारयति वैनतेयः। ततः सकलनागलोकविनाशशङ्किना नागराजेन वासुकिना पन्नगाशनोऽभिहितः। यथा "गरुत्मन्! त्वदभिपातसंत्रासात् सहस्रशः स्रवन्ति भुजंगमाङ्गनानां गर्भाः। शिशवः पञ्चत्वमुपयान्ति। एवं च संततिविच्छेदोऽस्माकम्। तव चैवं स्वार्थहानिः। तद्यदर्थं पातालमभिपतति भवान् तदेकैकमनुदिनमहं समुद्रतटस्थितस्य ते प्रेषयिष्यामि।" प्रतिपन्नं तत् पक्षिराजेन। एवं खलु—

इत्येष भोगिपतिना विहितव्यवस्थो
यान् भक्षयत्यहिपतीन् पतगाधिराजः।
यास्यन्ति यान्ति च गताश्च दिनैर्विवृद्धिं
तेषाममी तुहिनशैलरुचोऽस्थिकूटाः॥ १४॥

वृत्तान्तमेतमाकर्ण्य जीमूतवाहनस्य मनसि महानासीदुद्वेगः। स साश्चर्यमब्रवीत्—

' सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः ।
शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥ १४ ॥

अहो ! कष्टपर्यवसानेयं विपत्तिर्नागानामापतिता ।' ततः स आत्मना मन्त्रयामास—'अपि नाम शक्नुयामहं स्वशरीरसमर्पणेनैकस्यापि नागस्य प्राणपरिरक्षां कर्तुम् ?'

अस्यामेव चिन्तायां निमग्ने जीमूतवाहने प्रतीहारेण सुनन्देनाऽऽगत्य मित्रावसोः कर्णे किमपि कथितम्। अथ मित्रावसुः स्वपितुः सकाशमगमत्। जीमूतवाहनमापृच्छ्य गच्छता मित्रावसुनोक्तम्—'कुमारेणापि बहुप्रत्यवायेऽस्मिन् प्रदेशे न चिरं स्थातव्यम् ।' जीमूतवाहनोऽपि गिरिशिखरादवतीर्य समुद्रतटमवलोकयितुं प्रवृत्तः ।

तदा कुतश्चिद् ध्वनिरुच्चरितो यथा—'हा पुत्रक शङ्खचूड ! कथं व्यापाद्यमानोऽद्य किल त्वं मया प्रेक्षितव्यः ?' विरावं तमाकर्ण्य जीमूतवाहनोऽतितरां खेदमवाप। अथ तं शब्दं स कस्याश्चिदबलायाः परिदेवितमवगम्य शब्ददिशमभिप्रस्थितः।

तत्र प्राप्तो जीमूतवाहनः सकलं वृत्तमवगन्तुं विटपान्तरितस्तेषामालापं श्रोतुमास्थितः। तत्र हि काऽपि रुदती जरातुरा जरठा, तत्पुत्रः, राजपुरुषश्च कश्चिददृश्यत ।

राजपुरुषोऽब्रवीत्—'कुमार शङ्खचूड ! नागलोकस्वामी वासुकी त आज्ञापयति "इदं रक्तांशुकयुगलं परिधायाऽऽरोह वध्यशिलाम् । येन त्वां रक्तांशुकचिह्नोपलक्षितं गरुडो गृहीत्वाऽऽहारं करिष्यति" इति ।'

शङ्खचूडः सादरं वस्त्रं गृहीत्वोवाच—'गृहीतः शिरसि स्वाम्यादेशः ।'

पुत्रस्य हस्ते वाससी दृष्ट्वा वृद्धोरस्ताडयन्ती मुमूर्च्छे ।

गरुडागमनवेलां विज्ञाय राजपुरुषस्ततोऽपक्रान्तः ।

शङ्खचूडो मातरमाश्वासयितुं व्यवसितः । दुःखातिशयान्मातुः हृदयस्फोटं शङ्कमानः स उवाच—

'यैरत्यन्तदयापरैर्न विहिता वन्ध्याऽर्थिनां प्रार्थना
यैः कारुण्यपरिग्रहान्न गणितः स्वार्थः परार्थं प्रति ।
ये नित्यं परदुःखदुःखितधियस्ते साधवोऽस्तं गता
मातः ! संहर बाष्पवेगमधुना कस्याग्रतो रुद्यते ॥' १६ ॥

परं शोकविह्वलाऽतितरां प्रलपन्ती सा तु पुनरपि मोहमुपगता ।

दृश्यमेतद् दृष्ट्वा जीमूतवाहनः करुणया द्रवीभूतः । इत्थं च तदोत्थितं तच्चेतसि—

'आर्तं कण्ठगतप्राणं परित्यक्तं स्वबान्धवैः ।
त्राये नैनं यदि ततः कः शरीरेण मे गुणः ॥' १७ ॥

वृद्धाऽचकथत्—'हा पुत्रक ! यदा नागलोकपरिरक्षकेण वासुकिना स्वयमेव परित्यक्तोऽसि तदा कस्तेऽपरः परित्राणं करिष्यति ।'

अस्मिन्नेव समये जीमूतवाहनेनोपसृत्याभिहितम्—'नन्वहमहम् । अम्ब ! मा भैषीः । नन्वहं विद्याधरस्तव पुत्ररक्षणार्थमेवागतः । अतस्त्वं धीरा भव ।'

हृष्टया वृद्धयाऽऽशीराशस्ता ।

अथ जीमूतवाहनेन वध्यचिह्नं रक्तवस्त्रयुगलं याचितः

शङ्खचूडो येनासावात्मनो देहं गरुत्मत उपनयेत् । परन्तु वृद्धया कर्णौ पिधायाभिहितम्—'प्रतिहतममङ्गलम् ! जात ! त्वं शङ्खचूडसदृश एव मे पुत्रकः । अथवा शङ्खचूडादप्यधिकः । यो बन्धुजनपरित्यक्तं मे पुत्रकं निजशरीरदानेन परिरक्षितुमिच्छति ।'

शङ्खचूडोऽप्यतिविस्मित एतेन जीमूतवाहनस्य शरीरदानेन । स उवाच—

' जायन्ते च म्रियन्ते च मद्विधाः क्षुद्रजन्तवः ।
परार्थे बद्धकक्षाणां त्वादृशामुद्भवः कुतः ॥ १८ ॥

प्रसीद मुच्यतामयमध्यवसायः ।'

जीमूतवाहनो व्याजहार—'शङ्खचूड ! न मे चिराल्लब्धावसरस्यास्य परार्थसंपादनामनोरथस्यान्तरायं कर्तुमर्हसि । तदलं विकल्पेन । दीयतां मे तद्वध्यचिह्नम् ।'

शङ्खचूडस्तु न कथमपि तदनुमेने । गरुडागमनमासन्नं विज्ञायासौ मात्रा सह भगवन्तं दक्षिणगोकर्णं प्रदक्षिणीकर्तुमगमत् ।

निराशो जीमूतवाहनस्तत्रैवातिष्ठत् । तदैव वसुभद्रेण रक्तांशुकयुगलमानीय जीमूतवाहनायार्पितम् ।

जीमूतवाहनोऽतितरां जहर्ष । सिद्धं तत्समीहितम् । सम्प्रति स मलयवत्याः पाणिग्रहं सफलीभूतममन्यत । 'मद्वचनादभिवादनीया देवी' इत्यभिधाय वसुभद्रं प्रस्थाप्य रक्तवसनयुगलं परिधाय वध्यशिलामारूढः । तत्रोपविश्य शिलास्पर्शं सातिशयं निर्विशन्नुवाच—अहो स्पर्शोऽस्याः !

'न तथा सुखयति मनो मलयवती मलयचन्दनरसार्द्रा ।
अभिवाञ्छितार्थसिद्ध्यै यथा वध्यशिलेयमाश्लिष्टा ॥' १९ ॥

अथान्तिकमायातं गरुत्मन्तमवलोक्य जीमूतवाहनो रक्तवस्त्रेणाऽऽत्मानमाच्छाद्य सपरितोषमाशशंस—

'संरक्षता पन्नगमद्य पुण्यं मयाऽर्जितं यत्स्वशरीरदानात् ।
भवे भवे तेन ममैव भूयात् परोपकाराय शरीरलाभः ॥' २० ॥

गरुडेनाऽऽगतेनाभिपत्य गृहीतो जीमूतवाहनः । आकाशे दुन्दुभिध्वनिः पुष्पवृष्टिश्चाभवत् । ताभ्यां च विस्मयमवापितस्तार्क्ष्यः । स क्षणं विचिन्त्य पुनः विहस्योवाच—'आं ज्ञातम्, मम जवमरुता कम्पितः पारिजातः । एते च संवर्तकमेघा जगत्संहारशंकया मन्द्रं गर्जन्ति ।'

जीमूतवाहनो समर्थयाम्बभूव—'दिष्ट्या कृतार्थोऽसि ।' गरुडस्तं दृष्ट्वाऽचिन्तयत्—

'नागानां रक्षिता भाति गुरुरेष यथा मम ।
तथा सर्पाशनाकाङ्क्षां व्यक्तमद्यापनेष्यति ॥' २१ ॥

इति विचिन्त्यासौ तं गृहीत्वा यथेष्टमाहारयितुं मलयाचलशिखरमारूढः ।

[ ५ ]

जलधिवेलायाः प्रतिनिवर्तने विलम्बेन शङ्कितो महाराजो विश्वावसुः सुनन्दमब्रवीत् । यथा 'सुनन्द ! श्रुतं मया "सन्निहितगरुडप्रतिभयमुद्देशं जामाता जीमूतवाहनो गतः" इति । शङ्कित एवास्मि अनेन वृत्तान्तेन । तत्त्वरितं विज्ञायाऽऽगच्छ किमसौ स्वगृहमागतो नवेति ।'

सुनन्दो महाराजजीमूतकेतोः सकाशं गतस्तमब्रवीत्—

'महाराज ! अहं खलु महाराजविश्वावसुना जीमूतवाहनस्य वार्तामन्वेष्टुं युष्मदन्तिकं प्रेषितोऽस्मि । तदाज्ञापयतु महाराजः किमहं स्वामिने निवेदयामि ।'

जीमूतकेतुनाऽभिहितम्—'अप्यसन्निहितस्तत्र वत्सः ? नियतमस्मत् प्राणयात्रार्थं नितान्तं दूरं गतो भविष्यति ।'

मलयवत्या हृदयं त्वन्यदेव किमप्याशङ्किष्ट । वामाक्षि-स्पन्दनमवलोक्य जीमूतकेतुरपि किंचिदनिष्टचिन्तासमाकुलो बभूव । एतास्मिन्नेव काले लग्नसरसमांसकेशश्चूडामणि-स्तस्य चरणयोः पतितः । तमवलोक्य जीमूतवाहनस्य माता सविषादमब्रवीत्—'महाराज ! पुत्रस्यैव म एतच्चूडारत्नम् ।'

सुनन्दोऽब्रवीत्—'महाराज मैवमविज्ञाय विक्लवो भूः । अत्र हि तार्क्ष्येण भक्ष्यमाणानां नागाधिपानामनेके नखमुखो-त्खाताः पतन्त्येते शिरोमणयः ।'

वृद्धया सुनन्दोऽभिहितः—'सुनन्द ! यावदनया वेलया श्वसुरसदनमेवागतो भविष्यति मे पुत्रकः । तद्गच्छ ज्ञात्वा लघु संपादय ।'

सुनन्दः स्वस्वामिसदनं प्रतिन्यवर्तत । तदानीमेव रुदन् रक्तवस्त्रसंवीतः शङ्खचूड आयान् नयनविषयमयात् । स हि सास्रमुदैरयत्—

' गोकर्णमर्णवतटे त्वरितं प्रणम्य
प्राप्तोऽस्मि तां खलु भुजङ्गमवध्यभूमिम् ।
आदाय तं नखमुखक्षतवक्षसं च
विद्याधरं गगनमुत्पतितो गरुत्मान् ॥' २२ ॥

एवं विविधं विलपञ्शङ्खचूडस्तार्क्ष्यं दिदृक्षू रुधिरधारामनुगच्छन् जीमूतकेतोरुपकण्ठं प्राप्त आसीत्।

शोकविह्वलं शङ्खचूडमवलोक्य जीमूतकेतोर्भार्ययाऽभिहितम्—'महाराज! ज्ञायतां तावत् "क एषः" इति।'

अभ्याशमेत्य जीमूतकेतुना तद्दुःखकारणमनुयुक्तः शङ्खचूडः प्रत्युवाच—'आर्य! श्रूयताम्। शङ्खचूडो नाम नागः खल्वहम्। वैनतेयस्याऽऽहारार्थमवसरप्राप्तो वासुकिना प्रेषितः। परन्तु—

विद्याधरेण केनापि करुणाविष्टचेतसा।
मम संरक्षिताः प्राणा दत्त्वाऽऽत्मानं गरुत्मते॥' २३॥

जीमूतकेतुरतर्कयत्—'जीमूतवाहनात् कोऽन्य एवं परहितव्यसनी।' शोकाविष्टः स उवाच—'हा हतोऽस्मि मन्दभाग्यः।' वृद्धाऽपि 'हा वत्स! 'हा पुत्रक!!' इत्येवं परिदेवितुमारेभे। मलयवत्याऽभिहितम्—'हा! कथं सत्यीभूतं मे दुर्निमित्तम्।' शोकविह्वलाः सर्वे मुमूर्च्छुः।

ताँस्तथा शोकाकुलान् वीक्ष्य शङ्खचूडः 'अये नूनमेतौ पितरौ तस्य महासत्त्वस्य' इत्यवधार्य ततोऽप्यधिकं दुःखितो जातः। सोऽचिन्तयत्—'कथमप्रियवादिना मयेमामवस्थां नीतौ। अहो! प्राणप्रदस्य सुसदृशं प्रत्युपकृतं जीमूतवाहनस्य शङ्खचूडेन।'

अथासौ तौ समाश्वासयितुं व्यवसितः। तत्प्रयत्नतः संज्ञामापन्नौ तौ पुनः विलपितुमारब्धवन्तौ। जीमूतकेतुश्चूडामणिमादाय परिदिदेव। स उवाच—'हा वत्स! गुरुचरणशुश्रूषाभिज्ञ!

चूडामणिं चरणयोर्मम पातयता त्वया ।
लोकान्तरं गतेनाऽपि नोज्झितो विनयक्रमः ॥' २४ ॥

मलयवती चूडामणिं तमादाय ज्वलने प्रवेष्टुमैच्छत् । माताऽपि स्वजीवितं भुवोभारमेवामन्यत ।

सर्वानपि देहं प्रतिमोक्तुं कृतव्यवसायान्वीक्ष्य शङ्खचूडोऽब्रवीत्—'तात ! न खल्वनिश्चित्यैव युक्तमिदमीदृशं साहसमनुष्ठातुम् । विचित्राणि विधेर्विलसितानि । कदाचिन्नायं नाग इति ज्ञात्वा परित्यजेन्नागशत्रुः । तदनयैव रुधिरधारया वैनतेयमनुसरामः ।'

जीमूतकेतुरुवाच—'वत्स ! अवितथैषा तव भारती भवतु । तथापि साग्नीनामेवास्माकं युक्तमनुसर्तुम् । तदनुसरतु भवान् । वयमप्याग्निशरणादग्निमादाय त्वरितमेवानुगच्छामः ।'

एवमभिधाय स सपत्नीको मलयवत्या सह होमाग्निमानेतुं प्रस्थितः । शङ्खचूडश्च रुधिरधारामनुससार ।

अथान्यतो वैनतेयो जीमूतवाहनं भक्षयन्नाकलयाम्बभूव—'अयं महासत्त्वो न केवलं न व्यथते प्रत्युत प्रहृष्ट इव किमपि दृश्यते । तथाहि—

ग्लानिर्नाधिकपीयमानरुधिरस्याप्यस्ति धैर्योदधे-
मांसोत्कर्तनजा रुजोऽपि वहतः प्रीत्या प्रसन्नं मुखम् ।
गात्रं यन्न विलुप्तमेष पुलकस्तत्र स्फुटो दृश्यते
दृष्टिर्मय्युपकारिणीव निपतत्यस्यापकारिण्यपि ॥'२५ ॥

अस्तोकं विस्मितोऽसावेतादृशो महासत्त्वस्य वृत्तं वेदितुं कुतूहली भूत्वा भक्षणादुपरतः ।

तदाश्चर्यं भूयोऽभिवर्द्धयञ्जीमूतवाहन उवाच—

' शिरोमुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि च ते महात्मन् ! किं भक्षणात्त्वं विरतो गरुत्मन् !'२६॥

एवं परं चमत्कारमापितो विनतानन्दनो निजगाद—

' आवर्जितं मया चञ्च्वा हृदयात्तव शोणितम् ।
धैर्येणानेन च हृतं त्वया हृदयमेव मे ॥ २७ ॥

तत् कस्त्वमिति श्रोतुमिच्छामि ।'

जीमूतवाहनः प्रतिजगाद—'एवं क्षुधाकुलो भवान्न श्रवणयोग्यः । तत्कुरुष्व तावत्प्रथमं मम मांसशोणितेन तृप्तिम् ।'

इदानीं तत्र प्राप्तः शङ्खचूडोऽब्रवीत्—'तार्क्ष्य ! न खलु न खलु साहसमनुष्ठेयम् । नायं नागः । परित्यजैनम् । मां भक्षय । अहं तवाहारार्थं प्रेषितोऽस्मि वासुकिना ।'

शङ्खचूडं पश्यता जीमूतवाहनेन सविषादं चिन्तितम्—'कष्टम् ! विफलीभूतो मे मनोरथः शङ्खचूडेनाऽऽगच्छता ।'

द्वयोरपि वध्यचिह्नं पश्यता गरुडेनोक्तम्—'युवयोः कः खलु नाग इति नावगच्छामि ।'

शङ्खचूड उवाच—'कथमस्थान एव भ्रान्तिः ।

आस्तां स्वस्तिकलक्ष्म वक्षसि तनौ नालोक्यते कञ्चुको
जिह्वे जल्पत एव मे न गणिते नाम त्वया द्वेऽपि ।
तिस्रस्तीव्रविषाग्निधूमपटलव्याजिह्मरत्नत्विषो
नैता दुःसहशोकफूत्कृतमरुत्स्फीताः फणाः पश्यसि ॥ २८ ॥

तदहमेवास्मि नागः । अयं पुनर्विद्याधरवंशतिलको जीमूतवाहनः ।'

'विद्याधरवंशतिलकोऽयं जीमूतवाहनः' इति निशम्य

गरुडो गाढमन्वताप्सीत् । स आत्मानं महत्यंहःपङ्के सर्वथा निमग्नममन्यत । तस्य च महतः पापस्याग्निप्रवेशादृते नान्य-त्प्रायश्चित्तमपश्यत् । वह्निसमासादनचिन्तापरश्चेतस्ततोऽ-वलोकयितुमारेभे । तदानीं गृहीताग्नयः केऽपि पुरुषास्तत एवाभिवर्तमाना अदृश्यन्त । स तान् प्रतिपालयाञ्चकार ।

जीमूतकेत्वादयो यदा समीपे प्राप्तास्तदा शङ्खचूडेन जीमूतवाहनोऽभिहितः—'कुमार ! पितरौ ते प्राप्तौ ।'

जातसंभ्रमो जीमूतवाहनः शङ्खचूडमुवाच—'शङ्खचूड ! समुपविश्यानेनोत्तरीयेणाऽऽच्छादितशरीरं कृत्वा धारय माम् । अन्यथा कदाचिदीदृगवस्थं मामवलोक्य पितरौ सहसा जीवितं जह्याताम् ।'

एतावता 'हा पुत्र ! हा वत्स !!' इति विलपन् पत्नीवधू-समेतो जीमूतकेतुस्तत्र प्राप्तः ।

नवागतं कुमारस्य पितरं जीमूतकेतुमवगत्य गरुडोऽतितरां लज्जितः । ततश्चाऽऽत्मानं वाडवाग्नौ दग्धुं व्यवसितः । तदर्थमुत्तिष्ठासुस्स कुमारेणाभिहितः—'भोः पक्षिराज ! अलमनेनाध्यवसायेन । नायं प्रतीकारोऽस्य पापस्य ।'

गरुडो जानुभ्यां स्थित्वा कृताञ्जलिरुवाच—'भो महात्मन् ! कस्तर्हि ? कथ्यताम् ।'

कुमार उवाच—'प्रतिपालय क्षणमेकम् । पितरौ मे प्राप्तौ । यावदेतौ प्रणमामि ।'

कुमारस्यान्तिकं तथोपविष्टं गरुडमवलोक्य जीमूतकेतुः पुत्रस्य क्षेमं समर्थयाञ्चकार । तत्पत्न्यप्यात्मानं कृतार्था-ममन्यत । परन्तु मलयवत्याः नासीद्विश्वासः । जीमूतकेतुना

परिष्वक्तुमुक्तो जीमूतवाहन उत्थातुमिच्छन् मुमूर्च्छ। तं तथाभूतं विलोक्य शोकाकुलाः सर्वे मोहमुपगताः। शङ्खचूडः सर्वान् समाश्वासितवान्। जीमूतकेतुना प्रवर्तिता माता बलवच्छोकाविष्टां मलयवतीं समाश्वासयितुमारेभे। ततश्च तीव्रं दुःखाविष्टा सा पुत्रस्य वपुर्दृष्ट्वा गरुडमुवाच —'नृशंस! कथमिदानीं त्वया एतदारूढयौवनशोभं तदेवैतावदवस्थं पुत्रस्य मे शरीरं कृतम् ?'

जीमूतवाहनः प्रतिबद्धवान्—'अम्ब! ममैव किमनेन कृतम्। ननु पूर्वमप्येतदीदृशमेव परमार्थतः। पश्य,

मेदोऽस्थिमांसमज्जासृक्संघातेऽस्मिंस्त्वचाऽऽवृते।
शरीरे खलु का शोभा सदा बीभत्सदर्शने ॥' २९ ॥

एतादृशानि वचांस्याकर्णयन् गरुडो नरकानलज्वालावलीढमिवाऽऽत्मानमगृह्णात्! स कुमारं तस्मादेनसो मोक्षस्यौपयिकमुपदेष्टुं प्रार्थयत।

कुमार उवाच—

'नित्यं प्राणाभिघातात् प्रतिविरम कुरु प्राक्कृतस्यानुतापं
यत्नात् पुण्यप्रवाहं समुपचिनु दिशन् सर्वसत्त्वेष्वभीतिम्।
मग्नं येनात्र नैनः फलति परिणतं प्राणिहिंसासमुत्थं
दुर्गाधे वारिपूरे लवणकणमिव क्षिप्तमन्तर्ह्रदस्य ॥' ३० ॥

तदखिलं प्रतिपन्नं नागान्तकेन। जीमूतवाहनेन शङ्खचूडो गृहं प्रतिनिवर्तितुमुक्तः, परं स निश्वस्याधोमुखोऽतिष्ठत्। न स क्षतविग्रहे कुमारे स्वजीवितमभिवाञ्छति स्म।

अथ साम्प्रतं मर्मच्छेदिन्यो वेदनाः कुमारमबाधन्त। अङ्गानि शिथिलानि संजातानि। कुमारः पितृभ्यां पश्चिमं

प्रणाममकरोत्। तौ विलपितुमारेभाते। शङ्खचूडोऽपि कुमारेण सह मरणव्यवसायबुद्धिं चकार। म्रियमाणं कुमारमवलोक्य गरुडोऽपि परां शुचमुपगतो विषादलुप्तप्रतिपत्तिरऽभूत्।

तदा विलपन्त्या जनन्याऽभ्यर्थिता लोकपालाः पीयूषमभिवर्षयितुम्। सुपर्णोऽपि सुधां वासवाद्विसर्जयितुमुत्पतितः।

जीमूतकेतुः शङ्खचूडमभ्यधात्—'शङ्खचूड! किमद्यापि प्रतीक्ष्यते? समाहृत्य दारूणि चितां विरचय पुत्रस्य मे, येन वयमपि अनेनैव सह वैश्वानरं साधयामः।'

शङ्खचूडश्चितामारचयत्। सर्वे तामारोढुं प्रस्तुताः। पतिपरायणा मलयवती बद्धाञ्जलिरूर्ध्वं पश्यन्त्युवाच—'भगवति गौरि! त्वयाऽऽज्ञप्तं "विद्याधरचक्रवर्ती भर्ता ते भविष्यति" इति तत्कथं मम मन्दभाग्यायाः कृते त्वमलीकवचना संवृत्ता?'

अथ सद्यः प्रकटीभूता गौरी भणितवती—'महाराज जीमूतकेतो! न खलु साहसमनुष्ठातव्यम्। पुनस्तया कमण्डलूदकेन अभिषिक्तः कुमारः। सोऽह्नायोदतिष्ठत्। सर्वैर्गौर्याः स्तवश्चरणवन्दना च विहितौ।

तदानीमनभ्रा वृष्टिर्जाता। गौर्याऽभिहितम्—'समुपजातपश्चात्तापेन गरुडेन जीमूतवाहनमस्थिशेषांश्चोरगपतीन् प्रत्युज्जीवयितुमियममृतवृष्टिः पातिता।'

जातायामेवामृतवृष्ट्यामस्थिशेषा नागाः संप्राप्ताखण्डदेहा वेगेन वारिराशिं विविशुः।

अथ प्रसन्नया गौर्या जीमूतवाहनोऽभिषिच्य विद्याधरचक्रवर्तिपदमारोपितः। हर्षपूरप्लावितमभूत्तदा निखिलं वसुधातलमिदम्।

# महावीरचारितम्

[ १ ]

बभूव कुशिकवंशसंभवो गाधितनुजो विश्वामित्रो नाम विश्वविश्रुतो ब्रह्मर्षिः। असौ किल राज्यवैभवं विहाय ब्राह्मं तेजो दधौ। लोके तु

तुरीयो ह्येष मेध्याग्निराम्नायः पञ्चमोऽपि वा।
अथवा जङ्गमं तीर्थं धर्मो वा मूर्तिसंचरः॥ १॥

इति प्रसिद्धिं लेभे। त्रिशङ्कोः सगात्रस्य स्वर्गारोपणं शुनःशेपस्य प्राणपरित्राणं, रम्भास्तम्भनञ्चेत्यपरिमेयाश्चर्यजातमस्योग्रतेजसः प्रमाणत्वेन प्रथितम्।

आसीत् कौशिकीपरिक्षिप्तमायतनमृषेस्तस्य सिद्धाश्रमपदं नाम। अथ कदाचिदसौ यज्ञार्थं कृतसङ्कल्पो विभावरीचरवृन्दविधीयमानान् साधुजनक्रियोपप्लवान् प्रतिबद्धुं स्वभेऽप्यन्यार्थितार्थिमनोरथं दशरथं याचित्वा रामलक्ष्मणौ स्वाश्रममानीतवान्।

तत्र क्रतावृषिणा जनकोऽपि न्यमन्त्रयत। तेन च तदानीं स्वयं यजमानत्वात् कुशध्वजो नाम निजानुजः सीतोर्मिलासहितः संप्रहितः।

दाशरथी पुरस्कृत्य गाधेयस्तं प्रत्युद्ययौ। कुमारौ तदा तमन्वयुञ्जाताम्—'भगवन्! कः पुनरयं महात्मा यत्र भवन्तोऽप्येवमभ्युपगताः?'

ऋषिरुवाच—'श्रूयन्त एव निमिजनकसंभवा राजर्षयो विदेहेषु।'

तावूचतुः—'यस्य तद् गृहेषु माहेश्वरं धनुः पूज्यते।'

विश्वामित्र उवाच—'अथ किम्।'

ताववोचताम्—'श्रूयते किलान्यदपि तत्राश्चर्यं यदयोनिजा कन्येति।'

विश्वामित्रो विहस्योवाच—'तदप्यस्ति।

अयं तु यजमानेन यक्ष्यमाणस्य मे गृहम्।
प्रेषितस्तेन वात्सल्यादनुजन्मा कुशध्वजः ॥' २ ॥

विश्वामित्रस्यान्तिके कुमारावमू निर्वर्ण्य कुशध्वजः परं विस्मयमुपागतः, अचिन्तयच्च—'प्रकृत्या पुण्यलक्ष्मीकौ कावेतौ ?'

कुमारावर्जितमनसौ कुमार्यौ मन्त्रयामासतुः—'सौम्य-दर्शनौ खल्वेतौ!'

क्षणादेव मुनिमुपेत्य राजा तं ववन्दे। गृहानागतं तं वीक्ष्य परमं प्रीतो मुनिरपि तमभिननन्द कुमारसंस्तवं पृष्टश्च 'रामलक्ष्मणौ दाशरथी' इति प्रत्यभ्यधत्त।

ततश्च सविनयमुपसृत्य कुमारौ नृपतिमभ्यवादयेताम्। कुशध्वजस्तौ दशरथसुतौ विज्ञाय हर्षभरपुलकिततनुः पर्यष्वजत। अथ कथां कुर्वाणा आश्रमपदमुपेतास्ते वृक्षच्छायासूपविश्य विश्रमितुं प्राक्रमन्त।

अथो कुतश्चित् 'जय जय जगत्पते रामचन्द्र! इत्येष शब्दोऽश्रूयत। येन सर्वे विस्मापिताः।

विश्वामित्रोऽकथयत्—'अहल्या नाम गौतमस्य महर्षे-

रौचथ्यस्य धर्मपत्नी। यस्याः शतानन्द आङ्गिरसोऽजायत। तामिन्द्रश्चक्रमे। अथ क्रुद्धेनर्षिणाभिशप्ता सा। तस्मात्तस्याः शरीरमन्धतामिस्रमभ्ययात्। सेयमद्य रामभद्रतेजसा तस्मादेनसो निरमुच्यत।'

राजोवाच—'कथमीदृशोऽप्रमेयानुभावसामर्थ्यं एष वैकर्तनकुलकुमारः।'

सीताऽपवारितमाह—'शरीरनिर्माणसदृशोऽस्यानुभावः।'

कुशध्वजोऽपि निश्वस्योवाच—

'रामाय पुण्यमहसे सदृशाय सीता
　　दत्तैव दाशरथिचन्द्रमसेऽभविष्यत्।
आरोपणेन पणमप्रतिकार्यमार्य-
　　स्त्रैयम्बकस्य धनुषो यदि नाकरिष्यत्॥'३॥

तदानीं रावणपुरोहितः सर्वमायो नाम वृद्धराक्षसः 'मातामहेन माल्यवता प्रतिषिध्यमानोऽपि रावणः स्वयं राजसुतां सीतां वरीतुं मां मिथिलां प्राहिणोत्। दृष्टश्च तत्र यजमानः स राजा। तद्वचनात्कौशिककुशध्वजावनुगतोऽस्मि' इति चिन्तयंस्तत्र संप्राप्तः। अथ स स्वभर्तुर्वाचिकमित्थमावेदयत्—

'कन्यारत्नमयोनिजन्म भवतामास्ते वयं चार्थिनो
　　रत्नं चेत् क्वचिदस्ति तत्परिणमत्यस्मासु शक्रादपि।
कन्यायाश्च परार्थतैव हि मता तस्याः प्रदानादहं
　　बन्धुर्वो भविता पुलस्त्यपुलहप्रष्ठाश्च संबन्धिनः॥'४॥

तच्छ्रुत्वाऽन्योन्यावलोकनात् संजातपूर्वानुरागौ सीता-

रामावूर्मिलालक्ष्मणौ च क्षोभमधिरूढौ।

लक्ष्मणो भ्रातरमुवाच—'आर्य ! निशाचरपतिर्देवीमिमां प्रार्थयते।'

राम उवाच—'वत्स !

साधारण्यान्निरातङ्कः कन्यामन्योऽपि याचते।
किं पुनर्जगतां जेता प्रपौत्रः परमेष्ठिनः ॥' ५ ॥

लक्ष्मणोऽब्रवीत्—'अति हि सौजन्यमार्यस्य ! तस्मिन्नपि निसर्गवैरिणि निशाचरे बहुमानः।

यो नस्त्रयीपरिध्वंसात् क्षात्रं तेजोऽपकर्षति।
अस्माकं यश्च राजानमनरण्यं किलावधीत् ॥' ६ ॥

रामोऽब्रूत—'कामं शत्रुरिति वध्यः स्यात्। न पुनरतिवीर्यमप्रमेयतपसमप्राकृतं प्राकृतवदर्हसि व्यपदेष्टुम्।'

एवं चिन्तानिमग्नेषु सर्वेषु राक्षसोऽभाषत—'ननु भोः ! किमत्र चिन्त्यते ? भवतः कन्या जगद्विजयिनस्तस्य गृहे सुखं निवत्स्यति।'

इदानीं यज्ञोपनिमन्त्रितानां भीतानां महर्षीणामाक्रन्दकलिलः कलकल आकर्णितः।

सर्वे उत्थाय ततो गन्तुं प्रक्रान्ताः। लक्ष्मणस्तु दृष्ट्वाऽब्रवीत्—'भगवन्, कैषा भीषणवपुर्दर्पोद्धता धावति ?'

विश्वामित्रः प्रत्युवाद—

'सेयं सुकेतोर्दुहिता भार्या सुन्दासुरस्य च।
मारीचजननी घोरा ताटका नाम राक्षसी ॥' ७ ॥

विश्वामित्रो रामं तां हन्तुमादिदेश। रामो विप्रत्यपद्यत —'भगवन् ! स्त्री खल्वियम्।'

तत्प्रतिवचनं श्रुत्वा कुशध्वजो जगाद—'साधु ! सत्यमैक्ष्वाको रामभद्रः ।'

तदाकर्ण्य राक्षसेन व्यज्ञायि । यथा 'अयं स रामो दाशरथिः, य एषः

उत्तालताटकोत्पातदर्शनेऽप्यप्रकम्पितः ।
नियुक्तस्तत्प्रमाथाय स्त्रैणेन विचिकित्सति ॥' ८ ॥

रामस्य विप्रतिपत्तिमप्रतिपद्यमानः कौशिक उवाच—'त्वरस्व वत्स ! किं न पश्यसि ब्राह्मणजनस्य संघातमृत्युमग्रतः ?'

रामेणाऽऽत्मानभिमतोऽपि गुरोरादेशः प्रमाणीकृत्यैकेनैव-बाणेन सा वक्षोविदारं हता । तस्य शौर्यमवलोक्य सर्वे विस्मिताः । तस्या मनुष्यात् तादृशं पराभवं वीक्ष्य वृद्धो राक्षसो भृशमखिद्यत ।

ततस्तेन संदेशप्रतिवचने पुनर्याचिते विश्वामित्रो व्याहार्षीत्—

'अत्र सीरध्वजो वेत्ता कनिष्ठो हि कुशध्वजः ।
अस्याः पिता स कन्यायाः कुलज्येष्ठः प्रभुश्च सः ॥' ९ ॥

राक्षसः प्रतिव्याजहार—'सोऽप्याह कुशध्वजो जानाति कौशिकश्चेति ।'

'अस्यायमवसरो दिव्यास्त्राणां मङ्गल्यानां प्रदानस्य' इति विचिन्त्य विश्वामित्रेणाभिहितम्—'सखे कुशध्वज ! यानि हि भगवतः कृशाश्वाद्गुरुचर्याव्रतैरधीतानि सरहस्यजृम्भकप्रयोग-संहाराणि दिव्यास्त्रविद्यातत्त्वबीजानि तानि मत्प्रसादाद् रामभद्रस्य सम्प्रति प्रकाशन्ताम् ।'

राज्ञाऽनुमोदितमेतत् । आकाशे दुन्दुभिध्वनिः पुष्प-

वृष्टिश्चाभवत्। एतदवलोक्य राक्षसस्तेभ्योऽद्रुह्यत। ततः

झटित्येवोत्तप्तद्रुतकनकसिक्ता इव दिशः
पिशङ्गत्वात् संध्यान्तरित इव निर्भाति दिवसः।
ज्वलत्केतुव्रातस्थगितमिव दिव्यास्त्रनिचितं
नभो नैरन्तर्यप्रचलिततडित्पिञ्जरमिव ॥ १० ॥

विश्वामित्रेणोक्तो रामो दिव्यास्त्राणि तानि प्रणम्योवाच—

'एष प्रह्वोऽस्मि भगवन्नेषा विज्ञापना च नः।
दिव्यास्त्रसम्प्रदायोऽयं लक्ष्मणेन सहास्तु मे ॥' ११ ॥

अथ विश्वामित्राभ्यनुज्ञातानि तान्यधिगम्य स भूयोऽप्यवदत्—

'विश्वामित्रात् प्राप्य विश्वस्य मित्रात्
पुण्यैर्युष्मानद्य रामः कृतार्थः।
ध्यातैर्ध्यातैः सन्निधेयं भवद्भिः
स्वं स्वं स्थानं यात यूयं नमो वः ॥' १२ ॥

एतां महाद्भुतां घटनामवलोक्य विस्मितः कुशध्वजो विश्वामित्रमुवाच—'भगवन्! युष्मदनुगृहीतेन रामभद्रेणालङ्कृताय दशरथाय राज्ञे स्पृहयाम्यहम्। वयं पुनरार्येण वञ्चिताः, यदीदृशेन जामात्रा न संयुज्यामहे।'

विश्वामित्र उवाच—'किमद्यापीयमसम्भावनाऽस्मासु?

शम्भोर्वरादनुध्यानमात्रोपस्थानदायि वः।
रामभद्रस्य पुरतः प्रादुर्भवतु तद्धनुः ॥' १३ ॥

सर्वमायस्तदवलोक्याब्रवीत्—'प्रभो कुशध्वज! कियच्चिरमनादृतोऽस्मि?'

कुशध्वजोऽब्रवीत्—'उक्तमेतत् सीरध्वजो जानातीति।'

अथ वज्रसहस्रसदृशं माहेश्वरं धनुः प्रादुरभूत्। रामेण तदनायासमेव भुजाभ्यामाकृष्य भग्नम्। तस्य भङ्गेनोद्यतष्टङ्कारध्वनिश्चिरेण खल्वाकाशे व्यरंसीत्।

रामस्य प्रभावेण राक्षसः त्रासितः। कुशध्वजेन मूर्धन्याघ्रायाऽऽलिङ्गितो रामः, विश्वामित्रश्चोक्तः—'भगवन्!

रामेण पत्या सीतायाः पूर्णाः युष्माकमाशिषः।
अस्मिन्नेवोत्सवे दत्ता लक्ष्मणाय मयोर्मिला ॥' १४ ॥

विश्वामित्र उवाच—'सुष्ठुतरं बहुमन्यामहे। वक्तव्यशेषस्त्वयम्।

कुशध्वजोऽवदत्—नन्वाज्ञापय।

विश्वामित्र उवाच—दुहितरौ माण्डवीश्रुतिकीर्तिश्च, ते च भरतशत्रुघ्नाभ्यामभ्यर्थये।

प्रतिपन्नं तत्कुशध्वजेन। सीरध्वजशतानन्दौ विश्वामित्रवचनस्यानादरं कर्तुमसमर्थौ।

ततः विश्वामित्रेण शुनःशेप आहूयाऽऽदिष्टः—'वत्स! अयोध्यां गत्वा ब्रूहि भगवन्तमस्मद्वचनाद् वसिष्ठम्,

एताश्चतुर्भ्यो रघुनन्दनेभ्यो निमेर्गृहे राजसुताश्चतस्रः।
वसिष्ठवद्गौतमवच्च भूत्वा दत्ताः प्रतीष्टाश्च समं मयैव ॥' १५ ॥

तदुपमन्त्र्य सर्वान् ब्रह्मर्षीन् महाराजदशरथानुयातो वैदेहनगरीमागच्छ। राज्ञो यज्ञपरिसमाप्तौ कुमाराः परिणेष्यन्तीति।'

एतत्सर्वमवलोक्य राक्षसोऽसौ अत्यन्तं खलु मत्सरान्वितोऽभूत्। स पुनरपि रावणसमीहितसाधनपरो मुधैव

स्वभर्तृविक्रमविभीषिकां प्रादर्शयत्।

अथ सुबाहुमारीचावागत्य मखं विहन्तुं प्रवृत्तौ। विश्वामित्रेणाऽऽदिष्टौ रामलक्ष्मणौ धनुर्जगृहतुः। सुबाहुमारीचाववलोक्य हृष्टो राक्षसोऽब्रवीत्—

' हन्त ! साध्विव संपन्नं विपर्यस्तो विधिर्भवेत्।
तद्वीक्ष्य कार्यपर्यन्तं माल्यवत्युपवेदये ॥' १६ ॥

ततश्च विश्वामित्रानुगताभ्यां रामलक्ष्मणाभ्यां गृहीतचापाभ्यां ते रक्षसी अन्वधाविष्टाम्।

[ २ ]

रावणमातामहो माल्यवान् यतः प्रभृति सर्वमायात् सिद्धाश्रमवृत्तान्तमश्रौषीत् तदारभ्य—

दूराद्बवीयो धरणीधराभं यस्ताटकेयं तृणवद् व्यधूनोत्।
हन्ता सुबाहोरपि ताटकारिः स राजपुत्रो हृदि तं बबाधे ॥ १७ ॥

तदनुप्लवानां च भूयसां लक्ष्मणेनैकेन वधोऽपि माल्यवतोऽत्यर्थं विस्मयमतानीत्। सोऽचिन्तयत्—

' वीर्योत्कर्षैर्यदमृतभुजां निर्ममे पद्मयोनि-
स्तस्य द्वैधं व्यधित धनुषः शाम्भवीयस्य रामः।
दिव्यामस्त्रोपनिषदमृषेर्यः कृशाश्वस्य शिष्या-
द्विश्वामित्राद्विजयजननीमप्रमेयः प्रपेदे ॥ १८ ॥

तथा च येन—

सीताबन्दीग्रहपरिभवस्तस्य राज्ञो निरस्तो
नीतं चास्मान्प्रति शिथिलतामैकमुख्यं सुराणाम्।
नान्दीदानप्रभृति हि कृतं मङ्गलं तैस्तदानीं
सर्वैः प्रायो भजति विकृतिं भिद्यमाने प्रतापे ॥' १८ ॥

एवं चिन्तयति माल्यवति शूर्पणखा तमुपयाता। साऽब्रवीत्—'मातामह! निर्वृत्तानि किल सीतारामयोः पाणिग्रहमङ्गलानि। अगस्त्यमहर्षिणा च रामाय मङ्गलकाल उपहारीकृतं माहेन्द्रं धनुः।'

तच्छ्रुत्वा परार्ध्यान्यायुधानि तानि रामे ब्रह्मर्षिभ्यः परिणमन्तीति माल्यवान् ततोऽप्यधिकमुद्विग्नः समजायत। सचिन्तं सोऽकथयत्—

'अमोघमस्त्रं क्षत्त्रस्य ब्राह्मणानामनुग्रहः।
दुरासदं च तत्तेजः क्षत्त्रं यद्ब्रह्मसंयुतम्॥'२०॥

शूर्पणखयाऽभिहितम्—'कथं मानुषमात्र एतावती चिन्ता?'
माल्यवानुवाच—'वत्से! मा मैवम्,

उत्पत्त्यैव हि राघवः किमपि तद्भूतं जगत्यद्भुतम्।
मर्त्यत्वेन किमस्य यस्य चरितं देवासुरैर्गीयते।
वस्तुष्वादधते च शक्तिमृषयो देवाश्च तर्कोत्तरा
मर्त्यादेव वरप्रदानसमये ब्रह्माभयं नो जगौ॥'२१॥

शूर्पणखोवाच—'कः सन्देहः। यथा दशमुखोऽपीषन्मुकुलैर्दृष्टिविशेषैरपह्नियमाणलोचनो नमद्वदनो वर्तते, तथा जानामि यद्दारुणोऽस्य हृदयदुर्मान एवं न विरमतीति।'

एवं चिन्तयति माल्यवति परशुरामसकाशं प्रेषितो वार्ताहरः पत्रमादायाऽऽगतः। पत्रे मुनिना लिखितमासीत्—'विदितमेतद्वो यदस्माभिर्दण्डकारण्यतीर्थस्योपासकेभ्यः प्रतिज्ञातमभयम्। तत्र विराधदनुकबन्धप्रभृतयः केऽप्यतिचरन्तीति श्रुतम्। तत्तान् प्रतिषिध्यास्माकं युष्मत्स्थितां

च माहेश्वरप्रीतिमनुरुध्यन्तां भवन्तः।

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।
जामदग्न्यश्च वो मित्रमन्यथा दुर्मनायते ॥' २२ ॥

एतं नु तदाकर्ण्य शूर्पणखयाऽभिहितम्—'ईषन्मसृणान्यपि गम्भीराणि वाक्यान्येतानि।'

माल्यवानुवाच—'अहो! किमुच्यते? जामदग्न्यः खल्वयम्।

अभिजनतपोविद्यावीर्यक्रियातिशयैर्निजै-
रुपचितमदः सर्वत्यागान्निरीहतया स्थितः।
व्यपदिशति नः शैवप्रीत्या कथञ्चिदनास्थया
प्रभुरिव पुनः कार्ये कार्ये भवत्यतिकर्कशः ॥' २३ ॥

पुनःस्तोकं विचिन्त्योवाच—

'यदि प्रपद्येत धनुःप्रमाथी शिष्यस्य शम्भोर्न तितिक्षते सः।
आयोधने चेदुभयोर्निघातः संरम्भयोगाददति हि प्रियं नः ॥' २४ ॥

अतः परशुरामस्योत्तेजनमेव कर्तव्यम्, यतो हि परमार्थतः परशुरामस्य पराभवमेव न प्रतीमः। तदुत्तिष्ठ मिथिलाप्रस्थापनाय जामदग्न्यमुत्तेजयावः।'

अथ माल्यवता शूर्पणखया च महेन्द्रद्वीपं गत्वा परशुराममन्युरुद्दीपितः। सोऽपि ततोऽविलम्बाज्जनकपुरीं संप्राप्तः। 'स्वगुरोः हरस्य धनुषो भङ्गेनाभिक्रुद्धः परशुरामो भवन्तमन्विष्यति' इति दासैर्विज्ञापितो रामः।

तदाकर्ण्य प्रहृष्टो रामोऽब्रवीत्—'त्रिपुरारिशिष्यः, वेदाभ्यासेन विशुद्धचरितः, भृगूणां वरिष्ठः, महाभाग्यमहानिधिः, जामदग्न्यो द्रष्टव्य एव। सोऽपि मां दिदृक्षुर्वर्तते।' परंतु नवोढा मुग्धा सीता भयातिशयात् स्वाभिजनोचितां लज्जां

विहाय स्नेहेन रामं निवारयितुमियेष । अन्याभिरपि सखीभिर्निषिद्धः स रघूद्वहः ।

रामेणाभिहितम्—'परावधीरणा वैरस्यमावहति ननूत्सवेषु ।'

सख्य ऊचुः—'ननु वारंवारं निःक्षत्रीकृतसमस्तजीवलोको निवर्तितविषयव्यवसायः परशुरामः श्रूयते ।'

रामस्य तु एभिरालापैः कुतो भयम् ? स उवाच—'किमेकदेशेन महाज्ञाननिधेर्माहात्म्यमपह्नियते ? य एषः—

उत्खातक्षितिपालवंशगहनास्त्रिःसप्तकृत्वो दिशः
कृत्वा विश्रुतकार्तिकेयविजयश्लाघ्यश्च बाह्वोर्बलात् ।
सद्वीपामथ काश्यपाय मुनये दत्त्वाऽश्वमेधे महीं
शश्वन्न्यस्तसमुद्रदत्तविषयं लब्ध्वा तपस्तप्यते ॥' २५ ॥

सखीसमेतां सीतामाश्वासयति राघवेन्द्रे परशुरामः 'क्व रामो दाशरथिः ?' इत्यालपन् कन्यान्तःपुरमेव प्रविष्टः ।

रामस्तमवलोक्याब्रवीत्—'अहो !

अयं स भृगुनन्दनस्त्रिभुवनैकवीरो मुनि-
र्यं एष निवहो महानिव दुरासदस्तेजसाम् ।
प्रतापतपसोरिव व्यतिकरस्फुरन्मूर्तिमान्
प्रचण्ड इव पिण्डतामुपगतश्च वीरो रसः ॥' २६ ॥

अथोपगतः परशुरामः । ज्योतिष्मान् कुठारस्तस्य कण्ठे तूणीरश्चांसे व्यराजेताम् । वपुषि च स जटाचापचीराजिनान्यधारयत् । तस्याक्षसूत्रेण परिवेष्टिते पाणौ बाणः पुस्फोर । तस्योग्रशान्तो वेषो वीरशान्तरसव्यतिकरवर्ती शोभामतनोत् ।

अथो अपसृत्यावगुण्ठनमारचयितुमुक्ता जानकी रघुकुलप्रदीपेन ।

मुनिमभ्युपयान्तमवलोक्य भीतां सीतां रघूद्वहोऽब्रवीत्–

'मुनिरयमथ वीरस्तादृशस्तत् प्रियं मे
विरमतु परिकम्पः कातरे ! क्षत्रियासि ।
तपसि विततकीर्तेर्दर्पकण्डूलदोष्णः
परिचरणसमर्थो राघवः क्षत्रियोऽहम् ॥' २७ ॥

ततः पार्श्वमुपेयुषा क्रुद्धेन परशुरामेणाभिहितम्—'हुम् ! अहो, दुरात्मनः क्षत्रियवटोरनात्मज्ञता । यद्यनेन शाम्भवीयं धनुं व्यारुजता करुणानिधेः शान्तात्मनो भगवतो भवानीपतेर्न त्रस्तं नाम तर्हि मदान्धतारकवधाद् विश्वस्य दत्तोत्सवस्तत्पुत्रः स्कन्दस्तस्मादनूनवत्सलस्तच्छिष्योऽहमेव वाऽनेन कथं विस्मृतिं नीतः ? एष एव मे प्रशमस्य कर्कशः परिणामः,

यत्क्षत्रियेष्वपि पुनः स्थितमाधिपत्यं
तैरेव संप्रति धृतानि पुनर्धनूंषि ।
उन्माद्यतां भुजबलेन मयाऽपि तेषा-
मुच्छृङ्खलानि चरितानि पुनः श्रुतानि ॥ २८ ॥

भो भोः परिष्कन्दाः ! क्व रामो दाशरथिः ?'

तच्छ्रुत्वा राघवेण भणितम्—'अयमहं भोः ! इत इतो भवान् ।'

विस्मयमुपेतेन परशुरामेणाभिहितम्—'साधु राजपुत्र ! साधु । सत्यमैक्ष्वाकः खल्वसि ।

अन्विष्यतः प्रमथनाय ममापि दर्पा-

दात्मानमर्पयसि जातिविशुद्धसत्त्वः ।

गन्धद्विपेन्द्रकलभः करिकुम्भकूट-

कुट्टाकपाणिकुलिशस्य यथा मृगारेः ॥' २६ ॥

रामरामणीयकमवलोक्य परशुरामस्य हृदयं मृद्विव समजायत । तथापि स दाशरथेर्वधार्हत्वं निश्चित्य रामं पुनरवोचत्—'भोः ! तिष्ठ क्षणम् । यावत् त्वां नामावशेषं विदधामि परशुनाऽनेन ।

रामः सधैर्यं बहुमानं निर्वर्ण्याब्रवीत्—'अयं स किल यः पुरा सपरिवारकार्तिकेयविजयावर्जितेन भगवता नील-लोहितेन तुभ्यं प्रसादीकृतः परशुः !'

परशुरामः पर्यालोचयत्—'आश्चर्यम् ! अन्य एवायं प्रकारः । निष्कारणमेवात्र माहात्म्यं सौजन्यञ्च । अत्र हि उत्साहसंरम्भगम्भीरं पौरुषम् ।' ततः सोऽब्रवीत्—'आं दाशरथे ! स एवायमाचार्यपादानां प्रियः परशुः ।'

सख्यः परस्परमूचुः—'क्षणं तु प्रसन्नरोषस्येवाऽऽलापः ।'

रामोऽब्रवीत्—'अतश्च भगवन् ! द्यावापृथिव्योर्विततस्ते वीरवादः । किं च परशुराम इति श्रुतिरपि तेऽनेनैव दीप्तिं गता ।'

एतदाकर्ण्य सखीभिरभिहितम्—'जानाति महाभागो गुरुषु रमणीयं मन्त्रयितुम् ।'

रामस्य वचोभिरावर्जितः परशुरामो बभाषे—

'राम ! राम ! नयनाभिरामतामाशयस्य सदृशीं समुद्वहन् ।

अप्रतर्क्यगुणरामणीयकः सर्वथैव हृदयङ्गमोऽसि मे ॥' ३० ॥

कुमार ! वत्सो मे सत्यं ब्रवीमि परिरब्धुमिवेच्छति त्वाम् ।

तदाकर्ण्य हृष्टाः सख्यः सीतामुक्तवत्यः—'भर्तृदारिके ! प्रेक्षस्व, प्रेक्षस्व भर्तुः सौभाग्यम् । त्वं खलु नित्यं परिमुख्यात्मानं वञ्चयसि ।'

सीता तु साम्रा निःश्वस्य तूष्णीमेवातिष्ठत् ।

रामोऽब्रवीत्—'भगवन्, परिरम्भणम् ? प्रस्तुतप्रतीपमेतत् !'

सीतयाऽभिहितम्—'धीरमसृणो माहात्म्यशोभितोऽस्य विनयः ।'

अथ बलवत् प्रह्वीभूतमानसो भार्गवोऽचिन्तयत्—'अहो ! सौजन्यपूतमन्तःकरणं राजन्यपोतस्य । न ज्ञायते, कोऽयमप्राकृतचरितः सामर्थ्यसारसमुदायमयः कुमारः । किञ्च,

संभाव्यसप्तभुवनाभयदानपुण्य-
संभारमस्य वपुरत्र हि विस्फुरन्ति ।
लक्ष्मीश्च सात्त्विकगुणज्वलितं च तेजो
धर्मश्च मानविजयौ च पराक्रमश्च ॥ ३१ ॥

अयं हि

त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः
क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोशस्य गुप्त्यै ।
सामर्थ्यानामिव समुदयः सञ्चयो वा गुणानां
प्रादुर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः ॥' ३२ ॥

एवं चिरं संभाव्य परशुरामेणाभिहितम्—'हे भवत्यः ! प्रविशत्वियं वधूरभ्यन्तरमेव ।'

इदानीं धनुष्पाणिः सीरध्वजो जनकः शतानन्दश्चागच्छन्तौ अदृश्येताम् । तौ अवलोक्यः सख्यः

समाश्वसिताः। रामस्य विजयं कामयमाना सीता प्राञ्जलिः संग्रामश्रियमभिवाद्य सह सखीभिरभ्यन्तरं प्रविष्टा।

परशुरामः पुनरभणत्—'सद्वृत्त एषः। तथापि क्षत्रिय इति शिरःशूलमुत्कोपयति।'

रामो निजगाद—'किमित्यतिबाष्पायितं भगवता?'

परशुरामेणोक्तम्—'न किञ्चित्। किं तु,

संभूयैव सुखानि चेतसि परं भूमानमातन्वते
यत्राऽऽलोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवः।
स त्वं नूतन एव कङ्कणधरः श्रीमान् प्रियश्चेतसो
हन्तव्यः परिभूतवान् गुरुमिति प्रागेव दूयामहे॥' ३३॥

राम उवाच—'भार्गव! ज्ञायते मामनुकम्पस इति।'

परशुरामेणाभिहितम्—'अरे! किमुद्भ्रान्तोऽसि?

अमृताध्मातजीमूतस्निग्धसंहननस्य ते।
कुठारः कम्बुकण्ठस्य कष्टं कण्ठे पतिष्यति॥' ३४॥

रामेण पुनरभिहितम्—'आः! सत्यमेव करुणया परिक्षिप्तोऽसि।'

परशुरामो मन्त्रयामास—'मय्येव भ्रुकुटीधरः संवृत्तः। अरे क्षत्रियडिम्भ! त्वं किल शिशुर्नववधूटिकापरिग्रहः सुन्दर इत्यपूर्वमुपतप्यतेऽस्माभिः।

सुप्रसिद्धः प्रवादोऽयमितिहेतीह गीयते।
जामदग्न्यः स्वयं रामो मातुर्मूर्धानमच्छिनत्॥ ३५॥

अपि च। रे मूढ!

उत्कृत्योत्कृत्य गर्भानपि शकलयतः क्षत्रसंतानरोषा-
दुद्दामस्यैकविंशत्यवधि विशसतः सर्वतो राजवंश्यान्।

पित्र्यं तद्रक्तपूर्णह्रदसवनमहानन्दमन्दायमान-
क्रोधाग्नेः कुर्वतो मे न खलु न विदितः सर्वभूतैः स्वभावः ॥' ३६ ॥

रामेणाभिहितम्—'नृशंसता हि नाम पुरुषदोषः। तत्र का विकत्थना ?'

रोषमुपगतः परशुरामोऽब्रवीत्—'आ निर्भयक्षत्रियवटो ! अति नाम प्रगल्भसे।

प्रहर नमतु चापं प्राक्प्रहारप्रियोऽहं
मयि तु कृतनिघाते किं विदध्यात् परेण।
झटिति विततवह्नयुद्गारभास्वत्कुठार-
प्रविघटितकठोरस्कन्धबन्धः कबन्धः ॥' ३७ ॥

अथ काले जनकशतानन्दौ तत्र संप्राप्य परशुरामेण सहाऽऽलापमारब्धवन्तौ। ताभ्यां कङ्कणमोचनाय रामोऽन्तःपुरं प्रवेष्टुमुक्तः। जामदग्न्यानुमतः स तत्र जगाम।

जनकशतानन्दौ च भार्गवं वसिष्ठविश्वामित्रयोराश्रमपदं निन्यतुः।

[ ३ ]

अथ वसिष्ठविश्वामित्रौ जामदग्न्यं बोधयितुं व्यवसितौ। तावूचतुः—'भार्गव !

इष्टापूर्तविधेः सपत्नशमनात् प्रेयान्मघोनः सखा
येन द्यौरिव वज्रिणा वसुमती वीरेण राजन्वती।
यस्यैते वयमग्रतः किमपरं वंशश्च वैवस्वतः
सोऽयं त्वां तनयप्रियः परिणतो राजा शमं याचते ॥ ३८ ॥

तद्विरमास्माच्छुष्ककलहात्।'

स प्रत्युवाच—'अत्र वो विज्ञापयामि। किं न क्षमे यदि राम एतादृशः प्रकृष्टवीर्यो न स्यात्। पश्यन्तु भवतः। शिशुरपि रामोऽद्भुतैः कर्मभिः ख्यातः। ततो भार्गवः गुरोः धनुर्भङ्गजनितां महतीं तिरस्क्रियां प्राप्यापि कथं तूष्णीं तिष्ठेत्? सुलभद्वेषं हि वीरव्रतम्।

यशसि निरवकाशे विश्वतः श्वेतमाने
कथमपि वचनीयं प्राप्य यत्किञ्चिदेव।
कृतविततिरकस्मात्प्राकृतैरुत्तमानां
विरमति न कथाञ्चित्कश्मला किंवदन्ती ॥' ३९ ॥

वसिष्ठोऽब्रवीत्—'अयि वत्स, किमनया यावज्जीवमायुधपिशाचिकया। श्रोत्रियोऽसि जामदग्न्य! पूतं भजस्व पन्थानम्। आरण्यकश्चासि। तत्परिचिनु चित्तप्रसादनीश्चतस्रो मैत्र्यादिभावनाः। पश्य,

परिषदियमृषीणामत्र वीरो युधाजि-
त्सह नृपतिरमात्यैर्लोमपादश्च वृद्धः।
अयमविरतयज्ञो ब्रह्मवादी पुराणः
प्रभुरपि जनकानामद्रुहो याचकास्ते ॥' ४० ॥

परशुरामोऽब्रवीत्–'एवमेतत्। किन्तु, शत्रुमूलमनुत्खायाहमाचार्यं त्र्यम्बकं देवं पुनर्द्रष्टुं नोत्सहे।'

विश्वामित्र उवाच—'यदि गुरुष्वनुरुध्यसे चेतयस्वेमावपि ततः किञ्चित्।

हिरण्यगर्भादृषयो बभूवुर्वसिष्ठभृग्वङ्गिरसस्त्रयो ये।
सोऽयं वसिष्ठो भृगुनन्दनस्त्वमेषोऽपि तस्याऽऽङ्गिरसः प्रपौत्रः॥'४१॥

एवं सर्वैः बोध्यमानोऽपि परशुरामो न प्रत्यपद्यत कस्यापि वचः। स शशंस—

'प्रायश्चित्तं चरिष्यामि पूज्यानां वो व्यतिक्रमात्।
न त्वहं दूषयिष्यामि शस्त्रग्रहमहाव्रतम्॥ ४२॥

यतश्चेदं शस्त्रग्रहव्रतं निसर्गेणैव मोक्षादपि प्रियमस्ति। यूयं शरासनज्याकिणैर्लाञ्छितं मे कर्कशं भुजं पश्यथ।'

वसिष्ठेन स्वमनस्यतर्कि—

'कामं गुणैर्महानेष प्रकृत्या पुनरासुरः।
उत्कर्षात् सर्वतोवृत्तेः सर्वाकारं हि दृप्यति॥' ४३॥

विश्वामित्रः पुनः बोधयन्नब्रवीत्—'वत्स! शृणु। प्रागेकव्यक्त्यपराधकोपविकृतस्त्वं त्रिःसप्तकृत्वः निखिलक्षत्रजातेरपि विनाशमकरोः। तदा वृद्धैश्च्यवनादिभिर्ऋषिभिः कथञ्चिन्नियमित आसीः। तन्मा कुप्य।'

परशुरामोऽब्रवीत्—'व्यरंसिषमेव पितृवधप्रयुक्तात् क्षत्रवधात्।

नूनं मया नियमितश्च्यवनादिवाक्यैः
कोपानलश्च परशुश्च पुनर्यथैतौ।
देवस्य संप्रति धनुर्मथनेन सत्य-
मुत्थापितौ रघुसुतेन तथा प्रसह्य॥ ४४॥

एकस्य राघवशिशोः कृतचापलस्य
कृत्वा शिरो मयि वनाय पुनः प्रयाते।
स्वस्थाश्चिराय रघवो जनकाश्च सन्तु
माभूत्पुनर्बत कथञ्चिदतिप्रसङ्गः॥' ४५॥

एतानि वचांस्याकर्ण्यातीव क्रुद्धः शतानन्दोऽब्रवीत्—

'आः, शक्तिरस्ति कस्य वा विदेहराजन्यस्य राजर्षेर्याज्यस्य मे प्रेयसश्छायामप्यवस्कन्दितुम्, किं पुनर्जामातरम् ? यदि स्थितेष्वस्मासु गृहमेधिनां गृहेऽन्यस्मात् परिभव उपैति, तर्हि धिगस्तु अस्माकमङ्गिरसः कुलम् ।'

जामदग्न्य उवाच—'गौतम ! त्वयेव बहुभिः क्षत्रिय-पुरोहितैर्ब्रह्मतेजसा स्फुरितमासीत् । किन्तु प्राकृतानि तेजांस्यप्राकृते ज्योतिषि शाम्यन्ति ।'

अथ महता कोपेनाविष्टः शतानन्दोऽब्रवीत्—'अरे अनड्वन्! पुरुषाधम ! निरपराधराजन्यकुलकदन ! महापातकिन् ! अशिष्ट! विकृतवेष! बीभत्सकर्मन्! अपूर्वपाषण्ड! काण्डीर! काण्डपृष्ठ ! कथमस्यामपि दिशि प्रगल्भसे ? ब्राह्मणाधमः खल्वसि त्वम् ।'

परशुरामोऽब्रवीत्—'आः, स्वस्तिवाचनिक ! दुष्ट ! सामन्तपुरोहित ! अपि च रे अहल्यायाः पुत्र ! तवाहं काण्डपृष्ठः ?'

अथ शतानन्द इमं भृगुवंशपांसनं शप्तुं व्यवसितः । परन्तु वसिष्ठेन कथमपि प्रशमय्य बहिः प्रेषितः ।

परशुरामस्तु तदाऽपि प्रलपन्नेवातिष्ठत् । उवाच—'पश्यत बटोः क्षत्रियावष्टब्धस्य गर्जितानि ! तत्किमनेन । भो भोः कोसलविदेहेश्वरप्रसादोपजीविनो ब्राह्मणाः ! सप्तद्वीपकुलपर्वतगोचराश्च सर्वक्षत्रियाः ! वदामः,

तपो वा शस्त्रं वा व्यवहरति यः कश्चिदिह वः
स दर्पादुद्दामास्त्विपमसहमानः स्खलयतु ।

अरामां निःसीरध्वजदशरथीकृत्य जगती-
मतृप्तस्तत्कुल्यानपि परशुरामः शमयति ॥' ४६ ॥

अथागतो जनकः परशुरामं भर्त्सयन्नुवाच—'भार्गव भार्गव! अति हि नामावलिप्यसे। यद्यपि मे सहजं क्षात्रं तेजः प्रशान्तमस्ति तथापि तत्पुनः प्रत्युद्भूय मां कार्मुक-कर्मणि नियुनक्ति।'

परशुरामोऽब्रवीत्—'भो जनक!

त्वं ब्रह्मण्यः किल परिणतश्चासि धर्मेण युक्त-
स्त्वां वेदान्तेष्वचरममृषिः सूर्यपुत्रः शशास।
इत्याचारादसि यदि मया प्रश्रयेणोपजुष्ट-
स्तत्किं मोहादविदितभयः कर्कशानि ब्रवीषि?' ४७ ॥

जनक उवाच—'अण्डभेदनं क्रियते, प्रश्रयश्चेति। तत् युज्यत एव त्वयि मे धनुषो नमनव्यवसायः। नाऽन्या गतिः सांप्रतम्।'

परशुरामोऽपि सरोषहासमूचे—'किमात्थ? भो भो धनुर्धनुरिति। अहो आश्चर्यम्! ममापि खलु रिपुशिरः-शाणशातः परशुः सज्ज एव।'

अथ जनको धनुरारोपयितुमेवोपक्रान्तः। तदानीमेव तत्र संप्राप्तः दशरथः। तेन ब्राह्मणे धनुरारोपणान्निषिद्धो वैदेहः।

जनकोऽब्रवीत्—'सखे महाराज दशरथ!

अस्मानधिक्षिपतु नाम न किञ्चिदेतत्!
कस्य द्विजे परुषवादिनि चित्तभेदः।

वत्सस्य मङ्गलविरुद्धमयं तु पापः
कर्णे रटन् कटु कथं नु बटुर्विषह्यः ?' ४८ ॥

परशुरामेणाभिहितम्—'आ दुरात्मन् क्षत्रियापसद ! मामेवं बटुरित्यधिक्षिपसि । तिष्ठ, अधुनैव परशुना पशुमिव त्वां पर्वशो शृणामि ।'

अथ दशरथोऽब्रवीत्—'भो भार्गव ! अस्मन्मित्रपरिभवैर्वयं सर्वथैव ननु दुःखमास्महे । अतस्त्वं न क्षंस्यसे ।'

परशुरामोऽब्रवीत्—'भोः ! त्वमप्यपरः प्रभविष्णुरिव मामवस्कन्दयसि । चेतयस्व, प्रकृत्यैव स्वतन्त्रः रामोऽस्मि जामदग्न्यः । क्षत्रियश्च भवान् ।'

दशरथोऽब्रवीत्—'अतः खलु नोपेक्ष्यसे त्वम् ।

दुर्दान्तानां दमनविधयः क्षत्रियेष्वायतन्ते
दुर्दान्तस्त्वं वयमपि च ते क्षत्रियाः शासितारः ।
सद्यः शान्तो भव किमपरं दम्यसे चाधुनैव
क्व ब्रह्माणः प्रशमनपराः क्षत्रधार्यं क्व शस्त्रम् ॥' ४९ ॥

परशुरामेण विहस्योक्तम्—'चिरस्य खलु कालस्य जामदग्न्यः सनाथो वर्तते यस्य यूयं क्षत्रिया विनेतारः ! ननु ब्रवीमि,

धर्मे ब्रह्मणि कार्मुके च भगवानीशो हि मे शासिता
सर्वक्षत्रनिबर्हणस्य विनयं कुर्युः कथं क्षत्रियाः ।
संबन्धस्तु वसिष्ठमिश्रविषये मान्यो जरायां न तु
स्पर्धायामधिकः समश्च तपसा ज्ञानेन चान्योऽस्ति कः ॥५०॥

अथो प्राप्तस्तत्र रामः । तथा च सर्वथाऽनिवार्यमभूद्युद्धमिदानीम् ।

परशुरामो रामं युद्धायाऽऽह्वयन्नभिहितवान्—'एहि मन्ये राजपुत्र ! जामदग्न्यं विजेष्यसे।' पुनश्च सस्मितमुवाच—'नहि विजेष्यसे। दुर्दान्तो हि रेणुकातनयस्त्वदन्तकः।'

[ ४ ]

परशुरामं रामेण विजितं विज्ञाय देवा मङ्गलानि प्रावर्तयन्त। तदवलोक्य पर्याकुलौ शूर्पणखामाल्यवन्तौ। अथ माल्यवानुवाच—'पुत्रि। दृष्टस्त्वया दिवौकसामेकायनीभावः, यदिन्द्रादयः स्वतो बन्दित्वमुपागताः। संप्रत्येव मम चारैर्निवेदितमस्ति यथा, "या सा राज्ञा दशरथेन प्राक्प्रतिश्रुतवरद्वया भरतमाता कैकेयी, तया मन्थरा नाम परिचारिका दशरथस्य वार्ताहारिणी मिथिलामयोध्यातः प्रेषिता मिथिलोपकण्ठे वर्तते" इति। तस्यास्त्वया शरीरमाविश्यैवमेव च कर्तव्यम्।' अथ माल्यवान् तस्याः कर्णे किमप्यकथयत्।

शूर्पणखाऽब्रवीत्—'किमन्यथा करिष्यत्येवं रामः?'

माल्यवताऽभिहितम्—'भिद्यते न सद्वृत्तं इक्ष्वाकुवंशे विशेषतस्तादृशस्य विजिगीषोः।'

शूर्पणखोपक्रमस्य तस्योदर्कानपृच्छत्। माल्यवतोक्तम्—'ततोऽनेन योगाचारन्यायेन दूरमाकृष्य रक्षसामङ्कमुपनीतं विन्ध्यकान्तारेष्वदेशज्ञं लुप्तप्रभुशक्तिं रामं छद्मनाऽतिसंधातुं शक्ष्यामः। अनिवर्तनीयश्च रावणस्य सीतास्वीकारग्रहः। स चैवमीषत्करः। ततश्च

हृतजानिररातिभिः सलज्जो यदि मृत्युः शरणं ततोऽन्यथा तु।
अदितो मृत एव निष्प्रतापः परितप्तो यदि वा घटेत संधौ ॥२१॥

उत्तिष्ठेत वधाय नः परिभवप्रेद्धेन चेन्मन्युना
नेष्टे तत्प्रसरं निरोद्धुमुदधिस्तिग्मांशुवीर्यो हि सः ।
किंतु प्राक्प्रतिपन्नरावणसुहृद्भावेन भीमौजसा
शत्रुर्वज्रधरात्मजेन हरिणा घोरेण घानिष्यते ॥ ५२ ॥

परं पुत्रि ! अनेन प्रसङ्गेन बह्वनुसंधातव्यम् । तद्यथा । विभीषणः रावणस्य सहजः प्रत्यासन्नश्च शत्रुः । तं चानुरताः प्रकृतयः । ये च खरदूषणप्रभृतयस्ते कुलाचारेण रावणमुपतिष्ठन्ते खलु, परं ते वत्सेनेव राजानमर्थान् दुहन्ति। तदिदमन्तर्भेदजर्जरं राजकुलमभियुक्तमात्रं रामेण भिद्यते । तत्प्रथमं तावत् विभीषणः प्रतिविधेयः । तत्र प्रकाशदण्डस्त्वयुक्तः । तस्य कारागृहबन्धनं नगरान्निर्वासनमपि तथैव न युज्यते । तथा सति हि प्रकृतयो विकुर्युः । तूष्णींदण्डमपि प्राज्ञा लिङ्गेन ज्ञास्यन्ते । ततश्चायं दण्डः प्रकृतिकोपको रामेणाभियोगे कृते सति दुरन्तः स्यात् । विभीषण मित्राणि खरप्रभृतयः प्रागेव चिन्त्याः । अथवा प्राज्ञोऽसौ विभीषणोऽवेक्षितविकारः स्वयमेवापसर्पेत् । तत उपेक्षणीय एवास्माभिः । न चैवं मन्तव्यमौरसाद्भयमिति । यतः,

बाल्यात्प्रभृत्येव निरूढसख्यं सुग्रीवमेष ध्रुवमाश्रयेत ।
वालिप्रसादीकृतभूमिभागे कुमारभुक्तौ स्थितमृष्यमूके ॥ ५३ ॥

तत्रस्थश्च वालिना घानिष्यते । रामोपाश्रयेण रामोपश्लेषेण वा नोपेक्षेत वाली ।'

शूर्पणखोवाच—'अथ परशुरामविजेता राघवो वालिनमपि व्यापादयति तदा रामविभीषणसंयोगोऽनर्थ इति संभावयामि ।'

एतदाकर्ण्य माल्यवतोक्तम्—'ननु वत्से !

यो वालिनं हन्ति हता वयं च तेन ध्रुवं तत्र तु सर्वनाशे ।
एकः स जीव्यात्कुलतन्तुरस्मै रामः श्रियं धर्ममयो ददातु ॥'५४॥

माल्यवतोऽप्रत्यक्षायतेव रावणादीनां विनाशः। परं तत् प्रतिबद्धुमात्मनोऽक्षमतां वीक्षमाणः स शूर्पणखां स्वकार्य-साधनाय प्राहिणोत्।

अन्यतश्च राघवपरशुरामयोः संघर्षमवलोक्य परितुष्टाः वसिष्ठजनकादयः। महत्यः खलु तेषां विजेतरि सम्भावनाः। रघूद्वहविक्रमगतमालपतामेव तेषां स वीरो भार्गवेण समं तत्राऽऽपतितः। जितश्चाचिराद्दाशरथिना परशुरामः।

आयोधने विहितस्य विनयापचारस्य राघवेण क्षमां याचितः स क्षत्रारातिरब्रवीत्—'अपराद्धं किं त्वया जाम-दग्न्यस्य। ननूपकृतमेव।

पुण्या ब्राह्मणजातिरन्वयगुणः श्लाघ्यं चरित्रं च मे
येनैकेन हतान्यमूनि हरता चैतन्यमात्रामपि ।
एकः सन्नपि भूरिदोषगहनः सोऽयं त्वया प्रेयसा
वत्स ! ब्राह्मणवत्सलेन शमितः क्षेमाय दर्पामयः ॥'५५॥

ततः परशुरामो जनकदशरथादीनुपेत्याब्रवीत्—

'स एष रामः सौम्यत्वादचण्डश्चण्डशासनः ।
यस्य प्रतिष्ठितं जैत्रं जामदग्न्येऽपि शासनम् ॥' ५६ ॥

अथ रामो सर्वान् संनिहितान् प्रणनाम तैः परिष्वक्तश्च। ततः भार्गवोऽपि वसिष्ठविश्वामित्रादीन् ववन्दे पूर्वमाचरित-स्याविनयस्य क्षमां च ययाचे। स नृपती अप्यस्तोकं शश्लाघे।

अथ वसिष्ठविश्वामित्रौ सर्वैरनुमतौ निजाश्रमपदं जग्मतुः। अनन्तरं स्वप्रस्थानवेलायां परशुरामेण रामाय स्वधनुर्दण्डकारण्ये निवसतां तपस्विनां रक्षणाधिकारेण समं समर्पितम्।

रामस्तदा 'अपि नामान्येन केनचिदुपायेन दण्डकारण्यं प्रतिष्ठेयम्' इत्यभिलाषुकस्ततः 'कथं च रामप्रियाद्गुरुजनादेवं स्यात्।

न्यस्तशस्त्रे भृगुपतौ परतन्त्रे तथा मयि।
कष्टमुत्सारिताः क्रूरैर्यातुधानैस्तपोधनाः॥' ५७॥

इति विचिन्त्य तपस्विनोऽनुचकम्पे।

तदा लक्ष्मणो शूर्पणखयाऽऽविष्टगात्रां मन्थरां रामस्याभ्याशं निनाय। विहितावेशा राक्षसी राममवलोक्यैव समाक्षिप्तचित्ताऽजायत।

रामस्तां दृष्ट्वा मध्यमाम्बायाः कुशलं पप्रच्छ। मन्थरयोक्तम्—'कुशलं सुखं च। वत्स! सा सदा प्रस्नुतस्तनी मध्यमा ते माता परिष्वज्याऽऽज्ञापयति, "पुत्रक! पुरा प्रतिज्ञातौ द्वौ वरौ महाराजं ज्ञापयामि। तत्र मे विज्ञप्तिहारको भव।" एष ते तातस्य कार्यलेखः।'

लक्ष्मणेन पत्रं गृहीत्वा वाचितम्। तद्यथा—

'अस्त्वेकेन वरेण वत्सभरतो भोक्ताऽधिराज्यस्य ते
यात्वन्येन विहाय कालहरणं रामो वनं दण्डकाम्।
तस्यां चीरधरश्चतुर्दशसमास्तिष्ठत्वसौ तं पुनः
सीतालक्ष्मणमात्रकात्परिजनादन्यो न चानुव्रजेत्॥' ५८॥

तदाकर्ण्य हृष्टमना राघवोऽवादीत्—

'तत्रैव गमनादेशो यत्र पर्युत्सुकं मनः ।
न चेष्टविरहो जातः स च वत्सोऽनुजोऽनुगः ॥' ५९ ॥

एतदाकर्ण्य लक्ष्मण उवाच—'दिष्ट्याऽनुमोदितोऽहमार्येण।' अथ रामेण मन्थराऽभिहिता—'आर्ये मन्थरे! प्रस्थितोऽस्मि।' किमतः परमपरमभीष्टं स्यान्मन्थराकारतया दृश्यमानायाः शूर्पणखायाः। सा सद्य एव प्रतिनिवृत्ता।

ततो मातुलेन युधाजिता सह भरतो दशरथसकाशं जगाम। तावुभौ प्रकृतीनामिच्छामनुरुध्य रामस्य राज्येऽभिषेकाय महीपतिं विज्ञापितवन्तौ। पङ्क्तिरथस्तु प्रागेवात्र समुत्सुकमना अभूत्। अभिषेकाय जनकेनापि प्रेरितेन तेन 'अयं जामदग्न्यविजयोत्सवः प्रसज्यतामभिषेकमहोत्सवेन। यो यदर्थी महोत्सवेऽस्मिंस्तत्तस्मै दीयताम्' इत्यादिष्टम्।

अनुकूलं कालमालोक्य काकुत्स्थः प्रणम्याऽऽमन्त्रितवान्—'अहं तावदर्थी

योऽसौ वरद्वयन्यासस्तं माता मेऽद्य मध्यमा।
यथेष्टं नाथते तात! त्वत्प्रसादार्थिनो वयम् ॥' ६० ॥

दशरथः प्रत्युवाच—

'सत्यसंधा हि रघवः किं वत्स! विचिकित्ससि।
त्वयि दूतेऽपि कस्तस्याः प्राणानपि धनायति ॥' ६१ ॥

ततो लक्ष्मणेन वाचितं वाचिकमाकर्ण्य मूर्च्छितो दशरथः। गुरुं समाश्वास्य रामेण सीतामानेतुं नियुक्तो लक्ष्मणः प्रतस्थे।

उपप्लवं तमवलोक्य पर्याकुलो भरतो मातुलमब्रवीत्—'मातुल! मातुल! युक्तं सदृशमेतद्वो गृहस्य।' प्रतिपत्तिमूढोऽवर्तिष्ट युधाजिन्न किमपि प्रतिवक्तुं शशाक।

अथ सीतामादाय लक्ष्मणः संप्राप्तः। सह सीतया रामलक्ष्मणौ गुरुजनान् प्रदक्षिणीकृत्य वनाय प्रस्थितौ। तान् गच्छतोऽवलोक्य युधाजिदपि द्रागुत्थायताननुगन्तुमारेभे। भरतोऽपि सहैव प्रस्थितः।

युधाजितोक्तम्—'रामभद्र! अवेक्षस्व पादपरिचारकमरण्यानुगतं भरतम्।'

रामोऽब्रवीत्—'नन्वस्यापि वर्णाश्रमरक्षणे नियोगः।'

भरतो बभाण—'लक्ष्मणस्य वा शत्रुघ्नस्य वा तद्भवतु।'

रामोऽवोचत्—'शक्यं नाम मयि तिष्ठति त्वयाऽन्येन वा पितृनियुक्तमुल्लङ्घयितुम्।'

जीवितनिरपेक्षो भरतस्तु मूर्छामुपजगाम।

अथ पुनरपि युधाजिता समाश्वासितो भरतस्तेनैवोपदिष्टो रामस्य तपनीयोपानद्युगं शरभङ्गप्रेषितं गृहीत्वोवाच—

'नन्दिग्रामे जटां बिभ्रदभिषिच्याऽऽर्यपादुके।
पालयिष्यामि पृथिवीं यावदार्यो निवर्तते'॥ ६२॥

ततश्च रामसीते प्रदक्षिणीकृत्य स प्रतिनिवृत्तः।

रामस्य वनगमनवृत्तान्तमुपलभ्य प्रजा महता शोकेनाभिभूताः। बहवो जनाः राममनुगन्तुं व्यवसिताः। युधाजिदपि सहैव रामेण गच्छति स्म। रामेण ते कथमपि प्रबोध्य निवर्तिताः। प्रजाः निवर्तयितुकामो युधाजिद् रुदन् प्रतिनिवृत्तः।

शृङ्गवेरपुरवास्तव्येन निषादपतिना गुहेन विराधराक्षसस्य दुर्विलसितं कथितमासीत्। तस्मात् सीतारामलक्ष्मणाः पूर्वं विराधहतकोन्मथनाय मन्दाकिनीपवित्रमेखलं

चित्रकूटाचलमुपेत्य मुनीन् दिदृक्षवस्तत्र प्रस्थिताः । तत्रत्यान् राक्षसान् निहत्य ततो दण्डकारण्यं प्राप्य संनिहितगृध्रराजं जनस्थानं गन्तुं चाभूत्तेषामभिलाषः।

[ ५ ]

अथ कदाचिज्जटायुर्निजज्येष्ठभ्रातरं संपातिं द्रष्टुं मलयपर्वतं जगाम । तौ चिरं सस्नेहमालेपतुः । संपातिः पप्रच्छ—'वत्स जटायो ! कालविप्रकर्षान्मन्दीभूतपितृशोको रामभद्रः ?'

जटायुनाऽभिहितम्—

'तस्य विद्यातपोवृद्धसंयोगः स्वा च धीरता ।
न्याय्यो रक्षाधिकारश्च दौर्मनस्यं व्यपोहति ॥ ६३ ॥

अथेदानीमगस्त्यवचनात् स पञ्चवट्यां प्रतिवसति। तत्र चैकदा रघुवृषं वृषस्यन्ती शूर्पणखा प्राप्ता।

एतदाकर्ण्य साश्चर्यं संपातिरुवाच-'अहो निर्मर्यादता !'

जटायुरब्रवीत्—'लक्ष्मणेन तस्याः कर्णनासोष्ठं कर्तितम्। अथ परैरभियुक्तेनैकेनैव रामेण,

चतुर्दशसहस्राणि चतुर्दश च राक्षसाः ।
त्रयश्च दूषणखरत्रिमूर्धानो रणे हताः ॥' ६४ ॥

संपातिनोक्तम्—'महत्पुनरपावृतं वैरद्वारम् । तद्वत्स जटायो ! नास्मिन्नवसरे सीतारामलक्ष्मणास्त्वया क्षणमपि मोक्तव्याः। सोदर्यायाः स्वसुर्वैरूप्यं प्रतिकर्तुमवश्यं यतिष्यते रावणः।'

अथ रामप्रभृतीनां रक्षार्थं संपातिना प्रेरितो जटायुः प्रतिन्यवर्तत। मार्गे तेन जनस्थानमध्यगे प्रस्रवणे नाम्नि

गिरौ पञ्चवटी दृष्टा। ततः पश्यन् सोऽब्रवीत्—

'दूरं हृतश्चित्रमृगेण रामस्तया दिशा धावति लक्ष्मणोऽपि।
ततः परिव्राडुटजं प्रविष्टो धिग्व्यक्तरूपो दशकन्धरोऽयम् ॥' ६५ ॥

तदानीमेव रावणः परःसहस्रैः पिशाचवदनैः खरैरायुक्तं रथं सीतामारोप्य क्वापि गन्तुं प्रवृत्तः। तद् दृष्ट्वा न जटायुस्तूष्णीं स्थातुमशक्नोत्। स रावणमुच्चैराहूयाब्रवीत्—'पौलस्त्य! पौलस्त्य! धिक् त्वाम्। त्वं भगवतो वेदस्य रक्षकाणां गृहे जातोऽपि दुश्चरितमीदृशमाचरसि। अपमृष्टं खलु त्वया त्रिलोकीविजयसंभवं सद्यशः।'

जटायुर्यथाशक्ति सीतां रक्षितुं प्रयत्नवान् परं सर्वथापि वितथोऽभूत् तत्प्रयासः। रावणोऽसिना पक्षसी छित्त्वा तमसमर्थमकरोत्। अथ सीतामादाय प्रणष्टः स दुरात्मा।

यदा रामलक्ष्मणौ पर्णकुटीं प्रतिनिवृत्तौ तदा सीतामपश्यन्तौ भृशमखिद्येताम्। भ्रातृजायान्वेषणपरं लक्ष्मणं विलोक्य कण्ठगतप्राणो गृध्रराजः

'यामोषधिमिवायुष्मन्! विचिनोषि महावने।
सा सीता मम च प्राणा रावणेनोभयं हृतम् ॥' ६६ ॥

इत्येतदभिधाय वीरलोकानधिष्ठितवान्। ततस्तस्य चरमो संस्कारो यथाविध्यनुष्ठितो राघवयुगलेन।

तत्परिभवप्रसङ्गं प्रतिविधातुं विहितनिश्चयौ तावग्रतो जग्मतुः। व्यतीते कस्मिंश्चित् काले प्रतिभयमरण्यं वीक्ष्य लक्ष्मणेन भणितम्—'नूनमयमसौ जनस्थानपश्चिमो कुञ्जरवान्नाम दनुकबन्धाधिष्ठितो दण्डकारण्यभागः।' अथ रामोऽपि तं कान्तारमरड्कं द्रष्टुमुत्कतां स्वकां प्रकटयामास।

अनवसितवचासि राघवे दुरात्मना राक्षसकबन्धेनाऽऽकृष्यमाणाया रामान्वेषिण्याः शबरतापस्याः शब्दोऽश्रूयत । रामस्तत्साहाय्यार्थं लक्ष्मणमादिदेश । निर्गतो लक्ष्मणोऽचिरादेव शबरीद्वितीयो रामस्य पुरस्तात् समुपतस्थे ।

शबरी न्यवेदयत्—'यदैव दैवात् खरदूषणत्रिशिरसो विनिहतास्तदैव बन्धुभ्यः कस्मादपि हेतोरवगृह्य विभीषणः सुग्रीवसख्यादृष्यमूके वर्तते । तस्यायमात्मसमर्पको लेखः ।' अथो लक्ष्मणेन वाचितं

'विशिष्टभागधेयानां द्वयी नः परमा गतिः ।
धर्मः प्रकृष्यमाणो वा गोप्ता धर्मस्य वा भवान् ॥' ६७ ॥

इति विभीषणलेखं कर्णे विधाय रघूद्वहस्तन्नामधेयं लङ्केश्वरशब्देन विशेषयन् तद्राज्याधिरोपणसंकल्पमाविर्भावयामास । तद्विज्ञायाऽऽसादितो हर्षप्रकर्षः शबर्या ।

लक्ष्मणोऽनुयुयुजे—'आर्ये श्रमणे ! अपि विभीषणसंपर्कादस्ति काचिदार्यायाः प्रवृत्तिः ?'

शबर्युवाच—'वर्तमाने नास्ति । यत्तदा दुरात्मनाऽपह्रियमाणायाः स्रस्तमनसूयानामाङ्कितमुत्तरीयम् तच्चर्ष्यमूके रामगुणपक्षपातात् सुग्रीवविभीषणहनूमत्प्रभृतिभिर्गृहीतम् ।'

अथ रघुवंशकेतुः स्वकान्तायाः संस्तुतमभिज्ञानं द्रष्टुमियेष । ततो विभावरीचराराातिद्वयी प्रतस्थेऽभिसंधायर्ष्यमूकम् ।

मार्गे रामश्रितामेकां ददर्श । तेनाभिहिता शबरी—'आर्ये ! हन्त दक्षिणेनास्थिसंचयः सुमहान् । तत्किमेतत् ?'

शबरी प्रत्युवाच—'लक्ष्मणेन योजनबाहोश्रितेयमाभिसृष्टा।'

रामो यावल्लक्ष्मणं साधुकारिणं व्याहरति तावत् कोऽपि दिव्यपुरुषस्तत्रोपस्थाय निवेदितवान्—

'दनुर्नाम श्रियः पुत्रः शापाद्राक्षसतां गतः ।
इन्द्रास्त्रकृतकाबन्ध्यः पूतोऽस्मि भवदाश्रयात् ॥ ६८ ॥

माल्यवत्प्रयुक्तेन च मया युष्मदास्कन्दनाय दूषितमरण्यमासीत् । संप्रति युष्मत्प्रभावात् प्रादुर्भूतसहजज्योतिषोऽपरोक्षमिव मे वस्तु किञ्चित् प्रतिभाति । तच्च वः प्रतिविधानाय कृतमहोपकारेभ्यः कथ्यते ।

'प्रार्थ्य माल्यवता वाली युष्मद्धाते नियुज्यते ।
तेनापि रावणे मैत्रीमनुरुध्याभ्युपेयते ॥' ६९ ॥

ततो रघुपतिना विसृष्टो दनुः स्वं लोकमभिप्रतस्थे । दाशरथी ऋष्यमूकमार्गमलञ्चक्रतुः । पथि लक्ष्मणो वालिरावणयोर्मैत्रीहेतुं शबरीं पप्रच्छ ।

शबरी प्रतिजगाद—

'कैलासे तुलिते जिते त्रिभुवने दृप्यन्तमभ्युद्यतं
दोर्युद्धाय दशास्यमिन्द्रतनयः प्रक्षिप्य कक्षान्तरे ।
सांध्यं कर्म समाप्य सप्तसु नदीनाथेष्वथो मुक्तवा-
नुन्मुक्ताय नताय नाथितवते सख्यं च तस्मै ददौ ॥'७० ॥

किञ्चिदग्रतो गत्वा शुभ्रं गिरिमिव किमपि दृष्ट्वा विस्मयमुपेतं लघुराघवं शबर्यकथयत्—

'नायं गिरिर्यशोराशिरिव वीरस्य वालिनः ।
एष दुन्दुभिदैत्येन्द्रमहिषस्यास्थिसंचयः ॥' ७१ ॥

रामः पादाङ्गुष्ठेन वर्त्मनिरोधकं संचयं तं परतश्चिक्षेप । अथाग्रतः प्रशान्तगम्भीरनीलविपुलश्रीररण्यभूमिरदृश्यत ।

शबर्युवाच—'ऋष्यमूकपम्पयोः पर्यन्तभूमयः खल्वेताः। तथा चाग्रतो मतङ्गाश्रमपदम्।'

अथैतेषां वधाय कृतनिश्चयो वालिरपि तत्रैवाऽऽजगाम। स हि मघोना दत्तं चामीकरकमलमयीं मालामधत्त। किंच पिङ्गेनाङ्गेन स सन्ध्यासमये तडित्वानम्बुवाह इव शुशुभे। स्वाङ्गं संकोच्योत्पतन्नसौ गैरिकाङ्कस्य गिरेर्लक्ष्मीमुवाह।

तत्र संप्राप्तोऽपि वाली चिन्तयामास यथा 'एवं नामायुक्तमनुरुध्यमानाः पुमांसो महत्ययुक्तगह्वरे निपात्यन्ते। यदनेन माल्यवता रावणमैत्रीमनुस्मार्य तत्र भवतो रघूद्वहस्य निधने नियुक्तोऽस्मि। अहो ग्रहः। प्रातरारभ्य मामनुबध्नन् किष्किन्धायाः प्रस्थाप्य प्रतिनिवृत्तः। कथितं च संप्रत्येव चारकैर्यथा "विभीषणेन सुग्रीवस्याप्यनाख्याय रामान्तिकं श्रमणा प्रेषिता। प्रतिपन्नलङ्काधिपत्यश्च तस्य दाशरथिरस्मिन् मतङ्गाश्रमोपकण्ठे वर्तते" इति। भवतु।'

तत उपसृत्य पश्यत एव तस्य स्वान्ते राघवस्य सौम्या मूर्तिः स्थानमलभत। उभयतः पाशया रज्ज्वा बद्धः स संमुग्धो जातः। एकतस्तु गृहानागते महात्मनि पापाचरणमन्यतश्च प्रतिश्रुतं सुहृत्कार्यम्। युद्धवैमुख्ये चिरार्जितं विश्वव्यापकं तद्यशो लुप्येत, प्रतिज्ञा च परित्यक्ता भवेत्। ततो युद्धमेवाभवत् तस्य पक्षः। तदनुरोधात् सोऽब्रवीत्—' राम!

'आनन्दाय च विस्मयाय च मया दृष्टोऽसि दुःखाय वा
वैतृष्ण्यं तु ममापि संप्रति कुतस्त्वद्दर्शने चक्षुषः।
त्वत्साङ्गत्यसुखस्य नास्मि विषयस्तत्किं वृथा व्याहृतै-
रस्मिन् विश्रुतजामदग्न्यदमने पाणौ धनुर्जृम्भताम्॥'७२॥

उभावपि संग्रामभूमिं गतौ। धनुरास्फालयति रघूद्वहे वाली घोरं जगर्ज। परमेकेनैव सायकेन तेन निपातितः स साक्रन्दनिः।

विभीषणसुग्रीवावपि नीलप्रभृत्यन्वितौ तत्र समागतौ। ते सर्वेऽप्यपारपारे शोकाम्भसि निमग्नाः।

सुग्रीवविभीषणौ श्रमणां वालिवधकारणमपृच्छताम्। शबरी माल्यवता प्रयुक्तं सर्वमितिवृत्तमकथयत्। वाली सुग्रीवं रामाय दत्तवान्। ततः सः रामसुग्रीवयोरन्योन्यं मैत्रीधर्मेण वर्तयितुं स्वसमक्ष एव ताभ्यां प्रतिज्ञामकारयत्। 'रावणो हि नास्त्येव' इति स स्ववृत्तान्तेनैव व्याख्यातमपश्यत्। तदैव वालिनोऽपि प्राणाः प्रयातुं प्रस्तुता आसन्। तेन विज्ञापिताः प्लवङ्गमपुङ्गवास्तमवसानप्रपातस्थलमुपनिन्युः।

[ ६ ]

वालिवधमाकर्ण्य माल्यवानतीव विषण्णो जातः। सोऽचिन्तयत्—'अहह! रक्षःपतेर्दुर्विनयविटपिकोरकाः परितः प्रकीर्णा इव।

बीजं यस्य विदेहराजतनयायाच्ञाङ्कुरोऽपि स्वसु-
र्यात्रा तौ परिवञ्चितुं किसलयं मारीचमायाविधिः।
शाखाजालमयोनिजापहरणं तस्य स्फुटं कोरकाः
कोशाधीशवधोऽनुजस्य गमनं सख्यं तयोस्तेन च॥ ७३॥

अचिरादेव फलोन्मुखोऽपि भवितेति मन्ये। अहो! वामता भागधेयानाम्। यत्तथाविधशौर्योष्माणं कपिचक्र-

वर्तिनं शरैः संयमयता किं नाम न विहितम्। श्रुतं हि मया यत्सीतामन्वेष्टुमनुदिशमभिदुद्रवुः कपिपुङ्गवा इति।'

तदा शब्दोऽश्रूयत यत्प्रौढो हुताशो लङ्कामभितोवलीढ इति। अथ संभ्रान्तोरस्ताडयन्ती त्रिजटा तत्र प्राप्ता। सा परित्राणार्थं विलपन्ती भुवि पतिता। माल्यवता विपत्कारणं पृष्टा सोत्थायाब्रवीत्—'कनिष्ठमातामह ! किं कथयामि मन्दभागिनी ? एष खलु कोऽपि दुष्टवानरः सकलं विदह्य नगरं विक्षिप्तविविधराक्षसलोकोऽक्षेण खलु कुमारकेण चानुबध्यमानस्तस्मिन् कृतान्तलीलां कृत्वा झटिति निष्क्रान्तः।'

वृत्तमेतमाकर्ण्य जातस्मरणो माल्यवानचिन्तयत्—'उक्तो-ऽहं चारकेण हनूमानवाचीं दिशमिति। अहह,

तूलदाहं पुरं लङ्कां दहतैव हनूमता।
अपि लङ्कापतेस्तीव्रः प्रतापो निरवाप्यत॥'७४॥

अथ तेन त्रिजटा पृष्टा—'वत्से! अपि तेन सीता-प्रवृत्तिरुपलब्धा ?'

त्रिजटोवाच—'कनिष्ठमातामह ! पुरत एव कोऽपि मर्कट-परमाणुस्तया समं मन्त्रयमाणो दृष्टः। तयाऽप्युन्मुच्य केशा-भरणमभिज्ञानमिति तस्य हस्ते समर्पितम्।'

अथ जातशङ्को माल्यवानब्रवीत्—'एतेनैव कपिपरमाणुना तावदेवमनुष्ठितम्। एवं परश्शताः कोट्यः श्रूयन्ते संप्रति सुग्रीवभुजबलपरिपालिते कपिसर्गे।'

त्रिजटा सवितर्कमवोचत्—'कथं तादृशी सुकुमारदर्शना सुस्निग्धव्यवहाराऽपि मानुष्यपि सीताऽस्माकं राक्षसानामति-राक्षसी जाता।'

माल्यवानुवाच—'वत्से ! युज्यतेऽपि ।

पतिव्रतामयं ज्योतिः शान्तं दीप्तं च घुष्यते ।
दुष्कर्मणां परीपाकोऽथवा खल्वेष दीप्यते ॥ ७९ ॥

आस्ताम्, न तथापि भेतव्यम् । दुर्गमे हि पर्वतेऽवतिष्ठते लङ्का परितश्चेमां सप्तधातुनिर्मितं प्राकारं परिवेष्टते, अब्धिश्च निरवधिपरिखाकारो वर्तते ।'

ततो माल्यवान् पुनरपि चिन्तया पर्याकुलोऽभवत् । स रामस्य विजयं प्रत्यक्षमिव ददर्श । (सोऽचकथत्—'विशुद्धात्माऽयं रावण प्रबलभावितव्यादन्यत्र कुत्रापि न नीतिमार्गाद् भ्रष्टो नापि च सुमतिमार्गात् । तद्विधिरेवास्य वामः प्रतीयते ।' पुना रावणमनुस्मरन्) सोऽब्रवीत्—'वत्से ! अवैषि किमुपक्रमस्तावद्देवो दशकन्धरः ?'

त्रिजटयाऽभिहितम्—'कनिष्ठमातामह ! स्वामी खलु सांप्रतं सर्वतोभद्रं नामाट्टालकमारुह्य तया राक्षसकुलकालरात्र्याधिष्ठितामशोकवनिकामेव विलोकयंस्तिष्ठति । अन्यच्चेतोमुखं प्रवृत्तयैषा प्रवृत्तिः श्रुता । एतन्नगरवृत्तान्तमनुभूय किमपि दुर्मनायमाना स्वामिनी प्रतिबोधयितुं तत्रैव प्रस्थितेति ।'

तच्छ्रुत्वा गुप्तमन्त्रणार्थं त्रिजटया सह माल्यवानपि ततोऽन्यत्र गतः ।

अन्यतस्तु यावत् सर्वतोभद्रामट्टालिकामधिष्ठाय रावणः सीतामवैक्षत तावन्मन्दोदरी तत्रोपगता तमपृच्छत्—'किं चिन्तितं रिपुपक्षाभियोगविषये ?'

रावणः सोत्प्रासमुवाच—'कथं रिपुस्तत्पक्षस्तदभियोग-

श्रोत्यश्रुतं श्राव्यते देव्या ? भवतु, तथापि श्रोतव्यम्। देवि! स कः ?'

मन्दोदर्याऽभिहितम्—'निखिलवलीमुखचक्रानुगतसुग्रीवाग्रेसरः सहकनिष्ठो दाशरथी राम इति श्रूयते।'

रावणोऽब्रवीत्—'किं सहानुजस्तापसः ? देवि! किं गतेन तेन तैर्वा सः ?'

मन्दोदरी प्रत्युवाच—'महाराज! समुदायः खलु शङ्क्यते। अपरं च सागरवेलासु सेनां विनिवेश्याऽऽहूतोऽऽनेन सागरो न निर्गतो भवनादिति स तपस्वी तस्मिन् जलनिधिकुहरे किमप्यस्त्रं प्रायुङ्क्त, यन्महिम्नाऽखिलं तदम्भश्चक्रभ्रममावृत्याऽऽवृत्य क्वाथतः शोणमभूत्। जलचराणां परःशताः कोट्यो व्याकुलीभूताः, वलवत् खलु विक्षुब्धोऽब्धिः।'

रावणः सावज्ञमाह—'किं ततः ?'

मन्दोदरी प्रोवाच—'ततश्च पुङ्खमात्रप्रेक्ष्यमाणतीक्ष्णशरनिकरपक्ष्मलितशरीरेण निष्क्रम्य सलिलात् सपादपतनमभ्यर्थ्य मार्ग उपदिष्टः। साहसिकेन पुनस्तेन साध्यवृत्तिः श्रूयते। वलीमुखसहस्रैरानीतैर्महीधरैः सेतुर्निर्मीयते।'

रावणोऽब्रवीत्—'देवि! विप्रलब्धाऽसि केनाचित्। अज्ञातगाम्भीर्यमहिमा किलायं पाथोनाथः।'

जम्बुद्वीपेऽथवान्येषु द्वीपेष्वपि महीधराः।
यावन्तस्तैः कुक्षिकोणोऽप्यस्य न भ्रियते किल ॥ ७६ ॥

साहसिकेनेति वदन्त्या देव्या मत्साहसं विस्मृतप्रायम्।

एवमाभाषमाणयो रजनीचरदम्पत्योः कुतश्चित् कोलाहलोऽश्रूयत। रावणजाया संत्रस्ता परित्राणार्थमाचक्रन्द। तदैव

सेनापतिना प्रहस्तेनाऽऽगत्याभिहितम्—'देव !

पुरं निःशेषघटितं कपाटद्वारमावृतम् ।
रक्षा चाहैर्भङ्क्तिमद्भिः कौणपैः परितः कृता ॥' ७७ ॥

रावणस्तु तदा सोपेक्षमुवाच—'किमिति ?'

प्रहस्तोऽब्रवीत्—'देव लङ्केश्वर !

मनुष्यपोतमात्रेण सानुजेन पुरी तव ।
रुध्यते स्म यथासारं वीवधाद्यपि दुर्लभम् ॥' ७८ ॥

अथ प्रतीहार्युपेत्य न्यवेदयत्—'भर्तः ! एष कोऽपि वलीमुखो रामस्य दूतः' इति भणित्वा प्रतीहार देशे तिष्ठति ।

दौत्यमुपगतोऽङ्गदो रावणस्य पुरत उपस्थायाऽब्रवीत्—'लङ्केश्वर ! श्रूयताम्,

दृप्यद्राक्षसचक्रकाननमहादावानलस्याऽऽज्ञया
दूतो दाशरथेस्तदीयवचसा त्वामागतः शासितुम् ।
सीतां मुञ्च भजावरोधनसुहृद्दायादपुत्रान्वितः
सौमित्रेश्चरणौ न चेत्तदिषुभिः शासिष्यसे दुर्मदः ॥'७९ ॥

तच्छ्रुत्वा महता कोपेनाविष्टो रावण उच्चैरुवाच—'कः कोऽत्र भोः । यत्किंचिद्वादिनोऽस्य मुखं संस्कुर्यात् ।' प्रहस्तेनोक्तम्—'देव ! दूतः किलायम् । किमत्रक्रोधेन ।' तदप्रतिपद्यमानेन रावणेन पुनरुक्तम्—'एतन्मुखसंस्कार एव तपस्विनः प्रत्युत्तरीकरणम् ।'

संदेशप्रतिवचो विज्ञायाङ्गदः आप्लुत्य निष्क्रान्तः । तस्मिन् प्रतिनिवृत्ते प्रहस्तेन निदेशाय निवेदितो रावणो व्याजहार—

श्रोक्ष्यन्तामभितोऽर्गलानि, भुवनप्रख्यातसारोद्धतैः
पाक्ष्यन्तां परितो रणानि च परन्याक्षेपिभी राक्षसैः ।

मथ्यन्तां रिपुवस्मरप्रहरणं विक्षोभ्य भङ्ग्या भुजाः
खण्ड्यन्तां च मुहुर्विवल्गनवृथोत्थानोत्कटा मर्कटाः ॥' ८० ॥

तमादेशं सप्रश्रयं गृहीत्वा गतवत्येव प्रहस्ते पुनः कलकलोऽश्रूयत। ततश्च विदितमभूद् यद् भीषणाकारैर्वानरैः राक्षसा बध्यन्ते, अथ च क्रुधाऽन्धैस्तैः क्षिप्तैः गण्डोपलैः पुरगोपुरा भिद्यन्ते।

अस्मिन् समये रावणस्य दृष्टिराकाशे स्फुरिता। पश्यन्स उवाच—'कथमेते तपस्विपक्षपातादनात्मज्ञा वासवपुरःसरा दिवौकसोऽपिमत्सरिणो विक्षुभ्यन्ति।' अथ स मन्दोदरीमाभ्यन्तरे प्रवेश्य युद्धाय प्रस्थितः।

ततः खलु मातलिद्वितीयो वासवोऽपि युद्धं द्रष्टुं रथेनाऽऽगतः। किञ्चित्कालानन्तरं गन्धर्वराजश्चित्ररथोऽपि तत्रैव संप्राप्तः। समरदिदृक्षाप्रेरितोऽपि स विशेषतोऽलकेश्वरस्य कुबेरस्य समरवृत्तजिज्ञासया न्ययुज्यत। समानवंश्ययोरपि कुबेररावणयोर्जन्मनःप्रभृति वैरमासीत्। रावणेन कुबेरस्य निधिः पुष्पकं साऽपहृतमिति सर्वविश्रुतं किल। तदानीं सहसा व्यस्तीभूतां वानरानीकिनीमवेक्ष्य महेन्द्रेणोक्तम्—'मन्ये प्रहृतं रक्षसां पतिनेति। पश्य, कियानयं कलकलः समुत्पन्नः।'

अथ रथमधिष्ठिते रावणे निपतिता दृष्टिश्चित्ररथस्य। प्रधनरसनिष्णातमनसां प्रष्ठो रक्षोनाथोऽसौ मुहुर्ज्यावाघोषैर्गगनविवराभोगमभितो बधिरयति स्म।

तयोर्वीरसमयोचितं परिकरं विषमं विलोक्य देवराजः

स्वकं स्यन्दनं राघवस्योपहारितवान्। स्वयं चासौ चित्ररथस्य रथमारुह्याऽऽयोधनं व्यैक्षत।

अथोभयोः पक्षयोः आसीत्तुमुलः समरसंघर्षः। अस्त्र-शस्त्रैर्बहवो वीराः क्षताः विक्षताश्च बभूवुः। शोणित-स्नपिताङ्गाः वीराः समरभूमौ स्थातुं नाशक्नुवन्। कबन्धेभ्यो भिद्यमानेष्वपि शिरःसु वीराणां भुजा एवायुध्यन्त। समर-भूमौ मृतक्षतानां गिरिरिव महान् राशिः संवृत्तः।

अस्मिन् कालेऽपूर्वोऽभूद् रावणस्य संग्रामावतरणसर्गः। सोऽनुजानां शतैर्वृत आसीत्। तस्य वामतो महेन्द्रविजयी मेघनादोऽवातिष्ठत, दक्षिणतश्च निद्रातः प्रतिबोधितः कुम्भकर्णो व्यराजत, पृष्ठतश्च तस्य तन्मातुर्बन्धुवर्गोऽन्ये च जना आसन्।

रावणं तथाऽभियोगोद्धुरमभिवीक्ष्यापि निष्प्रकम्प एवाऽऽसीत् दाशरथिः। प्रवृत्ते च संप्रहारे युगपदुभयतो बाण-वृष्टयोर्बभूवुः। काकुत्स्थस्य पादमूलं केवलं पञ्चषाः सेनापतय आसेवन्त। तथा हि,

सुग्रीवः स्यन्दनस्याग्रे सोऽङ्गदः पृष्ठतः पुनः।
पञ्चषा जाम्बवान् भावी लङ्काधीशोऽपि पार्श्वयोः॥ ८१॥

हनूमान् पुनः लक्ष्मणस्यान्तिकचरोऽवर्तिष्ट। एवं सर्वे वानराः स्वामिभक्त्या सधैर्यावष्टम्भं रामपदपद्ममुपसेवन्ते स्म।

वासव उवाच—'गन्धर्वराज! मानुषे लोके वात्सल्यं नाम केवलमखिलेन्द्रियवशीकरणचूर्णमुष्टिः। यतः,

सौमित्रिः कृतहस्ततात्रभृतिभिर्न्यूनो न कैश्चिद्गुणैः
सारेणापि पुनः प्रसिद्धमहिमा शौर्याग्रणी रावणिः।

इत्थं तुल्यतरे किल व्यतिकरे रामस्य रक्षःप्रभो-

श्चान्योन्यं शरवृष्टिरेव वलते दृष्टिस्तयोर्वत्सला ॥'८२ ॥

लक्ष्मणस्य बाणवज्रैर्बहवो राक्षसा मर्मवेधं प्रविद्धाः । रावणः स्वकान् कतिचन पुत्रान् पतितान् वीक्ष्यानिष्टशङ्कया रामाभियोगं परित्यज्य मेघनादोपकण्ठं निपपात। सरभसं ततो निर्गते दशकन्धरे विग्रहेच्छुः कुम्भकर्णो रघुपतिशरैः कीलितः। तत्पुत्रः कुम्भश्च पितुस्तामवस्थां वीक्ष्य वपुष्मान् गर्व इव किं वा जङ्गमः क्ष्माधरेन्द्र इव निपतन् सुग्रीवेणावरुध्य भुजाभ्यामापीड्य माषपेषं पिष्टः ।

एतन्निरीक्ष्य निपपात च कुम्भकर्णः

सुग्रीवमुग्रतरविद्रुतिरग्रहीच्च ।

उन्मोच्य सोऽपि निपुणः स्वममुष्य नासां

लज्जां स्वसुश्च युगपत्किल निश्चकर्त ॥ ८३ ॥

अतिदुष्करं च प्रतिसंविधानमापातितं लघुरघुपतेः । तथा हि,

यावन्मन्त्रप्रभावादनधिगतगतीन् मेघनादप्रणुन्नान्

दुर्भेद्यान् नागपाशान् विहगपरिवृढास्त्रप्रयोगाद् व्यधूनोत् ।

तावद्रक्षोविनेत्रा पुनरतिरभसं मर्मणि क्रोधभूम्ना

गाढं विद्धः शतघ्न्या हनुमति सहसा मोहनिघ्नो न्यपसत् ॥८४॥

भ्रातुर्मोहमधिगम्य भाविलङ्केश्वरादक्रममेव करुण-वीरानुभावभावितचित्तवृत्ती रघूद्वहस्तथाविधस्यापि दर्शनो-त्सुकः समवरुध्यत परितः कुम्भकर्णप्रमुखया रक्षःपृतनया । ततः स रावणानुजमिषुभिः कणश आच्छिद्य चमूं भस्मी-कृत्यानुजमभि प्रयातः । यातुधानाधीशोऽपि सपरिवारः

कुम्भकर्णवधात् संभ्रान्तः। इदानीं महावीरः प्राभञ्जनिरौषधबहुलं द्रोणाभिधेयं पर्वतमेवोत्थाप्याऽऽनीतवान्। औषधसौरभमावहता पर्वतगन्धवहेन लक्ष्मणः सपद्येव संज्ञां प्रापितः। दिव्यौषधिप्रभावेण च क्षणेनैव तस्य तेजः पूर्ववत् स्फुरितमभूत्।

इदानीं रावणः कल्पावसानानिमर्यादं पाथ इव पाथोनाथस्य राक्षसबलमाकर्षन् पुनरभ्यमित्रमभ्युपेतः। अथ धर्मजन्यमजनि। बहुतराः राक्षसानां प्रधानव्यक्तयो हताः। प्रधानवीरेषु केवलं रावणमेघनादावेवावाशिष्येताम्। इतराननुगच्छतः परःसहस्रमस्त्रपकीटान् रामलक्ष्मणौ तृणमिवामन्येताम्। वानरराक्षसयोः पुनः प्रक्रान्तं घोरमायोधनम्। रावणो रामेण, मेघनादश्च लक्ष्मणेन सह द्वन्द्वीभूतौ। विविधानि दिव्यास्त्राणि प्रायुज्यन्त। क्ष्वेडाभिः सर्वतो दिशः समपूर्यन्त। सायकनिकरैर्व्याप्तं व्योम। शत्रूणां देहैर्धरातलमपि प्रच्छन्नम्। रामलक्ष्मणावद्याप्यसंख्यानां राक्षसानां शिरांसि कर्तयित्वा स्वप्रभावं प्रख्यापितवन्तौ। अथ रामलक्ष्मणौ मुनीनां वचनाद् रावणमेघनादयोर्वधाय ब्रह्मास्त्रं प्रयुज्य तयोर्मूर्धानौ चिच्छिदाते। अनन्तरं रक्षःकबन्धेन सहैव तदवरोधोऽपि भुवौ पपात।

शुभे चास्मिन्नवसेर व्योम्नः सुमनोवृष्टिरजायत। महोत्सवमनुभवितुं सुमनोमहर्षिगणावात्मानं प्रतीक्षमाणौ विज्ञाय वासवश्चित्ररथमलकेश्वरसकाशं प्रेषयित्वा भूलोकमवतीर्णः।

[ ७ ]

अथ भर्तरि दिवं प्रयाते लङ्का निजवल्लभस्य कृते परि-

देवितुमारेभे । सा हि रावणकुले कमपि स्वकं वशिष्टं नापश्यत्, ततश्च बलवच्छोकाकुला जाता। निजाग्रजयाऽलकयाऽऽगत्य विविधमाश्वासवचनमुक्ता सा प्रत्युवाच—'अयि भगिनि! कुतो म आश्वासः। युवतिजनमात्रशेषा संवृत्ताऽस्मि। एकः पुनः कुलतन्तुः कुमारविभीषणः खलु तिष्ठति। सोऽपि रिपुपक्षमेव सेवते।'

अलकाऽब्रवीत्—'अयि भगिनि! मा मैवम् । न खलु सोऽस्माकं रिपुपक्षः। यस्य पुनरासीद्रिपुः स गतः। गता च सा शत्रुता । संप्रति तु निसर्गसुहृदस्माकं त्रिभुवनप्रसिद्धसंबन्धो राघवः।'

लङ्का दीर्घं निःश्वस्योवाच—'यद्येवं कथमस्माकं स्वामिन्वीदृशः परिणतः?'

अलकयोक्तम्—'यतोऽसौ तस्य धर्मपत्नीमपजहार । तस्य किलैष कर्मणः पाकः।'

लङ्काऽपृच्छत्—'त्वं पुनरथ क्व प्रस्थिताऽसि?'

अलकाऽकथयत्—'अवधत्स्व, अहं खलु वैमात्रकेण पौलस्त्येनामुं वृत्तान्तमुपलभ्य शिष्टबन्धुप्रतिबोधनाय विभीषणस्य च लङ्काभिषेकसाक्षात्करणाय रावणापहृतविमानराजस्य रामभद्रोपस्थानोपदेशदानाय संदिष्टा।'

एतदाकर्ण्य लङ्का सविस्मयमुवाच—'अहो कथं भगवतः पशुपतेरपि मित्रं निधानाधिपतिः स्वयमेवोपचरति रामभद्रम्?'

अलकयाऽभिहितम्—'अयि, किमत्राश्चर्यम्?

इदं हि तत्त्वं परमार्थभाजामयं हि साक्षात्पुरुषः पुराणः।
त्रिधा विभिन्ना प्रकृतिः किलैषा त्रातुं भुवि स्वेन सतोऽवतीर्णा॥'८९॥

अपि च। अयि सरले! शापमहिम्ना किल मूर्च्छन्मोहः सोऽपि नापराध्यति।'

ततोऽश्रूयत कलकलः। ततश्च विदितमभूत यद् राघवः सीतामग्निप्रवेशपरिलक्षितशुद्धभावां सादरं स्वीचकारेति। अनन्तरं मङ्गलतूर्यरवोऽश्रूयत। समवहिताभ्यामाभ्यां ज्ञातं यत् सीताविशुद्धेरनुमोदनार्थमवतीर्णाभिरप्सरोभिः दिव्यर्षि-गणैश्च रामभद्रनिर्देशेन राज्ये विभीषणमाभिषिच्य स्वं स्वं स्थानं प्रतिनिवर्त्यत इति। विभीषणः पुनः पुष्पकं विमानं पुरस्कृत्य रामभद्रमभ्येति। तच्छ्रुत्वा लङ्कालकेऽपि रामभद्र-मेवालोकयितुं जग्मतुः।

सीतारामलक्ष्मणप्रमुखाः सुग्रीवादयः सर्वे तत्रातिष्ठन्। पुष्पकं पुरस्कृत्य विभीषणस्तत्र गत्वा न्यवेदयत्—'देव! त्वन्निर्देशेन मुक्ताः मया सर्वेऽपराधिनः। अयं च सर्वदा-मनोरथस्यानुगुणं चेष्टमानः स पुष्पकनाम विमानराजः।'

पुष्पकविमानमवलोक्य रामो हर्षमुपागतः, सखायं सुग्रीवं चोवाच—'सखे वैकर्तने! किमत्रावशिष्यते?'

सुग्रीव उवाच—'द्रोणाद्रिमादाय प्रतिनिवर्तमानस्य हनूमतो मुखादिममनिष्टवृत्तान्तमाकर्ण्य दुर्मनायते किल कुमारभरतः। तं प्रति वार्ताहरः प्रविसृज्यतां प्राभञ्जनिः। स्वयमप्यलङ्क्रियतां विमानराजः।'

सीतारामलक्ष्मणाः सुग्रीवविभीषणानुगताः विमानमारु-रुहुः। चतुर्दशवर्षावधिकस्य वनवासस्यावधौ एक एव दिवसोऽवाशिष्यत। विमानमारुह्य सर्वे रघुकुलराजधानीम-

योध्यां प्रति प्रस्थिताः। मार्गे ते अम्बोधिवेलासेतुबन्ध-दण्डकारण्यविन्ध्याचलप्रभृतीनि दृश्यानि पश्यन्तो राजर्षेर्विश्वामित्रस्याऽऽश्रमपदं प्रापुः। तत्र रामो गुरुचरणपङ्कजाभ्यां पवित्रितेषु परिसरेषु विमानाधिरोहणमनुचितं मन्यमानः रथादवतरितुमैच्छत्। परन्तु विश्वामित्रेणाथ उपविष्टेनैव तन्मनोगतं विज्ञायाभिहितम्—'भो भो रामलक्ष्मणौ !

पुरीं यथा स्थितौ यातं विलम्बेथां च माऽन्तरा।
अरुन्धतीसहचरं ज्योतिर्वां संप्रतीक्षते ॥ ८६ ॥

अहमपि मुहूर्तद्वयेनाऽऽगत एव।'

विमानं पुनरपि प्रससाराग्रतः।

ततस्तु रामागमनप्रवृत्तिं हनूमन्मुखादुपलभ्य भरतशत्रुघ्नौ ससैन्यौ तेषां स्वागतमभिलक्ष्याऽऽगच्छताम्। यदैव विमानमयोध्याया अन्तिकं प्रापत् तदा खलु प्रादुरभूत् प्रमोदोदधिः। चिराय विश्लिष्टाः बन्धु जनाः पुनर्मिलिताः।

अथ भरतो रामं न्यवेदयत्—'आर्य ! कुलगुरुर्नो भगवान् मैत्रावरुणिः सिंहासनग्रहे संपादितसकलाभिषेकसंभारो भवन्तं प्रतीक्षते। तद्यथाऽऽज्ञापयत्यार्यः।'

सीतारामलक्ष्मणादयः सर्वेऽयोध्यायाः राजप्रासादमभिप्रस्थिताः। तत्र हि वसिष्ठोऽरुन्धती कौशल्याकैकेयीसुमित्राश्च प्रसन्नवदना एतान् प्रतिपालयन्त्योऽतिष्ठन्।

किंचिद्दुर्मनायमानां कैकेयीमवलोक्यारुन्धती तामपृच्छत्—'वत्से कैकेयि ! किमेवमति दुर्मनायसे ?'

कैकेयी प्रत्यब्रवीत्—'अम्ब ! मम मन्दभागिन्या अधन्यतया सकलोऽपि लोक एवं कौलीनं भणति यत् "वत्सयोः

प्रवासजननी मध्यमजननी मन्थरामुख आसीत्" इति तत्कथं वत्सयोर्मया मुखं प्रेक्षितव्यम् ?'

अरुन्धत्याऽभिहितम्—'वत्से ! अलं वृथा कौलीन-शङ्कया। आर्यमिश्रैरयमर्थस्तदैवान्तरेण चक्षुषा साक्षात्कृतः। मन्थरारूपधारिण्या शूर्पणखया माल्यवद्वचनादेतद्विहितमिति।'

अथ सीतारामलक्ष्मणभरतशत्रुघ्नविभीषणादयः सर्वेऽपि तत्र प्राप्ताः। अभ्युदितः खलु तत्र हर्षपारावारः। सशिष्यो विश्वामित्रोऽपि तत्राऽऽजगाम।

अथ रामस्य राज्याभिषेको यथाविधि निर्वर्तितः। आकाशे दुन्दुभिध्वनिः पुष्पवृष्टिश्चाभवताम्।

विश्वामित्रो राममब्रवीत्—'वत्स रामभद्र ! विसृज्येता-मेतावनुभूतप्रमोदौ सुग्रीवविभीषणौ। पुष्पकं संकल्पसमय-सुलभं राजराजमेवाश्रयताम्।'

अथ सुग्रीवविभीषणौ स्वं स्वं देशं प्रतस्थाते। पुष्पकं च तत्कुबेराय प्रत्यर्पितम्। महावीरो राघवश्च राज्यधुरं निजभुजयोराससञ्ज।

---

# कुन्दमाला

## [ १ ]

अथ कदाचिज्जानकीं रथमारोप्य गङ्गादर्शनार्थं प्रयातो लघुराघवः। सुमन्त्रोऽभूत्स्यन्दनस्य प्राजिता। गहनतरुलताप्रतानसंरुद्धतया रथप्रवेशायोग्यानि भागीरथीतीरकाननानि संप्राप्य प्रसरणाद्विरतो रथः। रथादवतीर्णौ सीतालक्ष्मणौ। सुमन्त्रो दीर्घमार्गपरिश्रान्तान्तुरङ्गमान्विश्रमयितुं रथमन्यत्र निनाय। सीतालक्ष्मणावपि प्रस्थितौ।

तदानीमित्थमभूल्लक्ष्मणस्य स्वान्ते—'समादिष्टोऽहमार्येण, अथवा स्वामिना "वत्स लक्ष्मण! देव्याः किल सीताया रावणभवनसंस्थानाच्चारित्रं प्रति समुत्पन्नविमर्शानां पौराणामन्यादृशाः प्रलापाः प्रवर्तन्ते, तन्न शक्नोमि सीतामात्रस्य कृते शरच्चन्द्रनिर्मलस्येक्ष्वाकुकुलस्य कलङ्कमुत्पादयितुम्। सीतया चाहं गर्भिणीभावसुलभेन दोहदेन भागीरथीदर्शनं प्रार्थितः। तस्मात्त्वमनेन गङ्गागमनव्याजेन सुमन्त्राधिष्ठितं रथमारोप्य कस्मिंश्चिद्वनोद्देशे परित्यज्य निवर्तस्व' इति। तदहमपि स्वजनविस्रम्भनिर्विशङ्कां देवीमादाय गृहहरिणीमिव वध्यभूमिं वनमुपनयामि।'

अतिशयितगर्भभरोद्वहनपरिश्रान्ता पादपच्छायायां विश्रमितुमुपविष्टा वैदेही। स्तोककालोत्तरं तां विश्रान्तां

सुखोपविष्टां च वीक्ष्य तत्पादयोर्निपत्य सौमित्रिरुवाच—'अयमनवरतप्रवासदुःखभागी निर्लक्षणो लक्ष्मणो विज्ञापयति "स्थिरीक्रियतां हृदयम्" इति ।'

सीता ससंभ्रमं मन्त्रितवती—'अपि कुशलमार्यपुत्रस्य ?'

लघुराघवो वनं निर्दिश्य शशंस—'एवं गते कीदृशं कुशलमार्यस्य ?'

सीता पप्रच्छ—'आर्यया कैकेय्या पुनरपि समादिष्टो वनवासः ?'

लक्ष्मणो भणितवान्—'आर्येणैव समादिष्टो वनवासः, न त्वम्बया ।'

राघवभार्याऽब्रवीत्- 'वत्स ! स्पष्टं कथय ।'

दाशरथिरुदाजहार—'किमपरं कथयामि मन्दभाग्यः,

त्यक्ता किल त्वमार्येण चारित्रगुणशालिना ।
मयाऽपि किल गन्तव्यं त्यक्त्वा त्वामिह कानने ॥' १ ॥

तच्छ्रुत्वा मोहमुपेता विदेहपुत्री । भागीरथीशीकरशीतलेन मृदुनाऽनिलेन संभाव्यमाना सा द्रागेव प्रत्यागत्य निजगाद—'वत्स लक्ष्मण ! किमुपालभ्यास्मि परित्यक्ता ?'

स प्रत्युवाच—'कीदृशो देव्या उपालम्भः ?'

जनकनन्दनाऽकथयत्—'अहो मेऽधन्यत्वम् ! किमुपालम्भमात्रेण विना निगृहीताऽस्मि ? किमस्ति किमपि तेन संदिष्टम् ?'

काकुत्स्थो व्यज्ञापयत्—

'तुल्यान्वयेत्यनुगुणेति गुणोन्नतेति
दुःखे सुखे च सुचिरं सहवासिनीति ।

जानामि केवलमहं जनवादभीत्या
सीते ! त्यजामि भवतीं न तु भावदोषात् ॥ २ ॥

अयमार्यस्य संदेशः ।'

सीतयाऽनुयुयुजे—'कथं जनवादभयेनेति ! किमपि वचनीयं मेऽस्ति ?'

रामानुजः प्रतिजगाद—'कीदृशमार्याया वचनीयम् ?

ऋषीणां लोकपालानामार्यस्य मम चाग्रतः ।
अग्नौ शुद्धिं गता देवी किं तु लोको निरङ्कुशः ॥' ३ ॥

अथ नाभूत्किमप्यविदितमवनितनयायाः । आतुरया तयोदीरितम्—'सीताया अपि नामैवं संभाव्यत इति सर्वथाऽलं महिलात्वेन । एवं परित्यक्ता ! किं न खलु युक्तं ममाऽऽर्यपुत्रपरित्यक्तमात्मानं परित्यक्तुम् । किं न खलु तस्यैव निरनुक्रोशस्य समान एव प्रसवः प्रेक्षितव्य इति वचनीयकण्टकोपहितं जीवितं परिरक्षामि ।'

तस्या उपकारं प्रकाशयता सौमित्रिणा प्रणम्य भणितम्—'इदमपरमार्येण संदिष्टम्,

"त्वं देवि ! चित्तनिहिता गृहदेवता मे
स्वप्नागता शयनमध्यसखी त्वमेव ।
दारान्तराहरणनिःस्पृहमानसस्य
यागे तव प्रतिकृतिर्मम धर्मपत्नी ॥" ४ ॥

तन्निशम्य स्तोकायितं जानकीसंतापेन । प्रतिसंदेशं याचितवान् रघूद्वहस्तयोक्तः—'एवं गतेऽपि प्रतिसंदेशः ? श्वश्रूणां पुनर्मम वचनात्पादवन्दनं कृत्वा विज्ञापय "एवमहं

नीरक्षा श्वापदसमाकीर्णे वने प्रतिवसन्ती च सर्वथा हृदयेनाऽऽर्याभिरनुगृहीतव्या" इति ।'

लक्ष्मणोऽभणत्—'प्रतिगृहीतेयमाज्ञा । आर्यस्य न किंचित्संदिष्टम् ?'

तयोचे—'निष्ठुरो नाम संदिश्यत इत्यप्रतिहतवचनतैषा लक्ष्मणस्य, न सीताया धन्यत्वम् । तथा मम वचनात्तं जनं विज्ञापय "मन्दभागिनीमनुशोचन् वर्णाश्रमपरिपालनमभिन्नमात्मानं न बाधय । सद्धर्मे स्वशरीरे सावधानो भव" इति । वत्स लक्ष्मण ! किमुपालभे महाराजम् ?'

शत्रुघ्नाग्रजेनाभिहितम्—'किमेतावत्यपि न प्रभवति देवी ?'

दशरथस्नुषा बभाषे—'एवमपि तं जनं विज्ञापय—"न युक्तं तव निरपराधमिमं जनं सपदि हृदयतो निर्वासयितुं किं पुनर्विषयतः" इति । एवमपि सा तपोवनवासिनी सर्वथा सीमन्तनिहितेनाञ्जलिना विनिवेदयति यद्यहं निर्गुणा चिरपरिचितेति वा, अनाथेति वा, सीतेति वा स्मरणमात्रकेणानुगृहीतव्या" इति ।

स शशंस—

'इमं संदेशमाकर्ण्य क्षते क्षारमिवाऽऽहितम् ।
दशामसह्यां शोकस्य व्यक्तमार्यो गमिष्यति ॥' ९ ॥

एवं गते किं ब्रूयात्पतिपरायणा जानकी । तया व्याहारि—'सांप्रतं मया विना त्वयैकेनैष चिन्तयितव्यः । त्वं भ्रातुः शरीरे सावधानो भव । अपरं च वत्स लक्ष्मण ! प्रणमितव्या त्वया मम वचनाद्राघवकुलराजधानी भगवत्ययोध्या । शुश्रूषितव्यः प्रतिमागतो महाराजः । साधयितव्या श्वश्रूणा-

माशास्तिः। समाश्वासयितव्याः प्रियंवदा मम प्रियसख्यः। स्मर्तव्या सर्वकालं मन्दभागिनी।'

एवं वदन्ती सा रोदितुं प्रवृत्ता। बलवदुद्विजत सौमित्रिरपि।

तत आसन्नास्तमयं सूर्यं विलोक्य सा तं निवर्तितुमसूचयत्। सोऽप्यञ्जलिं बध्वा न्यवेदयत्—'सर्वपश्चिमोऽयं लक्ष्मणस्य प्रणामाञ्जलिः। सप्रश्रयं विज्ञापयामि देवीम्—

आर्यं मित्रं बान्धवान् वा स्मरन्त्या
शोकादात्मा मृत्यवे नोपनेयः।
इक्ष्वाकूणां संततिर्गर्भसंस्था
सेयं देव्या यत्नतो रक्षणीया॥' ६॥

तया तत्प्रतिपन्नम्। ततो लघुरघूद्वहः पुनर्विज्ञापितवान्—

'ज्येष्ठस्य भ्रातुरादेशादानीय विजने वने।
परित्यक्तासि देवि! त्वं दोषमेकं क्षमस्व मे॥' ७॥

जनकनन्दिनी ससंभ्रममभ्यधात्—'ज्येष्ठवचनानुवर्ती त्वमिति परितोषकाले को दोष आशङ्क्यते।'

ततो लक्ष्मणः सप्रदक्षिणं परिक्रम्य दिक्पालान्, भगवतीं भागीरथीम्, मुनीन्, वनदेवताः, नदीः, लोकपालान्, शैलराजान् च रामजायापरिरक्षणार्थं भूयो भूयोऽभ्यर्थ्य, हिंस्रान् जन्तून् तस्या देशं वर्जयितुम्, मृगीश्च तया सह चरितुमादिश्य तां पुनः प्रणम्य ततः प्रतस्थे।

अथो व्याकुला वसुमतीतनयाऽऽत्मनाऽऽललाप—'कथं सत्यमेव मामेकाकिनीं परित्यज्य गतो लक्ष्मणः? हा धिक्! हा धिक्! अस्तमितः सूर्यः। स्वरेणापि लक्ष्मणो

न दृश्यते। हरिणा अपि स्वकमावासमायान्ति। उड्डीनाः पक्षिणः। संचरन्ति श्वापदः। आच्छाद्यतेऽन्धकारेण दृष्टिः। निर्मानुषं महारण्यम्। किं करोमि मन्दभाग्या। किं नु खलु मया पापं कृतम्, यस्येदानीमेव विरहं सर्वथाऽनुभवितास्मि। कथं...कथं तावल्लक्ष्मणनियुक्ता वनदेवता...मां संनिदधति। कथं नु राघवकुलक्रमागता वसिष्ठवाल्मीकिप्रमुखा महाप्रभावा महर्षयस्त इदानीं मां परित्यज्य...सुखं स्थिताः।'

एवमाक्रोशन्ती सीता विसंज्ञा बभूव। अथ महर्षिर्वाल्मीकिः,

आकर्ण्य जह्नुतनयां समुपागतेभ्यः
संध्याभिषेकविधये मुनिदारकेभ्यः।
एकाकिनीमशरणां रुदतीमरण्ये
गर्भातुरां स्त्रियमतित्वरया प्रयातः॥ ८॥

स तामन्वेषयँस्तत्र समागतः। महीदुहिताऽपि प्रत्यागता। तदा अन्धकारसंरुद्धतया दृष्टिमक्षमां वीक्ष्य महर्षिरशब्दापयत—'अयमहं भोः।'

पर्याकुला जानकी जगाद—'वत्स लक्ष्मण! प्रतिनिवृत्तोऽसि?'

महर्षिरभाषत—'नाहं लक्ष्मणः।'

परपुरुषदर्शनं परिहर्तुकामा काकुत्स्थकान्ताऽवगुण्ठनं विधायाब्रवीत्—'अबलाऽहमेकाकिनी च।'

मुनिरुवाच—'एष स्थितोऽस्मि वत्से! तवाप्यलं परपुरुषशङ्कया। दिवसावसानसवनाय भागीरथीं समुपास्य प्रतिनिवृत्तेभ्यो मुनिदारकेभ्यस्त्वद्वृत्तान्तमुपलभ्य तपोधनोऽहं

त्वामेवाभ्युपपत्तुमुपागतः। पृच्छामि चात्रभवतीम्,

धर्मेण जितसङ्ग्रामे रामे शासति मेदिनीम्।
कथ्यतां कथ्यतां वत्से! विपदेषा कुतस्तव ॥' ६ ॥

सीताऽवदत्—'तत एव पूर्णचन्द्रान्मेऽशनिपातः।'

मुनिनाऽभिदधे—'यदि त्वं वर्णाऽऽश्रमव्यवस्थाभूतेन महाराजेन निर्वासिताऽसि, तत्स्वस्ति भवत्यै, गच्छाम्यहम्।' एवमुक्त्वा स प्रस्थितः।

अथ रघुकुलवध्वाऽभ्यर्थितम्—'यदि रघुवरेण निर्वासितेति भवता नानुकम्पनीया, एषा पुनर्गर्भगता रघु-सगर-दिलीप-दशरथ-प्रभृतीनां तादृशानां संततिरिदानीं प्रतिपालनीया।'

तच्छ्रुत्वा प्रतिनिवृत्तो मुनिरचिन्तयत्—'कथमिक्ष्वाकुवंशमुदाहरति। तदनुयोक्ष्ये।' अनन्तरं स उवाच—'वत्से! किं च दशरथस्य वधूः?'

जानकी व्यज्ञापयत्—'यद्भवानाज्ञापयति।'

मुनिः पुनः पप्रच्छ—'किं च विदेहाधिपतेर्जनकस्य दुहिता?'

सीता प्रत्युदाजहार—'अथ किम्?'

आदिकविरनुयुयुजे—'किं च सीता?'

दुःखिता जनकनन्दिनी प्रतिबभाषे—'नहि सीता, भगवन्! मन्दभागिनी।'

मुनिरुदैरयत्—'हा हतोऽस्मि मन्दभाग्यः। किंकृतोयमत्रभवत्याः प्रासादतलादधोऽवतरः?'

अथ व्रीडिता जानकी मौनमाश्रिता। योगचक्षुषाऽवलोक्य

महर्षिरभणत्—'वत्से ! जनापवादभीरुणा रामेण केवलं परित्यक्ता न तु हृदयेन। निरपराधा त्वमस्माभिरपरित्याज्यैव। पश्चाश्रमपदं गच्छावः।'

सीतयाऽनुयुक्तम्—'को नु त्वम् ?'

मुनिरुवाच—'श्रूयताम्,

सोऽहं चिरन्तनसखा जनकस्य राज्ञ-
स्तातस्य ते दशरथस्य च बालमित्रम्।
वाल्मीकिरस्मि विसृजान्यजनाभिशङ्कां
नान्यस्तवायमबले ! श्वशुरः पिता च ॥ १० ॥

अथ सीता तमभ्यवादयत। मुनिराशशासे—'वीरप्रसवा भव भर्तुश्च पुनर्दर्शनमाप्नुहि।

रामभार्या बभाषे—'त्वं लोकस्य वाल्मीकिर्मम पुनस्तात एव। तद्गच्छ स्वमाश्रमपदम्।' ततस्त्रिपथगामवलोक्याञ्जलिं बध्वाऽचकथत्—'भगवति भागीरथि ! यद्यहं सुखेन गर्भमभिनिर्वर्तयामि तदा तव दिने दिने सुष्ठु ग्रथितया कुन्दमालयोपहारं करिष्यामि।'

[ २ ]

अथ वैदेही समये रामश्यामौ द्वौ पुत्रकावसूत। तयोर्ज्येष्ठः कुश इति शब्दापितो द्वितीयश्च लव इति। द्वयमपि निरवद्यैरवयवैर्दिने दिने बालचन्द्रमण्डलमिव इव वृद्धिं पुपोष। अनन्तरं काले,

धावतो हरिणकैर्यथा प्रतिमल्ला किशोरसिंहानाम्।
तथा च तपस्विनीहृदयं हरतः प्रियदर्शनौ युगलौ ॥ ११ ॥

मुनिजनस्याङ्कादङ्कादतिसंचरतः, वाल्मीकिविरचितं

रामायणं च पठतः। तपोवननिवासिनश्च तदर्थं सीता कृत-पुण्येति तर्कयन्ति।

ततोऽतिगच्छति कियति काले रघुपतिर्नैमिशारण्ये क्रतुमारचयत्। संभृतो यज्ञसंभारो निमन्त्रितश्च सान्तर्वासिनीकस्तपोधनानां संपातः। मुनिरप्युपनिमन्त्रितः।

अथ कदाचिच्चिन्तानिमग्ना वसुमतीसुता सालपादपच्छायायामुपविश्य चिचिन्त—'अहो! अविश्वसनीयता प्रकृतिनिष्ठुरभावानां पुरुषहृदयानाम्। अथ कीदृगहमार्यपुत्रं निन्दामि। पुराहं स्वामिवल्लभतया सकलमिथिलाजनप्रार्थनीया भूत्वाऽद्य पुनरेतदवस्थं शोचनीया संवृत्तेति परित्यागदुःखतो लज्जैव मामधिकतरं बाधते। सांप्रतं पुनर्जातौ दारौ संवर्द्धितौ च। सादर इदानीं भगवान् वाल्मीकिः। न युक्तं ममैतेन तपोवनवासविरुद्धेन दीर्घनिःश्वासेन कालमतिवाहयितुम्।'

एवं विचिन्तयन्तीं वैदेहीं तस्याः प्रियसखी वेदवती शब्दापितवती। नानया चिराद् दृष्टाऽभूज्जानकी। एषा कुशलवावपि तस्यामसंनिहितायामेव सुषुवे। मैथिली तां परिष्वज्योपावेशयत्।

सा पप्रच्छ—'अपि कुशलं कुशलवयोः?

सीतया प्रतिजगदे—'यथा वनवासिनाम्।'

अथ वेदवत्या स्ववृत्तान्तं पृष्टा सा वेणीं निर्दिश्य व्याहरत्—'कीदृशोऽसौ?'

तयाऽतर्कि—'अतिमात्रं संतपत्येषा। तां विनिधारयितुकामा सा व्याहरत्—'अय्यपण्डिते! तथा निरपेक्षस्य

निरनुक्रोशस्य कृते कीदृक् त्वमसितपक्षचन्द्रलेखेव दिने दिने परिहीयसे ?'

सीताऽब्रूत—'कथं स निरनुक्रोशः ?'

वेदवत्युवाच—'येन परित्यक्ताऽसि ।'

सीतयोदितम्—'किमहं परित्यक्ता ?'

वेदवती विहस्य वेणीं परिमार्जयन्ती बभाण—'एवं लोको भणति । सत्यं परित्यक्ता ।'

सीतयोक्तम्—'अथ शरीरेण न पुनर्हृदयेन ।'

वेदवत्या विप्रत्यपद्यत—'कथं परकीयं हृदयं जानासि ?'

सीता जगाद—'कथं तस्य हृदयं सीतायाः परकीयं भविष्यति ।'

वेदवत्याऽऽख्यातताम्—'अहो अपरित्यक्तानुरागिता !'

सीताऽभ्यधात्—'कथं स ममोपरि त्यक्तानुरागो येनातिप्रसिद्ध एव मामधन्यामुद्दिश्याऽऽर्यपुत्रेणानुभूतः सेतुबन्धादिपरिश्रमः ।'

वेदवती प्रावदत्—'आत्मश्लाघिनि ! क्षत्रियाणां समुचित एष रावणस्योपरि रोषो न सीताया उपर्यनुरागः ।

तदप्रतिपद्यमाना सीतामन्त्रयत्—'एतदपरं न प्रेक्षसे यत्सपत्नीजननिःश्वासानुपविद्धे रामवक्षःस्थलेऽतिचिरं संभाविताऽस्मि ।'

अथ वेदवती पुनरावेदयत्—'सखि ! मोक्ताम्य । समासन्नो रामस्य यज्ञदीक्षासमयः । तत्राऽऽश्वस्य सहधर्मचारिण्या पाणिग्रहो निर्वर्तयितव्यः ।'

जनकनन्दिनी प्रतिन्यवेदयत्—'आर्यपुत्रस्य हृदये प्रभवामि न पुनर्हस्ते।'

तस्या दृढानुरागतया विस्मापिता वेदवत्यचकथत्—'सखि! पुत्रमुखदर्शनेनापि ते प्रवासशोको नापनीतः?'

सीतया भणितम्—'शोकपरिहारेणापि शोको वर्धते। यथा यथा द्वौ दारकावीषत्समुद्भिन्नदशनाङ्कुरकोमलेन वदनेन मम मुखमालोकयन्तौ प्रहसतः, अत्यन्तं कोमलेनाऽऽलापेन तादृशं शब्दापयतः, तथा जानामि तस्य मौग्ध्ये निमज्जामीति। सखि वेदवति! अपि नाम कुशलवयोस्तातस्य दर्शनेन जन्मामोघं भवेदिति।'

एवमाभाषमाणयोस्तयोर्घोषणाघोषोऽश्रूयत—'भो भोः! आश्रमवासिनो जनाः! शृण्वन्तु भवन्तः। इतो नातिदूरे महाक्रतुरश्वमेधः प्रवर्तते। संभृतानि यज्ञोपकरणानि। संनिपतिताश्च नानादेशाश्रमवासिना वसिष्ठात्रेयप्रभृतयो महामुनयः। केवलं भगवतो वाल्मीकेरागमनमुदीक्षमाणो नाद्यापि यज्ञदीक्षां प्रविशति महाराजः। आगतश्च वाल्मीकितपोवनवासिनामुपनिमन्त्रणार्थं रामदूतः। तस्मान्नैव परिलम्बितव्यम्।'

अथ प्रस्थानघोषणासमनन्तरं गृहीतयज्ञोपकरणोऽग्रतः प्रतस्थे काश्यपः। रामरामाऽपि कुशलवयोः प्रस्थानमङ्गलमनुष्ठातुं प्रचलिता।

[ २ ]

अथ सुकुमारा सीता, कोमलौ च कुशलवौ तापससार्थेन सहानस्तमिते सूर्ये नैमिशं प्राप्ताः। भगवतो वाल्मीकेरागमनमुपलभ्य दाशरथी तद्दर्शनार्थं गोमतीतीराश्रमपदमुच्चलितौ।

शोकसंतप्तो लक्ष्मणश्चिन्तयामास—

'प्रथममनपराधां तां समुत्सृज्य देवी-
मगममहमगाधे कानने त्यक्तुकामः ।
पुनरपि कुलशेषं राममादाय देवं
स्वजनविपदि दक्षः क्वाप्यधन्यः प्रयामि ॥' १२ ॥

शोकविक्लवो ज्येष्ठकाकुत्स्थोऽपि निःश्वस्य शशंस—'भो भोः! कष्टम्! अतिनिरालम्बस्तपस्विन्याः प्रवासः।

पातयति सा क्व दृष्टिं कस्मिन्नासाद्य चित्तमाश्वसिति।
जीवति कथं निराशा श्वापदभवने वने सीता ॥' १३ ॥

अग्रजस्य समवस्थां विलोकयता लघुराघवेण चिन्तितम्—'आर्याया विप्रवासं तनयवैशसं च समनुचिन्त्य सुतरामयं संतप्यते। ततः प्रस्तावान्तरेण देवीवृत्तान्तमपसारयामि।' तस्मात्स उवाच—'इतस्तावदवलोकयत्वार्यः,

मरकतहरितानामम्भसामेकयोनि-
र्मदकलकलहंसीगीतरम्योपकण्ठा ।
नलिनवनविकासैर्वासयन्ती दिगन्तान्
नरवर! पुरतस्ते दृश्यते गोमतीयम् ॥' १४ ॥

ततः किंचिन्निर्वर्ण्य स भूयोऽभाषत—

'अभिनवरचितानि देवतानां जलकुसुमैर्बलिमन्ति सैकतानि ।
इयमपि कुरुते तरङ्गमध्ये भुजगवधूललितानि कुन्दमाला ॥ १५ ॥

आश्चर्यमाश्चर्यम्! एषा हि कुन्दमाला चरणसपर्यामिव कर्तुकामया समुद्रगामिन्या तरङ्गपरम्परया क्रमेण देवस्य पादान्तिकमुपहृता। अवहितं प्रेक्षणीया विरचना, तदवलोकयत्वार्यः।'

अथ मालां गृहीत्वा सोऽग्रजस्योपनिनाय। तां निर्वर्ण्य-यन्रोमाञ्चितो रामोऽभिदधे—'वत्स! दृष्टपूर्वमिदं कुसुम-रचनाविन्यासकौशलम्। क्व वाऽन्यत्रेदृशस्यावस्थानम्।'

कनिष्ठकाकुत्स्थोऽचकथत्—'किं देव्याम्?'

रामेण मन्त्रितम्—'अथ किम्।'

पुनः कनिष्ठेन कथितम्—'को जानाति दुर्विदग्धः प्रजापतिः कथं कथं क्रीडतीति। गच्छत्वार्यः। इदमेव गोमतीतीरं प्रतिस्रोतोऽनुसरावो यावदस्याः कुन्दमालायाः प्रभवमासा-सादयावः।'

अथ ज्येष्ठः प्रतिजगाद—'सुलभसादृश्यो लोकसंनिवेशः। न चैतावदस्माकं भागधेयम्। इतश्चात्यन्तविप्रकृष्टे देशे परित्य-क्तायाः सीतायाः आगमनं न संभाव्यते। तथाऽप्यादेशय मार्गं येनेदं सलिलान्तरमनुश्चन्तौ वसतिमासादयावः।'

ततः स्तोकं व्रजित्वा 'भगवतो वाल्मीकेराश्रमसंनिवेशः संनिहितः' इत्यन्वमीयत। किंचिदग्रतोऽपसृत्य रामानुजेन पुलिनतलसंनिवेशानि पदानि दृष्टानि। तेषूपदर्शितेषु रघू-द्वहः सहर्षमुदाजहार—'ननु सीतायाः पदानि।' ततस्तामेव पदपङ्क्तिमनुसरन्तौ वाल्मीकेराश्रमपदमभ्यसरतां भ्रातरौ। किंचिद्गत्वा च पदपङ्क्तिं क्रमेणामार्गवशात्पुलिनतलं परित्यज्यस्थलमारूढां प्रणष्टां च वीक्ष्य पुरस्तात्संदृश्यमान-लतागुल्मप्रच्छायमतिरमणीयं श्रमं व्यपनेतुमध्यासाञ्चक्राते। तत्र कौसल्यातनूजः सहसा निःश्वस्य सबाष्पमभाषत —'वत्स! वत्स!'

अथ दशरथवधूः सवनं निर्वर्त्य, संध्यामुपास्य, हुतवहं

हुत्वा, भगवतीं भागीरथीमवगाह्य, तामुद्दिश्य स्वहस्तग्रथितां कुन्दमालां समर्प्योन्नतगम्भीरशीतलं लताजालं प्रविश्यातिथिजनोपस्थानयोग्यानि कुसुमान्यवचेतुं गता ।

ततः स्वभर्तुः स्वरं चिरस्याऽऽकर्ण्य पुलकिता तस्यास्तनूः। 'सोऽत्र निरनुक्रोशः संप्राप्तः' इत्युन्नीय तं निर्वर्णयितुं व्यवसिता सा समनन्तरमचिन्तयत्—'अथवा तथा पराङ्मुखे जने एवमभिमुखीभवामीति यत्सत्यमात्मनोऽप्यहं लज्जिताऽस्मि। तन्न प्रेक्षिष्ये ।' एवं विमृश्य सा विमुखीवभूव । परं न साऽऽत्मनः प्रवभूव । तस्या दृष्टिर्बलात्कारेण तत एवाऽऽवर्जिता । तं निध्याय साऽऽकलयत्—'अहो ! दृष्ट इति परितोषः, चिरप्रवास इति मन्युः, परिक्षाम इत्युद्वेगः, निरनुक्रोश इत्यभिमानः, चिरपरिचित इत्यनुरागः, दर्शनीय इत्युत्कण्ठा, स्वामीति बहुमानः, कुशलवयोस्तात इति कुटुम्बिनीसद्भावः, अपराधं प्रवेशिताऽस्मीति लज्जा । न जानाम्यार्यपुत्रदर्शनेन कीदृशीमवस्थामनुभवामीति ।' एवं विविधभावाननुभवन्ती सा राघवयोरालपितं श्रोतुमुपक्रान्ता।

लक्ष्मणो ललाप—'किमर्थमार्यो मामकस्मादेवाऽऽमन्त्र्य बाष्पायमाननयनस्तूष्णीमधोमुखः संवृत्तः ?'

तेन प्रत्यवाचि—'निःसंपाताविविक्तमिदमरण्यं तटरुहतरुच्छायासमाकीर्णरमणीयसैकतां प्रसन्नसलिलवाहिनीं समुद्रगामिनीं चावलोकयन्संस्मृत्य दण्डकावनवासमेवं वैक्लव्यमनुप्राप्तोऽस्मि ।'

सीतयाऽऽलोचितम्—'आर्यपुत्र ! स्मरसि वनवासं न पुनर्वनवासिनं जनम् ।'

लक्ष्मणेनानुयुक्तम्—'किं तत्र दुःखैकवासे वनवासे स्मर्तव्यमिति ?'

रामेन प्रत्युक्तम्—'वत्स लक्ष्मण ! किमेवं ब्रवीषि ? पश्य पश्य,

किसलयसुकुमारं पाणिमालम्ब्य देव्या
विविधरतिसखीभिः संकथाभिर्दिनान्ते ।
चरणगमनवेगान्मन्थरस्य स्मरामि
स्नुतपयसि तटिन्याः सैकते चङ्क्रमस्य ॥' १६ ॥

सीतया निध्यातम्—'अयि निरनुक्रोश ! किमेतेन संलापस्थानेनाशरणं दुःखितं जनमधिकतरं बाधसे ?'

अनुजेनाऽऽत्मानं पर्यवस्थापयितुं विज्ञापितो रघुपतिरुवाच—'कथं न शोचामि मन्दभाग्यः ? पश्य पश्य,

पूर्वं वनप्रवासः पश्चाल्लङ्का ततः प्रवासोऽयम् ।
आसाद्य मामधन्यं दुःखाद्दुःखं गता सीता ॥' १७ ॥

सीतयाऽतर्कि—'आर्यपुत्र ! निर्वासितताया असदृशम् ।'

समनन्तरं रामः 'हा जनकराजपुत्रि ! हा वनवाससहायिनि ! हा क्व गतासि ? देहि मे प्रतिवचनम् ।' इत्येवं बहुविधं व्यलपत् । ततः सोऽनुजं निजगाद—'वत्स लक्ष्मण ! किं शक्यते ज्ञातुं क्व वर्तत इति ?'

तेन प्रतिव्याहृतम्—'न शक्यते क्व वर्तत इति ज्ञातुम् ।'

अथ रोदितुं प्रस्तुतः श्रीराघवः । तथाविधं वीक्ष्य बलवदनुतप्ताऽवनितनूजा 'साहसतः स्तिमितदर्शनं प्रमार्जयाम्यश्रुसंचयम्' इति पदमुत्क्षिप्य 'अथवा जनप्रवादो रक्षितव्यः'

इति निवृत्ता। ततश्च 'आर्यपुत्रेण यावन्न प्रेक्ष्ये तावच्छोका-वेगबलात्कारिता न प्रभवाम्यात्मनः। मुनिजनसंपातसमुचितोऽयमुद्देशः, अतो यदृच्छागतः कोऽपि मां प्रेक्षिष्यते। तदेतेन लताजालप्रच्छन्नसुखसंचारेण मार्गेणाऽऽश्रमं गत्वा कुशलवौ संभावयामि' इति समीक्ष्य रामं सबहुमानमीक्षमाणा प्रयाता।

अथ 'लक्ष्मणसहायो रामभद्रस्तपोवनमिदमनुप्राप्तः' इत्याकर्ण्य 'स कदाचिन्माध्याह्निककार्यसंपादनव्यग्रानस्मान्मन्यमानो बहिरवस्थितो भवेत्' इत्याशङ्कमानेन मुनिना वाल्मीकिना 'त्वमेनमुपक्रम्य परिसमाप्तमाध्याह्निककार्यं दर्शनमाकाङ्क्षमाणं मामाऽवेदय' इति समादिष्टो वादरायणस्तमन्वेषयंस्तत्र संप्राप्तः। तमापतन्तमवलोक्य दाशरथिरश्रूणि प्रमृज्य कृतधैर्यः स्थितिं चकार। ऋषी राघवावाश्रमसंनिवेशं निनाय।

[ ४ ]

अथ 'कदाचिद्रामायणसंगीतकनिमित्तं वाल्मीकितपोवनं संप्राप्तया तिलोत्तमया वेदवती भणिता—'अहं प्रभावनिर्मितेन सीतारूपेण रामस्य दर्शनपथमवतीर्य रामः सीताया उपरि सानुकम्पो न वेति ज्ञातुं न्विच्छामि।' यदा च तया प्रवृत्त एष आलापस्तदाऽऽसन्नगुल्मलतागहनप्रच्छन्नस्थितेन रामवयस्येनाऽऽर्यहसितेन सर्वमाकर्णितम्। वेदवत्यपि तदिदं यज्ञवेदेरवगम्य 'यदि गृहीतसङ्केतस्य रामस्याग्रतस्तिलोत्तमा सीतायाश्चरितान्यनुवर्तिष्यते ततो विपरीत उपहासो भवेत्' इति तिलोत्तमां न्यवारयत्।

अथैकदा संपादिताभिस्तपोवनवासिनीभिर्विज्ञापितो भग-

वान्वाल्मीकिः—'एषा नूनमाश्रमदीर्घिका पद्मापचयादिष्वात्मन उपभोगेष्विदानीं महाराजस्य संनिधानेन परपुरुषनयनपरिक्षिप्ता न शक्या स्त्रीजनेनावगाहितुम्' इति। तदा भगवता वाल्मीकिना निध्याननिश्चलनयनेन मुहूर्तं निध्याय भणितम्—'एतस्यां दीर्घिकायां वर्तमानः स्त्रीजनः पुरुषनयनानामगोचरो भविष्यति' इति। ततः प्रभृति सीता रामस्य दर्शनपथं परिहरन्ती दीर्घिकातीरे सकलं दिवसमत्यवाहयत्।

यदा चैकदा तिलोत्तमा समागता तदा वैदेही कमप्यपूर्वमुत्तरीययुगलमधारयत्। तदा ह्यत्यन्तशीतलस्तरङ्गवाही दीर्घो दीर्घिकामारुतोऽवहत्। तद्धि शारदचन्द्रकिरणराशिपरिपाण्डुरं सुरभिबहुलामोदसमारब्धमधुकरकुलसंगीतमनोहरं प्रावरणं पूर्ववनवासे दक्षिणापथं प्रस्थितायाः सीतायाश्चिरनिवाससमुत्पन्नसखीस्नेहया चिन्ताकुलया वनदेवतया मायावत्या स्मरणनिमित्तं चन्द्रधवलं वासितसुगन्धमात्मनो दिव्यमुत्तरीयकं प्रणीतमभूत्। तच्च तद्भर्तुस्तस्याश्च हस्तेऽत्यन्तसखीभूतं चिरदुःखसहायमिति तया सादरं तदा धारितमासीत्। 'एतत्तपोवनमागत आर्यपुत्रः, अहं चाक्षमा तस्य प्रत्यक्षीभवितुम्' इति बलवत्तस्या आवेगकारणम्। एकाकिनी सा दीर्घनिःश्वासै रात्रिन्दिवमत्यवाहयत्।

अथ दाशरथिं चिन्तातुरमवलोक्य नैमिशारण्यरामणीयकदर्शनेन तं विनोदयितुमुक्तः कण्व आत्मना समं तं नयँस्तत्र समापतितः। स राममुवाच—

'सुरभिकुसुमगन्धैर्वासिताशामुखानां
फलभरनमितानां पादपानां सहस्रैः।

विरचितपरिवेषश्यामलोपान्तरेखो

रमयति हृदयं ते हन्त कच्चिद्वनान्तः ?' १८ ॥

रघूद्वहेण प्रतिगदितम्—'बहुमाननिरन्तरीकृतमानसं मां तपोवनमिदं रमयति न रमयतीति वचनावकाश एव नास्ति।'

नैमिशारण्यं प्रति रघुकुलतिलकस्य प्रगाढां भक्तिं विज्ञाय कण्वस्तदेव काननं सातिशयं स्तोतुमारेभे। तथागतेऽपि लक्ष्मणाग्रजस्य चेतो न प्रवासिनं जनं जन्तुं वा विहाय कोऽप्यावर्जयति। न परिहीयते तस्य शोकावेगः। तस्य तां समवस्थां वलोक्य 'अहो रामस्य प्रवासे महान्निर्वेदः' इत्येवमभूत् कण्वहृदये। स उवाच—'इतस्तावदवधीयतां दृष्टिः,

मुक्त्वा वसन्तविरहेऽपि मुनिप्रभावा-

दुन्निद्रसान्द्रकुसुमां सहकारशाखाम्।

धावन्त्यमी मधुकराः क्रतुहोमधूम-

संत्रासिताः सरसि वारिरुहोदराणि ॥' १९ ॥

दाशरथिरवदत्—'कथमनवरताहुतिसंवर्धितो धूमराशिर्मधुकरानिवास्मान् पर्याकुलयितुं प्रवृत्तः।

सीताविरहबाष्पेण चरता नित्यदुःखिते।

बाढमायासिते भूयो धूमेन मम लोचने ॥' २० ॥

कण्वोऽपि—'तदेनामग्रतोवर्तिनीमाश्रमदीर्घिकामवगाह्य शीतलेन सलिलेन क्षालितव्यपनीतनयनखेदं विश्रम्य मुहूर्तमत्र तिष्ठतु' इति भणित्वा कुलपतेरग्निहोत्रवेलां संनिधानेन संभावयितुमव्रजत्।'

काकुत्स्थो दीर्घिकामवतीर्य सलिलमध्ये छायां निर्वर्ण्य ससंभ्रममुवाच—'कथं सीताऽप्यत्रैव !'

हर्षविस्मयमुपगतं तं विलोक्य जानकी 'हा धिक् ! हंस-मिथुनदर्शनव्यापृतया मयाऽतर्कितसमागत आर्यपुत्रो न संलक्षितः' इत्यभिधायापसृता ।

विस्वमनालोक्य कौसल्याकुमारोऽमन्त्रयत्—'कथमसंभाव्यैव मां प्रस्थिता सीता' तामालम्बितुं बाहू प्रसार्य सोऽचकथत्—' नैषा वैदेही, किन्तु,

वैदेह्या क्वापि गच्छन्त्या दीर्घिकातीरवर्त्मना ।
अन्तर्गतजलच्छाया मया सैवेति वीक्षिता ॥' २१ ॥

अथ स तस्याः प्रतिकृतेर्मूलप्रकृतिमन्वेष्टुं प्रवृत्तः । निःसंतापविविक्तमभूत्तद्दीर्घिकातीरम् । 'विम्बेन च विना प्रतिविम्बमित्यसंभाव्यमेतत् । किमिदम् ?' इति सविमर्शता रघुपतेः । सभूरिक्लेशमन्विष्यापि प्रतिकृतिमनुपलभमानो मोहमुपेतो जानकीजानिः ।

वल्लभं तदवस्थं विलोक्य शोकवेगबलात्कारिता जनकनन्दिनी न प्रबभूवाऽऽत्मानं तदुपसर्पणान्निवारयितुम् । उपसृत्य निर्वर्ण्य च ' हा धिक् ! हा धिक् ! परित्यक्तचेतन इवाऽऽर्यपुत्रः' इति वदन्ती तं परिषस्वजे । तथा गते प्रत्यागतस्तद्वल्लभः । सोऽप्यात्मानं सरोमाञ्चं पर्यलक्षयत । साऽपि तथा नाम निर्वासिता तादृशं साहसमनुष्ठाय भीता संवृत्ता ।

विलपन्दाशरथिरुवाच—'गाढमालिङ्ग वैदेहि !'

सा समीक्षितवती—'अनपराद्धाऽस्मि ।'

स पुनरवोचत्— 'देहि मे दर्शनं प्रिये !'

साऽचिन्तयत्—'प्रभवति सिद्धशासनम्, किमत्र करोमि मन्दभागा !'

सोऽभ्यर्थयाञ्चक्रे—'त्यज्यतां दीर्घं रोषोऽयम्'

साऽपि प्रार्थयत्—'अहमप्यार्यपुत्रमेवं विज्ञापयामि ।'

राम उवाच— 'किं नु निष्करुणा मयि ॥' २२ ॥

सीताऽवदत्—'आर्यपुत्र ! विपरीतः खलूपालम्भः ।'

स पुनरप्युवाच—

'देवि ! विज्ञापयामि त्वां यत्त्वं चारित्रशालिनी ।

तयोदितम्—'अहो अत्यागयोग्याः प्राणाः ।'

सोऽवदत्—'निर्वासिताऽसि विषयाद्'

तया प्रत्युक्तम्—'प्रभवत्यार्यपुत्रः सकलस्य परिजनस्य ।'

राम उवाच— अस्मिन्दोषे प्रसीद मे ॥' २३ ॥

सीताऽवदत्—'त्वं प्रसीद । नित्यप्रसन्नाऽहम् ।'

यदा च बहु विलप्यापि न किमपि प्रतिवचनमवाप्तवान् कौसलेशस्तदा 'हा प्रिये जनकराजपुत्रि ! देहि मे प्रतिवचनम्' इति ब्रुवन्भूयो लुप्तचेतनो बभूव। सीता तं पटान्तेनावीजयत् । प्रकृतिमापन्नः सीतापतिः करं प्रसार्य पटान्तं गृहीत्वोवाच—'कथं पटान्त इव संलक्ष्यते। को नु खल्वेष भविष्यति ?' अनन्तरं विचिन्त्योक्तवान्—'अथवा,

जनकदुहितरं विहाय देवीं जनमपरं भुवने तथाप्रभावम् ।

अहमिह न विलोकयामि या मे स्पृशति पटान्तसमीरणैः शरीरम् ॥'२४॥

तामवलोकयितुं चक्षुरुन्मील्य सोऽनवरतबाष्पपिहितलोचनतया न किंचिदपि द्रष्टुं प्रबभूव। ततस्तेनैवोत्तरीयान्तेनाश्रूणि प्रमार्जन् तमाचकर्ष। सीताऽपि तममुञ्चत्।

पतितमुत्तरीयमवलोक्य राघवोऽवदत्—'कथमुत्तरीयमात्रमेव पश्यामि न पुनः परिधायकम् ।

अन्यांशुकमतिरभसादविमृश्यविधायिना मयाऽऽकृष्टम् ।
गगनतलात्परिगलितं ज्योत्स्नानिर्मोकललितमिदम् ॥' २५ ॥

ततः पुनर्निर्वर्ण्य व्याहार्षीत्—'सुव्यक्तं तदेव चित्रकूट-वनदेवतया मायावत्या प्रदर्शितम् ।' उत्तरीयं तदुपलभ्य सातिशयं हर्षमुपगतः श्रीरामभद्रोऽचिन्तयत्—'कीदृशमिदानीमस्य प्रियावल्लभस्य संमानविशेषमनुतिष्ठामि ?' ततो विचिन्त्य स तत् प्रावृणोत् । ततः 'द्वितीयप्रावरणं मामवलोक्य किमपि चिन्तयिष्यति मुनिजनः' इति विमृश्याऽऽत्मीयमुत्तरीयमुच्चिक्षेप ।

अथ पृथिवीनन्दिनी तत् हर्षनिर्भरं गृहीत्वा प्रावृतवती । अप्राप्तमहीतलमेव केनाप्यपहृतं प्रावरणं रामस्य सुमहद्विस्मयमाततान । ततश्च सः 'जानामि प्रत्यासन्नफलो मे मनोरथः' इत्युन्निनाय । अनन्तरं तेन निध्यातम्—'उत्तरीयापहारो जलच्छायायां दृश्यते, न सीता । किमेतत् ? भवतु, सिद्धाश्रमवासिभ्यो जनेभ्योऽस्याः प्रभावो भविष्यति तत्को नु खल्वस्याः प्रत्यासन्नदर्शनेऽभ्युपायः ?'

ततः स पुनरभ्यधात्—'अयि वैदेहि ! न किंचित्स्मरसि कस्यचित्पूर्ववृत्तान्तस्य, यन्मामेवं दर्शनमात्रेणापि न संभावयासि ?'

सीतया व्यचारि—'अद्यापि कीदृशः पूर्ववृत्तान्तः ?'

अथ दाशरथिमन्विष्यंस्तत्र समागतः कौशिकस्तमुवाच—'अद्य सूर्योदयप्रभृति मम त्वामन्वेषमाणस्य सकलो दिवसोऽतिक्रान्तः । श्रुतं मया प्राभातिके समयेऽतिमुक्तमण्डपाभ्यन्तरे प्रच्छन्नस्थितेन विस्रब्धं प्रवृत्तसंकथानां मुनिकन्यकानामप्सर-

सामपि मुखतः किमपि तपोवनरहस्यं मन्त्रयमाणम्। तच्चाऽऽसीत्तवाप्रियम्। अभ्यन्तरस्थितामिव गूढगर्भमधिकतरं बाधते।'

राघवेणाभिहितम्—'कीदृशं तपोवनरहस्यम् ?'

कौशिकः शशंस—'तत्र भवती पुराणस्वर्गदासी किल तत्रभवत्याश्चिरकालवियुक्ताया विदेहराजतनयायाश्चरितमनुष्ठाय प्रियवयस्यमुपहासितुमिच्छति ।'

रामभद्रश्चिचिन्त—'कष्टं सम्यगुपलक्षितं कौशिकेन। अन्यथा हि दृश्यमाने प्रियासंनिधानाभिज्ञाने स्वयं न दृश्यत इत्यसंभाव्यमेतन्मानुषीषु। सर्वथा वञ्चितोऽस्मि कामरूपिण्या तिलोत्तमया ।'

रामं निर्वर्णयता कौशिकेनाभिदधे—'भो वयस्य ! विलक्षमुख इव दृश्यसे। किं तया वञ्चितोऽसि ?'

राघवः प्रत्यूचे—'वञ्चितः कृतोऽस्मि ।'

विकत्थनेन कौशिकेन शशंसे—'किं मया श्रुतं रहस्यमन्यथा भवति ?'

[ ५ ]

अवसितप्रातःकृत्यः कौसल्यायनिर्मुनीनभिवादयितुं प्रयातः। चिन्तापुरस्कृताश्चर्यभूतमिवाभूदतीतदिवसवृत्तं तस्य।

काकुत्स्थं सचिन्तमास्थानमण्डपगतसिंहासन उपवेश्य कौशिकः स्ववयस्यस्याभिप्रायं लक्षयितुमगदत्—'भो राजन्! एत आसनकेसरिणो गुरुतरभारोद्वहनजातपरिश्रमा इव मुखविवरविनिर्गतमुक्ताकलापच्छलेन फेनधारामुद्वमन्ति, तथा तर्कयामि बाहुयुगलेन पृथ्वीं हृदयेन पृथिवीदुहितरमुद्वहन्नतीव गुरुतरः संवृत्त इति।

'सीताकथामुपक्षिप्य कौशिको नूनं जिज्ञासते। एष बालमित्रम्, तदस्मै यथास्थितं निवेदयामि' इति समीक्ष्य जानकीजानिर्व्याजहार—'वयस्य ! अस्त्येतत्। स्मराम्यहमविच्छेदेन वैदेहीम्।'

कौशिकः पुनः पप्रच्छ—'किं दोषत उत गुणतः ?'

'न दोषतो न गुणतः' इति रामभद्रेण प्रत्युक्तः स पुनरन्वयुङ्क्त—'एतदुभयमुज्झित्वा कथं सीमन्तिन्यः स्मर्यन्ते ?'

मैथिलीवल्लभो ललाप—'अन्यदम्पतीविषय एव कारणानुरोधी प्रेमावेशः। सीतारामयोस्तु न तथा।

दुःखे सुखेष्वप्यपरिच्छदत्वादसूच्यमासीच्चिरमात्मनीव।
तस्यां स्थितो दोषगुणानपेक्षो निर्व्याजसिद्धो मम भावबन्धः ॥' २६ ॥

कौशिक उवाच—'मा सुमं वैदेहीमलीकमधुरवचनैरस्मादृशं वञ्चयसि। स खलु त्वं देवीमन्तरेण......'

अन्तरा प्रतिबध्नन्नयोध्याधिपतिः प्रत्युवाच—'न समीचीनमध्यवसितम् "एकान्ते सीतानिरपेक्षो रामः" इति।

अन्तरिता अनुरागा भावा मम कर्कशस्य बाह्येन।
तन्तव इव सुकुमाराः प्रच्छन्नाः पद्मनालस्य ॥ २७ ॥

वयस्य ! वर्तमाना सीताकथा द्वयोः संतापकारिणी। तद्गच्छ प्रतीहारभूमिम्। समाज्ञापय दौवारिकान् "समासन्नस्तपोधनानां संपातसमयस्तस्मात्संभृतवेत्राणि सर्वद्वाराणि क्रियन्ताम्।" '

निष्क्रान्तः कौशिकः प्रतिनिवृत्याभ्यधात्—'ही ! ही ! सांप्रतं मया राज्ञ आज्ञया प्रतीहारनिक्षिप्तेन दृष्टौ सुस्निग्धश्यामलच्छायावनुद्भिन्नतारुण्यविग्रहौ तोरणस्तम्भावस्थितौ

मङ्गलाङ्कुराविव बालभावेन, असमाप्तप्रमाणाविव, अप्रमादाविव कन्दर्पदारकाविव रूपसौभाग्येन, उच्चतरौ सालतरू इव, प्रस्पन्दाविव, लोलतराविव, महाबलाविव, अत्यन्तधीराविव, अत्यन्तललिताविव, असंक्षेपिताविव, वयस्यस्य कलादर्शनावागतौ द्वौ तापसकुमारकौ ।'

रघुपतिः साकूतमुवाच—'कस्तयोरस्मन्नयनसीमावतरणप्रतिबन्धः ?'

कौशिकेन शशंसे—'शृणु तावदेतयोर्बालभावललितयोः कौतूहलसंबद्धयोरेतमुपन्यासम्। तौ किल भगवतो वाल्मीकिमहर्षेः शिष्यौ प्रवीणौ, वीणाकलाविज्ञानेऽपूर्वं किलागमं धारयतः। एतौ किलैवं वदतः "राजर्षेर्दुष्करविन्यासं महाकविसंग्रथितमहापुरुषचरित्रबन्धं महार्थगम्भीरं केनाप्यश्रुतपूर्वमागमं गान्धर्ववेदसंवादि सरसं योगविरचितवर्णरामणीयकं वीणातन्त्रीरसितानुविद्धं गीतं गायावस्तदा विज्ञानविशेषप्रसन्नहृदयो राजा यद्वृत्तान्तमनुष्ठास्यत्येष ज्ञातव्य इत्यस्माकं भगवतो वाल्मीकिमहर्षेरादेशः" इति ।'

गुरुराघव उवाच—'अहो ज्ञानावलेपः शौण्डीर्यगर्भश्चोपन्यासः ! वयस्य ! यथाभिमतं प्रतिज्ञाय प्रवेशयाविलम्बितं पुरा तौ न चिरावस्थाननिर्वेदेन पराङ्मुखीभवतः ।'

कौशिकेनाभिहितम्—'कुत इदानीं निर्वेदः ? तौ ह्यन्योन्यवत्सलत्वमाकारसादृश्यं काकपक्षपरिभूषितं च वदनं प्रेक्ष्य "एवं रामलक्ष्मणौ महाराजदशरथे ध्रियमाणे राजस्थानमलङ्कुर्वन्तावभूताम्" इति युवयोर्बालभावं महाराजं च स्मृत्वा बाष्पपूर्णनयनैः सौविदल्लैः परिपृष्टौ तिष्ठतः ।'

'अस्मच्छैशवानुकारिणी तयोराकृतिः' इति वर्धितकुतूहलो दशरथतनयस्तयोरविलम्बं प्रवेशमादिदेश। क्षणेनैवानीतौ तौ कौशिकेन।

तापसकुमारकाववलोक्यास्मायितो रघुवंशकेतुः। संनमितस्वान्तः स भावशबलतया चित्रामवस्थामापन्नः। संस्तम्भितचित्तवृत्तिं मोहमिवानुभवन्नसौ बाष्पं मुमोच।

कुशोऽपि यथा यथा कौसलपार्थिवं प्रत्यासीदति तथा तथा हृदयोत्कम्पकारिसाध्वसवशान्न स्वाङ्गानां प्रभवति स्म। तुल्यावलेपस्तं पर्यत्यजत्। रामभद्रस्य पुरस्तादनवनतमुत्तमाङ्गमुद्वोढुमशक्नुवन्स कोसलेशं प्रणनाम। तथैव लवोऽपि परमवशत्वमापादितस्तं नमश्चकार।

तापसमर्यादामुल्लङ्घितांवीक्ष्य विषादमुपेतो मनुवंशकेतुः। सोऽभ्यदधात्—'आर्यावतिदाक्षिण्यपेशलौ! श्रूयताम्,

अयं भवद्भ्यामातिसंभ्रमेण मयि प्रयुक्तः शिरसा प्रणामः।
भवत्विदानीं मदनुज्ञयैव युष्मद्गुरूणां चरणोपहारः॥' २८॥

कुशलवावुत्थायावोचताम्—'अपि कुशलं महाराजस्य?'

लक्ष्मणाग्रजोऽचकथत्—'युष्मद्दर्शनात्कुशलमिव।' ततस्तौ परिष्वक्तवान्स तनयपरिष्वङ्गसौख्यतुलामनुबभूव। अनन्तरमासनार्धमुपवेशयन् 'राजासनं खल्वेतन्न युक्तमध्यासितुम्' इति ताभ्यामुक्तः सः 'सव्यवधानं न चारित्रलोपाय' इति वदन्नङ्कमासयत्। ततः सास्रनेत्रोऽसौ तौ भूयोऽपि परिष्वज्य कौशिकं पृष्टवान्—'अपि स्मरति भवान्निर्वासितायाः सीतायाः कियन्तः संवत्सरा अतिक्रान्ता इति?'

गणनां विधाय कौशिकः प्रत्यब्रवीत्—'सर्वथाऽद्य दशमः

संवत्सरो देव्याः सीतायाः स्वहस्तेन परिप्रेषितायाः।'

अथो दाशरथिः कुमारौ निर्वर्णयन्नुवाच—'यदि गर्भं स्वस्ति निर्वर्तयेत्, यदि कश्चिदवगाहेत तदपत्यमियता कालेनेदृशीमवस्थाम्।' अथ स्तम्भितः कौशिकस्तयाऽविज्ञातविप्रयुक्ततनयसंकथया। कौशिको रोदितुमारेभे। रामोऽपि कुमारकौ परिष्वज्य तदेवोपक्रान्तवान्।

अथ कौशिकः सहसा ससंभ्रमुवाच—'अविधा मुञ्च! मुञ्च! जीवतु तपस्वितनयः। अवतरतु सिंहासनतः।'

सहसा कुमारौ मुञ्चञ्जानकीजानिः कौशिकं तद्विज्ञापनाया हेतुमपृच्छत्। सोऽवर्णयत्—'श्रुतं मया साकेतनिवासिनां चिरजीवितानां मुखतः "यः किलाराघवः इमं सिंहासनमधिरोहति तस्य मूर्धा शतधा शतधा विदलेत्" इति।'

अथ राघवोऽपि तौ शीघ्रमवतरितुमादिदेश, अवतीर्य भूमावुपविष्टौ चान्वयुङ्क्त—'अपि स्वस्थौ भवन्तौ, मूर्ध्नो वा न किंचिद्विकारः?'

कुशलवावूचतुः—'भोः! स्वस्थावेवाऽऽवाम्, न किंचिन्मूर्ध्नो विकारः।'

अभूदिदमाश्चर्यभूतमिव कौशिकस्य, परं रामेण न्यगादि—'किमत्राऽऽश्चर्यम्। स्वस्त्ययनपरिगृहीतानि तपश्शरीराणि।'

अथ कुमारद्वयीसौन्दर्यावलोकनजनितेन कौतूहलेन प्रतार्यमाणो दाशरथिरुवाद—'कतमो वर्ण आश्रमो वा भवतोर्जन्मदीक्षाभ्यामलङ्क्रियते?'

लवोऽवदत्—'द्वितीयो वर्णः प्रथम आश्रमः।'

तच्छ्रुत्वैवमभूत् काकुत्स्थचेतसि 'नैतावग्रजन्मानौ। तदल्प-

पराधः प्रणामप्रयोगो न्यूनासनपरिग्रहश्च।' ततः सोऽभाषत —'अथ क्षत्रियकुलपितामहयोः सूर्याचन्द्रमसोः को वा भवतोर्वंशस्य कर्ता ?'

लव उवाद—'भगवान्सहस्रदीधितिः।'

रामेण तर्कितम्—'कथमस्मत्समानाभिजनौ संवृत्तौ !'

कौशिकः कथयामास—'किं द्वयोरप्येकमेव प्रतिवचनम् ?'

लव ललाप—'भ्रातरावावां सौदर्यौ।'

राघवोऽवादीत्—'संवादी संनिवेशः। वयसस्तु न किंचिदन्तरम् ?'

लवः प्रत्यवादीत्—'आवां यमलौ।'

रामभद्रेण भणितम्—'सम्प्रति युज्यते। को भवतोर्ज्यायान् ? किं नामधेयम् ?'

अथ लव आत्मनो नामधेयं निवेद्यकुशनामावेदनप्रस्तावे निष्प्रतिपत्तिर्जातः। ततः कुशः स्वकं नाम विज्ञापितवान्। राघवोऽप्यनेनोपक्रमेण कुशस्य ज्यायस्त्वमुदनैषीत्। अनन्तरं परितुष्टेन कौसल्यायनिना गुरोर्नामधेये जिज्ञासिते लवेनाभिहितम्—'ननु भगवान् वाल्मीकिः।'

दाशरथिरप्रश्नयत्—'केन संबन्धेन ?'

लवेनोक्तम्—'उपनयनोपदेशेन।'

अथ कोसलेशः शशंस—'अहमत्र भवतोः शरीरस्य धातारं पितरं वेदितुमिच्छामि।'

लवोऽवदत्—'न हि जानाम्यस्य नामधेयम्। न कश्चिदस्मिंस्तपोवने तस्य नाम व्यवहरति।'

कुशस्तु शशंस—'जानाम्यस्य नामधेयम्। अम्बा तं "निरनुक्रोशः" इति व्यपदिशति।'

अपूर्वे तस्मिन्नामधेये व्यस्मयत कौसल्यानन्दनः। कौशिकस्तु परिपृष्टवान्—'किं कुपितैवं भणत्युत प्रकृतिस्था?'

कुशोऽशंसत्—'यद्यावयोर्बालभावजनितं किंचिदविनयं पश्यति तदैवमधिक्षिपति "निरनुक्रोशस्य पुत्रौ मा चापलम्' इति।"

अथ कौशिकेनोहितम्—'एतयोर्यदि पितुर्निरनुक्रोश इति नामधेयम्, एतयोर्जननी तेनावमानिता निर्वासिता तस्याः प्रभवन्त्येतेन वचनेन दारकं निर्भर्त्सयति।'

प्रतिपन्नैषा कौशिकविज्ञप्ती राघवेणापि। निःश्वसता तेन तर्कितम्—'धिङ् मामेवं भूतम्। सा तपस्विनी मत्कृतेनापराधेन स्वापत्यमेवं मन्युगर्भैरक्षरैर्निर्भर्त्सयति।' ततः स सबाष्पमवलोकयन्नुवाच—'अपि संनिहितस्तत्र भवान्निरनुक्रोशो युष्मदाश्रमे?'

लवेनाऽऽवेदितम्—'न संनिहितः।'

रामेण जातसंभ्रमेण भणितम्—'अपि श्रूयते?'

लवेनावलोक्यमानः कुशोऽशंसीत्—'न तस्य पादावस्माकं नमस्कृतपूर्वौ। अम्बायाः पुनरेकवेणीसंसूचितानि तस्योच्छ्वासितानि।'

अथ काकुत्स्थस्तयोर्मातरं नामतो विविदिषुरपि स्त्रीगतमनुयोक्तुं तपोवने विशेषतोऽयुक्तं मन्वानः कौशिकं स्वाभिप्रायमसूचयत्। स पप्रच्छ—'भोः! किंनामधेया युवयोर्जननी?'

लवोऽवोचत्—'तस्या द्वे नामनी। तपोवननिवासिनो

देवीतिनामाऽऽह्वयन्ति, भगवान्वाल्मीकिर्वधूरिति।'

एवं विदितविशेषो वसुमतीशो व्यमृशत्—'कुमारयोरनयोरस्माकं च सर्वाकारसंवादी कुटुम्बवृत्तान्तः।' तथा सादृश्यबाहुल्यमवधार्य भृशं पर्याकुलितः स सानुक्रोशान्तरात्मा। यदा च 'किं तवेदृशोऽभिप्रायः, सीतागर्भगतावेतौ दारकौ?' इति कौशिकस्तमप्रश्नयत्, तदा सोऽब्रवीत्—'मा मैवम्! कथं हन्त! तवोवनवासिनि जने संबन्धमीदृशमध्यारोपयामि। किन्तु,

एतत्कुमारयुगलं वयसाऽन्वयेन
श्यामोन्नतेन वपुषा विपदाऽनया च।
तां मैथिलीं तनयसंभविनीमवस्था-
मादाय मामतितरां तरलीकरोति॥' २६॥

अथ मुनिवरस्य वाल्मीकेर्दूतः पुराणपुरुषस्य कथां राघवश्रुतिपथातिथितां नेतुं तौ त्वरायितुं संप्राप्तः। तस्मिन्नुपेते संदेशमाकर्ण्य कुमारकौ श्रावणप्रारम्भमीषतुः रघुकुलपतिरपि सौमित्रेः सभासदां च संनिधानं समादिदेश।

[६]

सज्जितमास्थानमण्डपम्, उपस्थिताश्च सर्वेऽपि राघवाः पौरजानपदाश्च।

तिरोहिता महादेव्यः कौसल्याद्यास्तथा स्थिताः।
तत्र भरतशत्रुघ्नलक्ष्मणानां वधूत्रयम्॥ ३०॥

ततो राघवः प्रस्तोतुमादिदेश। कुशलवावारेभाते—

'उपमेये ततस्तिस्रो धर्मपत्नीर्महीपतिः।
कौसल्यामथ कैकेयीं सुमित्रां च सुमध्यमाम्॥' ३१॥

अथ हृष्टौ रामलक्ष्मणावूचतुः—'तात एव कथानायकतामुपनीतः कविना ।'

ततो गीतम्—

'कौसल्या सुषुवे रामं कैकेयी भरतं ततः ।
सुमित्रा जनयामास यमौ शत्रुघ्नलक्ष्मणौ ॥ ३२ ॥
उपयेमे ततः सीतां रामः सौमित्रिरूर्मिलाम् ।
तथा भरतशत्रुघ्नौ कुशध्वजसुते उभे ॥ ३३ ॥
बाल्ययौवनयोर्मध्ये वर्तमाना नृपात्मजाः ।
नवयोत्कण्ठया चैव कलत्रे दुःस्थितां ययुः ॥' ३४ ॥

गुरुसौमित्रिरुवाच—'रमणीयः ।'

राघवो वक्ति स्म—'अलं कालातिपातेन, गीयताम् ।

जरसा पलितस्तातः काकपक्षधरा वयम् ।
जानुदघ्नास्तदा तेऽपि साकेतोद्यानपादपाः ॥' ३५ ॥

अथ कुशलवो जगतुः—

'अथाभिषेकसंभारे रामस्य समुपस्थिते ।
भरते मातुलं द्रष्टुं मातामहपुरं गते ॥' ३६ ॥

अथो राघवेण लक्षितम्—'नियतं मध्यमाम्बा निन्द्यते ।' तस्मात्तेनोक्तम्—'तमुद्देशमुल्लङ्घ्य सीतापहरणात् प्रभृति गीयताम् ।'

ताभ्यां गीतम्—

'कालेन रूपसौन्दर्यं श्रुत्वा शूर्पणखामुखात् ।
जहार देहं सीताया न चारित्रं दशाननः ॥' ३७ ॥

इदं श्रुत्वा सौमित्री राघवमवलोकयति स्म । गायकौ यथाप्रसङ्गं गायन्तावास्ताम्—

'ततो बद्ध्वाऽर्णवे सेतुं निहत्य युधि रावणम् ।
सीतामादाय रामोऽपि साकेतं पुनरागतः ॥' ३८ ॥

साकेतपतिरुवाच—'अहो संक्षेपः !'

ततो यथानुक्रमं गीतम्—

'प्राप्तराज्यस्ततो रामो जनवादेन चोदितः ।
आहूय लक्ष्मणं प्राह सीता निर्वास्यतामिति ॥ ३९ ॥
बाष्पपर्याकुलमुखीमनाथां शोकविक्लवाम् ।
उद्वहन्तीं च गर्भेण पुण्यां राघवसंततिम् ॥ ४० ॥
सीतां निर्जनसंपाते चण्डश्वापदसंकुले ।
परित्यज्य महारण्ये लक्ष्मणोऽपि न्यवर्तत ॥' ४१ ॥

अत्र लक्ष्मणोऽभाणीत्—'अहो ! अयशोभागी लक्ष्मणः।'

तदग्रजो जगाद—'कस्तवात्रापराधः । रामपराक्रमाः खल्वेते गृह्यन्ते । ततः ।'

कुशलवावालेपतुः—'एतावती गीतिः ।

ततैः प्राणैः परित्यक्ता निराशा जनकात्मजा ।
अप्रियाख्यानभीतेन कविना संहृता कथा ॥' ४२ ॥

कुशेन राघवौ सीतासंकथायामत्यन्तविषादिनौ वीक्ष्यानुयुक्तो लक्ष्मणः—'अपि भवन्तौ रामायणकथानायकौ रामलक्ष्मणौ ?'

स प्रत्युवाद—'तौ क्लेशभागिनौ ।'

कुशेन पुनरनुयुक्तम्—'किं नीता त्वया सीता ?'

लज्जितो लक्ष्मणो ललाप—'मया मन्दभाग्येन ।'

कुशः शशंस—'किं सीता रामस्य धर्मपत्नी ?'

सौमित्रिरुवाच—'अथ किम् ।'

जानकीजानिः पप्रच्छ—'आर्यौ ! किमेष युवयोरागमावधिः, आहोस्वित् सन्दर्भावधिः ?'

ज्येष्ठगायको निजगाद—'न जानीमः ।'

कण्वं पिपृच्छिषू राघवस्तमाह्वातुमनुजमादिशत् । स आगत्य महीपतिनाऽऽसनं ग्राहितः "सीतां निर्जनसंपाते०" इत्यतः परं जानकीसंकथां श्रावयामास । तथाहि—

'ततः श्रुत्वा स शिष्येभ्यो वाल्मीकिर्मुनिरुत्तमः ।
स्वयं सीतां समाश्वास्य निनाय स्वं तपोवनम् ॥' ४३ ॥

मुनिपुङ्गवेनाऽऽश्रमपदं नीतां सीतां विज्ञाय उल्लासातिशयमासादितवान् वसुधावल्लभोऽभ्यधात्—'अनुगृहीतं भगवता रघुकुलम्, अभ्युद्धृतोऽस्मि भगवता ।'

सीतां कुशलिनीमवेत्य कुमारकावपि जहर्षतुः । तयोरग्रजोऽनुजमप्राक्षीत्—'अयि वत्स ! काऽसौ वाल्मीकितपोवने सीता नाम ?'

अनुजो जगाद—'न काचित्, केवलं गीतिनिबन्धनान्येतानि "सीता सीता" इत्यक्षराणि ।'

मैथिलीवल्लभेन कण्वमभि भणितम्—'ततस्ततः ?'

कण्वो बभाण—

'परिपूर्णे ततः काले द्यौरिवेन्दुदिवाकरौ ।
सीताऽपि जनयामास सा यमौ तनयावुभौ ॥' ४४ ॥

तच्छ्रुत्वा राघवकुलवृद्धया प्रीतः सौमित्री राघवं दिष्ट्याऽवीवृधत् । कुशलवावपि तथैव तमभिननन्दतुः । तस्य च चेतसि स्फुरितम्—'अपि नाम कुशलवौ स्यातान् ।'

कण्वेन पुनः प्रारब्धम्—

'जातावस्थोचितं कर्म विदधानो यथाक्रमम् ।
स चकार तयोर्नाम मुनिः कुशलवाविति ॥' ४५ ॥

उद्भिन्नमेवं सर्वं रहस्यजातम् । 'एतावेव सीतातनयौ' इति ज्ञात्वा काकुत्स्थोऽचकथत्—'हा पुत्र कुश ! हा पुत्र लव !'

सौमित्रिरपि तौ सीतासंभवां रामस्याऽऽत्मसंक्रान्ति विदित्वा हर्षस्य पराकाष्ठां लेभे । कुशलवावप्यननुभूतचरमाश्चर्यमासादितवन्तौ । सर्वे च परस्परमालिङ्ग्य विचेतनी बभूवुः ।

तांस्तथाविधान्वीक्ष्य संभ्रान्तः कण्वोऽप्यात्मानमसमीक्ष्यकारिणं समर्थ्य निनिन्द । ततो निर्वर्ण्य तेषां श्वासोद्गमं निरूप्य ततो गत्वा वाल्मीकेस्तदुदन्तं न्यवेदयत् । मुनिरपि सीतया कण्वेन च समं तत्क्षणादेव तत्राऽऽजगाम ।

मुनिर्निजगाद—

'मैथिलि ! प्रहिणु लोचने ततः साधु धैर्यमवलम्ब्य यत्नतः ।
त्वत्कथाप्रलयमातरिश्वना पश्य राघवकुलं निपातितम् ॥' ४६ ॥

सीता सत्रपममन्त्रयत—'भगवन् ! अननुज्ञातदर्शनाऽहमार्यपुत्रेण ।'

मुनिः सावष्टम्भमाचष्ट—'मयि स्थिते को वा अभ्यनुज्ञायाः प्रतिषेधस्य वा । गच्छ, अभ्यनुज्ञातासि वाल्मीकिना मयैतद्दर्शने । उपसर्प निःशङ्कमुपयन्तारम् ।'

रामस्य समवस्थामवेक्ष्य महतीं शुचमवाप पृथ्वीतनूजा । सा भूमौ निपत्य रुरोद । तां समाश्वास्य वाल्मीकी राघवावभ्युपापद्यत । तथैव सीता कुशलवौ ।

प्रत्यागत्य राम उवाच—'आर्य कण्व ! अपि म्रियते वैदेही ?'

वाल्मीकिरवोचत्—'पुरत एव वर्तते ।'

सीतां विलोक्य रामः सत्रपो जातः। स आश्वस्तेनानुजेन पृष्टः—'अपि प्रत्यागतसंज्ञ आर्यः स्यात् ?'

अग्रजो जगाद—'प्रत्यागतोऽस्मि मन्दभाग्यः ।'

कुशलवौ समाश्वस्य तातस्य पादयोः पतितौ । दाशरथी उभौ परिष्वज्य समाश्वासयामासतुः। मुनिनाऽप्यभ्युपपन्नौ तौ बाष्पं प्रमृज्य तातमवलोकयन्तौ स्थितौ ।

अपवार्य वदनमवस्थितां वैदेहीं प्रेक्ष्य तद्वल्लभेन व्यमृश्यत —'अहो औदासीन्यं वैदेह्याः ! यदियं चिरकालोपनतमस्मत्संनिधानं मुखविकासेनापि न संभावयति ।'

अत्र कुपितो वाल्मीकिरुवाच—'हे राजन् ! धृतसौहार्द ! महाकुलीन ! समीक्ष्यकारिन् ! किं युक्तं तव प्रतिपादितां जनकेन, गृहीतां दशरथेन, कृतमङ्गलामरुन्धत्या, विशुद्धचारित्रां वाल्मीकिना, भावितशुद्धिं विभावसुना, मातरं कुशलवयोः, दुहितरं भगवत्या विश्वम्भरायाः, देवीं सीतां जनापवादमात्रश्रवणेन निराकर्तुम् !'

तदा रामो विक्लवो जातः ।

मुनिर्भूयोऽप्युदाहरत्—'सौमित्रे ! युक्तमिदम् ? अथवा कस्तवोपालम्भः। नियोज्यस्त्वं कनीयान् ।' स ततः पुनरपि ज्येष्ठराघवमुद्दिश्य व्याहरत्—'अथ दशग्रीववीरवधावसाने सीताप्रतिग्रहं प्रति कः प्रमाणीकृतो देवः प्रमाणेन ?'

राघवः प्रतिव्याजहार—'भगवान् वैश्वानरः ।'

मुनिना परिपृष्टम्—'भोः! प्रत्ययनिवृत्तेः किं कारणम्?'

भर्तृभर्त्सनाबाधिता सीताऽवदत्—'हा धिक्! हा धिक्! ममाधन्यायाः कृत एवमधिक्षिप्यत आर्यपुत्रः!'

विक्लवं राघवं मुनिः समादिशत्—'वत्स! किमनेन। गृहाण कुशलवौ। गच्छामः स्वमाश्रमपदम्।'

ततः स जानकीं जगाद—'वैदेहि! तपोवनगतानामपि दण्डं समाज्ञापयति, तत्परिशोध्यतामात्मा।'

विदेहतनयाऽञ्जलिं बद्ध्वा दिशोऽवलोक्याभाषिष्ट—'शृण्वन्तु भवन्तो लोकपालाः! गगनमध्यचारिणो देवताः! गन्धर्वसिद्धविद्याधराः! ये च प्रभावप्रत्यक्षीकृतसर्वलोक-रहस्याः वाल्मीकिविश्वामित्रवसिष्ठप्रमुखा महर्षयः! एष सकललोकशुभाशुभकर्मसाक्षी भगवान् राघवकुलपितामहः सहस्ररश्मिश्च! सीता चरित्रशुद्धिमन्तरेणैवं सत्यापयति—'

तस्यामेवं वदन्त्यामेव दत्तावधान इव निःशब्दप्रशान्तो निवृत्तसर्वारम्भः कृत्स्न एव स्थावरजङ्गमो लोकः संवृत्तः।

ततो जानकी जगाद—'यदि मया सकललोकमहार्थ-प्रत्ययापूरितगुरुशासनमुन्मूलितमहामहीधरसहस्रविरचितसेतु-बन्धविभक्तमहासमुद्रं सुरासुरभुवनैकधनुर्धरं राघवकुल-नन्दनं त्वामुज्झित्वा पतिव्रताविरुद्धेन भावेनान्यः कोऽपि नयनाभ्यां निर्वर्णितः, वचनेनाऽऽलपितः, हृदयेन वा चिन्तितः, एतेन सत्यवचनेन सकललोकप्रत्यक्षदृश्यमानदिव्यरूपधारिणी भगवती महाप्रभावा चित्तशुद्धिं मे लोकस्य प्रकाशी करोतु।'

समनन्तरमेव पातालोद्भेदं विधाय पुष्पवर्षाभिर्नारीभिः

सह समानोदात्तोज्ज्वलवेषाभिश्च वसुधाऽऽविर्बभूव। सर्वे कृताञ्जलयस्तामभिननन्दुः।

अथ सा दिशोऽवलोक्य शंसितवती—'अहो! अनतिक्रमणीयं शासनं प्रतिनिवृत्तानां पतिव्रतानाम्!

व्याप्य द्यावापृथिव्यौ प्रतिहतगतयो यत्र भानोर्मयूखाः
　गाम्भीर्यात्क्षीणवेगो नियमयति गतिं यच्च वोढुं गरुत्मान्।
यत्स्थानं विप्रकर्षात् परिमिततपसां योगिनामप्यगम्यं
　तस्मादाकृष्य साऽहं जनकतनयया दूरमारोपिताऽस्मि॥ ४७॥

ऋषयो दानवाः! सिद्धाः! यक्षगन्धर्वकिन्नराः!
मानवाः! लोकपालाश्च भवन्त्ववहिताः क्षणम्॥ ४८॥

रामं दाशरथिं मुक्त्वा न जातु पुरुषान्तरम्।
मनसाऽपि गता सीतेत्येवं विदितमस्तु वः॥' ४९॥

समनन्तरमेवाऽऽकाशात् पुष्पवृष्टिर्जाता तत्रैव दुन्दुभयश्च ध्वनिताः।

अथो सर्वे सहर्षमूचुः—'अहो विस्मयः! अपि नामाऽऽश्चर्यं मिथुनं भूयः संयुज्यते।'

मुनिरुवाच—'भो भोः कौसल्यामातः! संभाव्यतां सीता परिशुद्धिपरिग्रहणेन।'

उररीकृतं तद्रामेण। सीताऽपि साञ्जलिस्तमभिननन्द।

हृष्टो रामानुजः सत्रपममन्त्रयत—'आर्ये! वध्यः पातकी लक्ष्मणः प्रणमति।'

सीता प्रत्यब्रवीत्—'कुतस्त्वयाऽऽत्मा निन्द्यते। एवमात्मगुरुनियोगवर्ती चिरञ्जीव।'

अथ वाल्मीकिरवदत्—'वत्स राम! अनेन गृहीता वैदेही। स्वयमाभाष्य पाणिना पाणौ संगृह्य नियुज्यतां यज्ञाधिकारे।'

अथ रघूणां परिवृढः सव्रीडं धरणीदुहितरं पाणिना पाणौ गृहीतवान्। एवं वृत्त उच्छ्वसितस्तस्या आत्मा। प्रत्यागतास्तदीयाः प्राणाः।

आशिषं प्रयुज्यान्तर्हिता वसुमती।

ततो राघवो मुनिमभ्यर्थयाञ्चक्रे—'भवताऽहमप्यनुज्ञातो लक्ष्मणमभिषेक्तुमिच्छामि।'

तच्छ्रुत्वा सौमित्रिः साञ्जलिर्जजल्प—'यदि प्रसन्नमार्येण तेन तनयसंक्रामिणा युवराजशब्देन विभज्यतां चिरकालानुचरः सौमित्रिः।'

मुनिनाऽप्यनुमोदितं तद्वचः। अनतिक्रमणीयोऽभूत्तत्प्रस्तावो दाशरथेः। सोऽनुजमभिषेकसंभारमानेतुमादिदेश।

अनुजेन जगदे—'आर्य! संपादितं सर्वमभिषेकसमयोचितं व्यग्रहस्ताभिर्देवताभिः। पश्य,

एतच्छत्रं वहति भगवान् वासवश्चन्द्रगौरं
देवी बालव्यजनयुगलं जह्नुकन्या शची च।
अम्भोगर्भान् कनककलशान् धारयन्ति प्रजौघा-
श्चित्रं नैतत् प्रणयसुलभाः संपदस्तद्विधानाम्॥' ५० ॥

साकेतपतिर्मुनिं निमन्त्रयामास—'भगवन्! अभिषिच्यतां वत्सः।'

वाल्मीकिः कुशमभ्यषेचयत्। अभितो जयध्वनिरुच्चरितः। सर्वे प्रासीदन्।

काकुत्स्थो ज्येष्ठात्मजमवोचत्—'राजन्! त्वयाऽहमभ्यनुज्ञातो यौवराज्ये लवमभिषेक्तुमिच्छामि।'

कुशस्तातादेशं सहर्षं शिरसा गृहीतवान्। रामभद्रः कलशमादाय लवं प्रकाममभिषिक्तवान्। अखिलोऽपि लोकस्तेन हर्षपारावारं व्यगाहत।



# अभिज्ञानशाकुन्तलम्

[ १ ]

अभूत्किल पौरवेषु दुष्यन्तो नाम लोकविश्रुतो मध्यमलोकपालः। स कदाचिन्मृगयायां मृगमतिरंहसमनुसरन्सुदूरं निष्क्रान्तः। अतिजवोऽसौ सारङ्गः साभिनिवेशमनुपततोऽपि पृथ्वीपतेः प्रयत्नप्रेक्षणीयः संवृत्तः। ततः समदेशवर्तिनि स्यन्दने सूतेन मुक्तेष्वभीशुषु क्षणेनैवाऽऽसादितः स कृष्णसारः पौरवेण। अथो बाणपातवर्तिनं वातायुं व्यापादयितुं शरसंधानं कृतवति वसुधाधिपतौ "भो भो राजन्! आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः" इति ध्वनिस्तं न्यवारयत्।

अथ कृष्णसारस्यान्तरे तपस्विनोऽवलोक्य राज्ञा सारथिना रथः स्थापितः। तदाऽभ्युपेत आत्मना तृतीयः कश्चिद्वैखानस हस्तमुद्यम्याब्रवीत्—'राजन्! आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः।

तत्साधुकृतसंधानं प्रतिसंहर सायकम्।
आर्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसि॥' १॥

समनन्तरमेव तथा विहितवति वसुमतीपतावतिप्रीतो मुनिरुदैरयत्—'सदृशमेतत्पुरुवंशप्रदीपस्य भवतः।

जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव।
पुत्रमेवंगुणोपेतं चक्रवर्तिनमवाप्नुहि ॥ २ ॥

राजन्! समिदाहरणाय प्रस्थिता वयम्। एष खलु कण्वस्य कुलपतेरनुमालिनीतीरमाश्रमो दृश्यते। न चेदन्यकार्योऽतिपातस्तत्प्रविश्य प्रतिगृह्यतामातिथेयः सत्कारः। अपि च,

रम्यास्तपोधनानां प्रतिहतविघ्नाः क्रियाः समवलोक्य।
ज्ञास्यसि कियद्भुजो मे रक्षति मौर्वीकिणाङ्क इति ॥' ३ ॥

भूपतिः पप्रच्छ—'अपि संनिहितोऽत्र कुलपतिः?'

वैखानसेन प्रत्युक्तम्—'इदानीमेव दुहितरं शकुन्तलामतिथिसत्काराय नियुज्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः।'

राजाऽवदत्—'भवतु। तामेव द्रक्ष्यामि। सा खलु विदितभक्तिं मां महर्षेः कथयिष्यति।'

अथ प्रस्थितास्तापसाः। दुष्यन्तेनाश्वांश्चोदयितुं समादिष्टा सव्येष्टा भूयो रथवेगं न्यरूपयत्। स्तोकमन्तरं गत्वा क्षितिपतिः 'तपोवननिवासिनामुपरोधो मा भूत्' इति तावत्येव रथादवतीर्णः। 'विनीतवेषेण प्रवेष्टव्यानि तपोवनानि' इत्यभरणानि धनुश्च नियन्तुः समर्प्य 'यावदाश्रमवासिनः प्रत्यावेद्याहमुपावर्ते तावदार्द्रपृष्ठाः क्रियन्तां वाजिनः' इति तमाज्ञापयित्वा ततः प्रचलितः पुरुपुङ्गवः। आश्रमद्वारं प्रविष्ट एव निमित्तमभिपश्यन्नसावालोचयत्—

'शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र ॥' ४ ॥

अनन्तरमेव महीपतिर्दक्षिणेन वृक्षवाटिकाम् 'इत इतः

सख्यौ' इत्यालापं शुश्राव । परिक्रम्य स स्वप्रमाणानुरूपैः सेचनघटैर्बालपादपेभ्यः पयो दातुं तत एवाभिवर्तमानांस्तिस्रस्तपस्विकन्यका अपश्यत् । तासां मधुरेण दर्शनेनाऽऽवर्जितोऽसाववदत्—

'शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य ।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥' ५ ॥

ततः स छायामाश्रित्य विलोकयंस्तत्रैव स्थितः ।

अथ सेचनव्यापारनिरता शकुन्तला सह सखीभ्यामनुसूयाप्रियंवदाभ्यां तत एवाऽपतत् । अनसूयोवाच—'हला शकुन्तले ! त्वत्तोऽपि तातकाश्यपस्याऽऽश्रमवृक्षकाः प्रियतरा इति तर्कयामि । येन नवमालिकाकुसुमपेलवा त्वमप्येतेषामालवालपूरणे नियुक्ता ।'

सा प्रत्यब्रवीत्—'न केवलं तातनियोग एव । अस्ति मे सोदरस्नेह एतेषु ।'

तदाकर्ण्यावनिवल्लभेन निध्यातम्—'कथमियं सा कण्वदुहिता । असाधुदर्शी खलु तत्र भवान् काश्यपः, य इमामाश्रमधर्मे नियुङ्क्ते ।

इदं किलाऽव्याजमनोहरं वपुः
तपःक्षमं साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया
शमीलतां छेत्तुमृषिर्व्यवस्यति ॥' ६ ॥

अथ पृथिवीधवः पादपान्तर्हितस्तामवलोकयितुं प्रवृत्तः । तेन व्यतर्कि—'काममननुरूपमस्या वयसो वल्कलं न पुनरलङ्कारश्रियं न पुष्यति । कुतः,

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाऽऽकृतीनाम् ॥' ७ ॥

अनन्तरं केसरवृक्षकं समभावयत्कण्वकन्या ।

अनसूया तां निजगाद—'हला शकुन्तले ! इयं स्वयंवर-वधूः सहकारस्य त्वया कृतनामधेया वनज्योत्स्नेति नव-मालिका । एनां विस्मृतवत्यसि ।'

सा प्रतिजगाद—'तदाऽऽत्मानमपि विस्मरिष्यामि ।' ततो वनलतामुपेत्यावलोक्य च सा जल्पितवती—'हला ! रमणीये खलु काल एतस्य लतापादपमिथुनस्य व्यतिकरः संवृत्तः । नवकुसुमयौवना वनज्योत्स्ना, स्निग्धपल्लवतयो-पभोगक्षमः सहकारः ।'

प्रियंवदाऽवादीत्—'अनसूये ! जानासि ? किं शकुन्तला वनज्योत्स्नामतिमात्रं पश्यतीति । एषा विभावयति "यथा वनज्योत्स्नाऽनुरूपेण पादपेन संगता, अपि नामैवमहमप्या-ऽऽत्मनोऽनुरूपं वरं लभेय" इति ।'

शकुन्तला ललाप—'एष नूनं तवाऽऽत्मगतो मनोरथः ।' एवमुक्त्वा सा कलशमावर्जितवती ।

अथो दुष्यन्तो विमृष्टवान्—'अपि नाम कुलपतेरियमस-वर्णक्षेत्रसंभवा स्यात् । अथवा,

असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः ।
सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥ ८ ॥

तथापि तत्त्वत एनामुपलप्स्ये ।'

इदानीं सलिलसेकसंभ्रमोद्गतो मधुकर उज्झित्वा नव-मालिकां कण्वदुहितृवदनमभ्यवर्तत । मुहुः प्रतिवद्धोऽपि न स न्यवर्तत। दुष्यन्तस्तं विलोक्य सस्पृहं पर्यालोचयत्—

'चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।
करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान् मधुकर ! हतास्त्वं खलु कृती ॥' ९ ॥

बलवद्बाधिता मुनिसुताऽचकथत्—'नैष दुष्टो विरमति । हला ! परित्रायेथां मामनेन दुर्विनीतेन दुष्टमधुकरेण परिभूयमानाम् ।'

सख्यौ सस्मितमूचतुः—'के आवां परित्रातुम् । दुष्यन्त-माक्रन्द। राजरक्षितव्यानि तपोवनानि नाम ।'

इलापतिरात्मानं प्रकाशयितुमवसरं वीक्ष्य सत्वरमुपसृत्या-ऽऽचख्यौ—

'कः पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम् ।
अयमाचरत्यविनयं मुग्धासु तपस्विकन्यासु ॥' १० ॥

तं दृष्ट्वा सर्वा अपि किंचिदिव संभ्रान्ताः ।

अनसूयया व्याजह्रे—'न खलु किमप्यत्याहितम् । इयं नौ प्रियसखी मधुकरेणाभिभूयमाना कातरीभूता ।' ततः सा स्ववयस्यामभिमुखीभूयाऽऽललाप—'हला शकुन्तले ! गच्छो-टजम् । फलमिश्रमर्घमुपहर । इदं पादोदकं भविष्यति ।'

नरनाथोऽभ्यधात्—'भवतीनां सूनृतयैव गिरा कृतमा-तिथ्यम् ।'

प्रियंवदाऽवदत्—'तेन ह्यस्यां प्रच्छायशीतलायां सप्तवर्ण-

वेदिकायां मुहूर्त्तमुपविश्य परिश्रमविनोदं करोत्वार्यः ।' मुनिकुमारिका अपि नरपतिप्रेरिताः 'उचितं नः पर्युपासनमतिथीनाम्' इति तत्रैवोपविष्टाः ।

शकुन्तलाऽपि राजर्षिं प्रेक्ष्य तपोवनविरोधिनो विकारस्य गमनीया संवृत्ता । प्रियंवदाऽपि तं प्रभाववन्तमप्राकृतपुरुषविशेषमगृह्णात् । अथ तथैव मन्यमानानसूया परिपृष्टवती —'आर्यस्य मधुरालापजनितो विस्रम्भो मां मन्त्रयते "कतम आर्येण राजर्षेर्वंशोऽलङ्क्रियते ? कतमो वा विरहपर्युत्सुकः कृतो देशः ? किं निमित्तं वा सुकुमारतरोऽपि तपोवनगमनपरिश्रमस्याऽऽत्मा पदमुपनीतः ?'

शकुन्तलयाऽऽकलितम्—'हृदय ! मोत्ताम्य । एषा त्वया चिन्तितान्यनसूया मन्त्रयते ।'

आत्मसंवरणमभिलषताऽचलापालकेनाभिहितम्—'भवति! यः पौरवेण राज्ञा धर्माधिकारे नियुक्तः सोऽहमविघ्नक्रियोपलम्भाय धर्मारण्यमिदमायातः ।'

अनसूययाऽनुकथितम्—'सनाथा इदानीं धर्मचारिणः ।'

अथ सख्यौ मुनिदुहितरमूचतुः—'हला शकुन्तले ! यद्यत्राद्य तातः संनिहितो भवेत्तदेमं जीवितसर्वस्वेनाप्यतिथिविशेषं कृतार्थं करिष्यति ।'

तच्छ्रुत्वा कृतकं कोपमभिनयन्ती कण्वकुमारिकाऽकथयत् —'युवामपेतम् । किमपि हृदये कृत्वा मन्त्रयेथे । न युवयोर्वचनं श्रोष्यामि ।'

दुष्यन्तो बभाषे—'वयमपि तावद्भवत्योः सखीगतं पृच्छामः । भगवान्काश्यपः शाश्वते ब्रह्मणि स्थित इति

प्रकाशः। इयं च वः सखी तदात्मजेति कथमेतत् ?'

अनसूया व्याजहार—'शृणोत्वार्यः। अस्ति कोऽपि कौशिक इति गोत्रनामधेयो महाप्रभावो राजर्षिः। गौतमीतीरे पुरा किल तस्य राजर्षेरुग्रे तपसि वर्तमानस्य किमपि जातशङ्कैर्देवैर्मेनका नामाप्सराः प्रेषिता नियमविघ्नकारिणी। तामावयोः प्रियसख्याः प्रभवमवगच्छ। उज्झितायाः शरीरसंवर्धनादिभिस्तातकाश्यपोऽस्याः पिता।'

आत्मनो मनोरथं लब्धावकाशमुपलभ्य महीपतिरन्वयुङ्क्त—

'वैखानसं किमनया व्रतमा प्रदानाद्
व्यापाररोधि मदनस्य निषेवितव्यम्।
अत्यन्तमेव मदिरेक्षणवल्लभाभि-
राहो निवत्स्यति समं हरिणाङ्गनाभिः ?' ११ ॥

प्रियंवदा प्रत्यवादीत्—'आर्य ! धर्माचरणेऽपि परवशोऽयं जनः। गुरोः पुनरस्या अनुरूपवरप्रदाने संकल्पः।'

अथ नरनाथेन निध्यातम्—'न दुरवापेयं खलु प्रार्थना।

भव हृदय ! साभिलाषं संप्रति संदेहनिर्णयो जातः।
आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम्॥' १२ ॥

ततो गन्तुं प्रवृत्ता, अनसूयया च तन्निमित्तं पृष्टा शकुन्तला ललाप—'इमामसंबद्धप्रलापिनीं प्रियंवदामार्यायै गौतम्यै निवेदयिष्यामि।'

अनसूया प्रतिबबन्ध—'सखि ! न युक्तमकृतसत्कारमतिथिविशेषं विसृज्य स्वच्छन्दतो गमनम्।'

शकुन्तला तु न किंचिदुक्त्वा प्रस्थितैव। दुष्यन्तस्तां ग्रहीतुमिच्छन्नपि विनयेन वारितप्रसर आत्मानं निगृहीतवान्।

शकुन्तलां निरुध्य प्रियंवदोवाद—'हला ! न ते युक्तं गन्तुम्। वृक्षसेचने द्वे धारयसि मे। एहि तावत्। आत्मानं मोचयित्वा ततो गमिष्यसि।' एवमालपन्ती सा बलाच्छकुन्तलां निवर्तयामास।

अथ पौरवो व्याहरत्-'भद्रे! वृक्षसेचनादेव परिश्रान्तामत्र भवतीं लक्षये। तदहमेनामनृणां करोमि' इत्युक्त्वा सोऽङ्गुलीयकं दातुमियेष।

सख्यौ नाममुद्राक्षराण्यनुवाच्य मिथोऽन्वालोकयेताम्। तयोर्भावं विभावयन्मानवेन्द्रो न्यगदत्—'अलमस्मानन्यथा संभाव्य। राज्ञः परिग्रहोऽयामिति राजपुरुषं मामवगच्छथ।'

प्रियंवदयोदितम्—'तेन हि नार्हत्येतदङ्गुलीयकमङ्गुलिवियोगम्। आर्यस्य वचनेनानृणेदानीमेषा।' ततः सा किंचिद्विहस्याऽऽशशंस—'हला शकुन्तले ! मोचिताऽस्यनुकम्पिनाऽऽर्येण, अथवा महाराजेन। गच्छेदानीम्।'

परं मुक्ताऽपि कथमधुना गन्तुं वाञ्छेच्छकुन्तला ? 'यद्यात्मनः प्रभविष्यामि' इति मनसि भावयन्ती सा प्रत्यभिदधौ—'का त्वं विसर्जितव्यस्य रोद्धव्यस्य वा ?'

शकुन्तलां विलोक्य मध्यलोकवल्लभो व्यतर्कयत्—'किं खलु यथा वयमस्यामेवमियमप्यस्मान् प्रति स्यात् ? अथवा लब्धाऽवकाशा मे प्रार्थना। कुतः,

वाचं न मिश्रयति यद्यपि मद्वचोभिः
कर्णं ददात्यभिमुखं मयि भाषमाणे।
कामं न तिष्ठति मदाननसंमुखीना
भूयिष्ठमन्यविषया न तु दृष्टिरस्याः ॥' १२ ॥

अथ कुतश्चिदुत्थितो ध्वनिर्यथा 'भो भोस्तपस्विनः ! संनिहितास्तपोवनसत्त्वरक्षायै भवत । प्रत्यासन्नः किल मृगयाविहारी पार्थिवो दुष्यन्तः ।

तुरगखुरहतस्तथा हि रेणुर्विटपविषक्तजलार्द्रवल्कलेषु ।
पतति परिणतारुणप्रकाशः शलभसमूह इवाऽऽश्रमद्रुमेषु ॥ १४ ॥

स्यन्दनालोकभीतश्च भिन्नसारङ्गको गजः ।
धर्मारण्यं विशत्याशु मूर्तो विघ्न इवाश्रमे ॥' १५ ॥

सर्वेऽपि कर्णं दत्त्वा किंचिदिव संभ्रान्ताः ।

अथेत्थमभूद्राघवहृदये 'अहो धिक् ! पौरा असदन्वेषिणस्तपोवनमुपरुन्धन्ति । पर्याकुलिताः कन्यका अप्युटजमजिगमिषन् । ता अनुज्ञाय पार्थिवोऽप्याश्रमपीडा यथा न भवति तथा प्रयतितुं प्रतिगन्तुमियेष । तदा सख्यावूचतुः —'आर्य ! असंभावितातिथिसत्कारं भूयोऽपि प्रेक्षणनिमित्तं लज्जावहे आर्यं विज्ञापयितुम् ।'

राजा जगाद—'मा मैवम् । दर्शनेनैव भवतीनां पुरस्कृतोऽस्मि ।'

अथ प्रस्थिताः सर्वेऽपि । मिथः प्रस्थाने पुनः शालीनतयाऽपि काममाविष्कृतो भावः काश्यपपुत्रिकया । तथा हि,

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥ १६ ॥

एवं सा सव्याजं विलम्ब्य सह सखीभ्यां प्रयाता । पौर-

वोऽपि नगरगमनं प्रति मन्दौत्सुक्यो जातः। तेनासावनुयात्रिकान्नातिदूरे तपोवनस्य निवेशयितुं निश्चिकाय।

[ २ ]

मध्यमलोकपतेर्मृगयारसात् तन्मित्रं माढव्यो निर्विण्णो जातः। आसीच्चैवं तन्मनासि 'अयं मृगोऽयं वराहोऽयं शार्दूल इति मध्याह्नेऽपि ग्रीष्मविरलपादपच्छायासु वनराजीष्वाहिण्ड्यतेऽटवीतोऽटवी। पत्रसंकरकषायाणि कटूनि गिरिनदीजलानि पीयन्ते। अनियतवेलं शूल्यमांसभूयिष्ठ आहारो भुज्यते। तुरगानुधावनकण्डितसन्धे रात्रावपि निकामं शयितव्यं नास्ति। ततोऽपरिणत एव प्रत्यूषे दास्याः पुत्रैः शकुनिलुब्धकैर्वनग्रहणकोलाहलेन प्रतिबोधितोऽस्मि। इयतेदानीमपि पीडा न निष्क्रामति। ततो गण्डस्योपरि पिटकः संवृत्तः। ह्यः किलास्मास्ववहीनेषु तत्र भवतो मृगानुसारेणाऽऽश्रमपदं प्रविष्टस्य तापसकन्यका शकुन्तला ममाधन्यतया दर्शिता। सांप्रतं नगरगमनस्य मनः कथमपि न करोति। अद्यापि तस्य तामेव चिन्तयतोऽक्ष्णोः प्रभातमासीत्। का गतिः।'

एवं विमृशति माढव्ये बाणासनहस्ताभिर्यवनीभिर्वनसुमनोमालाधारिणीभिः परिवृतस्तत्प्रियवयस्यस्तत एवाऽऽपतितः।

माढव्यो राजानं व्याजहार—'भो वयस्य! न मे हस्तपादं प्रसरति। वाङ्मात्रेण जापयिष्यामि।'

धरित्रीभर्त्रा भणितम्—'कुतोऽयं गात्रोपघातः?'

स उवाच—'कुत किल?' स्वयमक्ष्याकुलीकृत्याश्रुकारणं पृच्छसि।

'न खल्वगच्छामि' इति वसुधाधवो सनिर्बन्धमनुयुयुजे । माढव्यो बभाण—'एवं राजकार्याण्युज्झित्वा तादृश आकुल-प्रदेशे वनचरवृत्तिना त्वया भवितव्यम्। यत्सत्यं प्रत्यहं श्वापदसमुत्सारणैः संक्षोभितसंधिबन्धानां मम गात्राणामनीशोऽस्मि संवृत्तः। तत्प्रसादयिष्यामि विसर्जितुं मामेकाह्नमपि तावद्विश्रमितुम् ।'

वसुमतीवल्लभो व्यचिन्तयत्—'अयं चैवमाह । ममापि काश्यपसुतामनुस्मृत्य मृगयाविक्लवं चेतः । कुतः,

न नमयितुमधिज्यमस्मि शक्तो धनुरिदमाहितसायकं मृगेषु ।
सहवसतिमुपेत्य यैः प्रियायाः कृत इव मुग्धविलोकितोपदेशः॥' १७ ॥

ततः स बभाषे—'अनतिक्रमणीयं मे सुहृद्वाक्यम् । एष विरमामि मृगयायाः ।

प्रीतं जिगमिषुं नर्मसखं विनिवारयितुकामेन रसारमणेन भणितम्—'वयस्य ! तिष्ठ । सावशेषं मे वचः । विश्रान्तेन भवता ममाऽप्यनायासे कर्मणि सहायेन भवितव्यम् ।'

प्रहृष्टो नर्मसचिव उवाच—'किं मोदकखण्डिकायाम् ? तेन ह्ययं सुगृहीतः क्षणः ।'

अथ विश्वम्भराभर्ता सेनानायकमाकार्याऽऽचख्यौ—'मन्दोत्साहः कृतोऽस्मि मृगयापवादिना माढव्येन ।'

सेनापतिर्व्यज्ञापयत्—'प्रलपत्वेष वैधवेयः । ननु प्रभुरेव निदर्शनम् ।

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।

उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥'१८॥

राज्ञाऽऽज्ञप्तम्—'भद्र सेनापते ! आश्रमसंनिकृष्टे स्थिताः स्मः। अतस्ते वचो नाभिनन्दामि। अद्य तावत्,

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।
विश्रब्धं क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥१९॥

तेन हि निवर्तय पूर्वगतान्वनग्राहिणः। यथा न मे सैनिकास्तपोवनमुपरुन्धन्ति तथा निषेद्धव्याः।'

अथो निदेशमनुवर्तितुं निष्क्रान्तः पृतनापतिः। ततः स्ववयस्यप्रेरितो वसुमतीवल्लभः पादपच्छायायां विरचितलतावितानदर्शनीयायामासनमलंचकार। अनुनिषण्णे सहचरे इलावल्लभो ललाप—'माढव्य ! अनवाप्तचक्षुःफलोऽसि, येन त्वया दर्शनीयं न दृष्टम्।'

स प्रतिजगाद—'ननु भवानग्रतो मे वर्तते।'

अवनीन्द्रेण निगदितम्—'सर्वः खलु कान्तमात्मानं पश्यति। तामाश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि।'

'भवतु ! अस्यावसरं न दास्ये' इति मनसि कृत्वा परिहाससखाऽऽचख्यौ—'भो वयस्य ! तापसकन्यकाऽभ्यर्थनीया दृश्यते।'

जगतीदयितो जगाद—'सखे ! न परिहार्ये वस्तुनि पौरवाणां मनः प्रवर्तते।

सुरयुवतिसंभवं मुनेरपत्यं तदुज्झिताधिगतम् ।
अर्कस्योपरि शिथिलं च्युतमिव नवमालिकाकुसुमम् ॥' २० ॥

माढव्येन भणितम्—'यथा कस्यापि पिण्डखर्जूरैरुद्वेजितस्य तिन्तिण्यामभिलाषो भवेत्, तथा स्त्रीरत्नपरिभाविनो भवत इयमभ्यर्थना ।'

वसुन्धराधिपोऽभ्यधात्—'न तावदेनां पश्यसि, येनैवमवादीः । किं बहुना,

चित्रे निवेश्य परिकल्पितसत्त्वयोगा
रूपोच्चयेन मनसा विधिना कृता नु ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ २१ ॥

इदं च मे मनसि वर्तते,

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ?' २२ ॥

विनोदवयस्येनोदितम्—'तेन हि लघु परित्रायतामेनां भवान् । मा कस्यापि तपस्विन इङ्गुदीतैलमिश्रचिक्कणशीर्षस्य हस्ते पतिष्यति ।'

पौरवेणोदीरितम्—'परवती खलु तत्र भवती । न च संनिहितोऽत्र गुरुजनः ।'

माढव्येनानुयुयुजे—'अत्र भवन्तमन्तरेण कीदृशस्तस्या दृष्टिरागः ?'

भूभुजाऽभिहितम्–'निसर्गादेवाप्रगल्भस्तपस्विकन्याजनः। तथापि तु

अभिमुखे मयि संहृतमीक्षणं हसितमन्यनिमित्तकृतोदयम् ।
विनयवारितवृत्तिरतस्तया न विवृतो मदनो न च संवृतः ॥' २३ ॥

ततो महीपतिर्मुनिकुमारिकायाश्चरणक्षतव्याजेनावस्थान-मप्यचकथत् ।

अथ तत्सख्याऽऽख्यातम्—'तेन हि गृहीतपाथेयो भव। कृतं त्वयोपवनं तपोवनमिति पश्यामि ।'

तथा मिथ आभाषमाणयोस्तयोस्तापसकुमारकावुपेत्य परस्परोपचारोत्तरमुदाहरताम्—'विदितो भवानाश्रमसदा-मिहस्थस्तेन भवन्तं प्रार्थयन्ते। यथा "तत्रभवतः कण्वस्य महर्षेरसान्निध्याद्रक्षांसि न इष्टिविघ्नमुत्पादयन्ति। तत्कति-पयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रमः" इति।'

'अनुगृहीतोऽस्मि' इत्यनुवदता राज्ञा प्रतिगृहीत आश्रमवासिनां निदेशः। आसीत्खलु तस्य तपोवननिवासे पुरस्तादेव दृढोऽभिलाषः ।

अथ पार्थिवः सस्मितं दौवारिकं न्यदिशत्—'रैवतक ! मद्वचनादुच्यतां सारथिः "सबाणासनं रथमुपस्थापय' इति ।' ततः स सप्रणामं प्रीतावृषिकुमारकाववदत्—'गच्छतां पुरो भवन्तौ। अहमप्यनुपदमागत एव ।'

क्षणेनैव सज्जो रथः, परं तदैव नगराद्देवीनामाज्ञप्तिहरेण करभकेनाऽऽगत्य निवेदितम्—'जयतु भर्ता। देव्याज्ञापयति "आगामिनि चतुर्थदिवसे प्रवृत्तपारणो म उपवासो भवि-ष्यति। तत्र दीर्घायुषाऽवश्यं संभावनीया" इति ।'

तच्छ्रुत्वोर्वीश्वरोऽवदत्—'इतस्तपस्विकार्यम्। इतो गुरुजनाज्ञा। द्वयमप्यनतिक्रमणीयम्। किमत्र प्रतिविधेयम्।' ततः स किञ्चिद्विमृश्य शंसितवान्—'सखे! त्वमम्बया पुत्र इति प्रतिगृहीतः। अतो भवानितः प्रतिनिवृत्य तपस्विकार्यव्यग्रमानसं मामावेद्य तत्र भवतीनां पुत्रकृत्यमनुष्ठातुमर्हति। ननु तपोवनोपरोधः परिहरणीय इति सर्वानानुयात्रिकांस्त्वयैव सह प्रस्थापयामि।' समनन्तरं च 'चपलोऽयं वटुः। कदाचिदस्मत्प्रार्थनामन्तःपुरेभ्यः कथयेत्' इति सविमर्शो विशांपतिर्माढव्यं हस्ते गृहीत्वोज्जगार—'वयस्य! ऋषिगौरवादाश्रमं गच्छामि। न खलु सत्यमेव तापसकन्यकायां ममाभिलाषः। पश्य,

क्व वयं क्व परोक्षमन्मथो मृगशावैः सममेधितो जनः।
परिहासविजल्पितं सखे! परमार्थेन न गृह्यतां वचः॥' २४॥

[ ३ ]

प्रविष्टमात्र एवाऽऽश्रमं महानुभावे पार्थिवे दुष्यन्ते निरुपप्लवानि मुनीनां कर्माणि संवृत्तानि। प्रणयानलदग्धां शकुन्तलामातपलङ्घनाद्बलवदस्वस्थां गृह्वाने तत्सख्यौ तच्छरीरनिर्वापणायोशीरानुलेपनं मृणालवन्ति च नलिनीपत्राणि निन्यतुः। वैतानिकं शान्त्युदकमपि तस्यै गौतमीहस्तेन कश्चित्तापसो व्यसर्जयत्।

अथ दुष्यन्तोऽपि तामेव समवस्थां लेभे। हृदयं निवर्तयितुमक्षमः स मदनार्दितो निःश्वासं निःश्वासमभ्यदधात्—'भगवन् कुसुमायुध! त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसंधीयते कामिजनसार्थः। कुतः,

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-
र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान् वज्रसारीकरोषि ॥ २५ ॥

क्व नु खलु संस्थिते कर्मणि सदस्यैरनुज्ञातः श्रमक्लान्तमात्मानं विनोदयामि । किं न खलु मे प्रियादर्शनादृते शरणमन्यत् ? यावदेनामन्विष्यामि । इमामुग्रातपवेलां प्रायेण लतावलयवत्सु मालिनीरेषु ससखीजना शकुन्तला गमयति।'

एवं विचार्य व्रजन्स कमपि वेतसपरिक्षिप्तं लतामण्डपमभ्युपेतः । तत्राभिनवां पदपङ्क्तिं दृष्ट्वा विटपान्तरेणावलोकयन्नेत्रनिर्वाणं लब्धवान्। तत्र तस्य मनोरथप्रियतमा सकुसुमास्तरणं शिलापट्टमधिशयाना नलिनीपत्रेण वीजयन्तीभ्यां सखीभ्यामन्वास्यत ।

अथ तासां विस्रम्भकथितानि शुश्रूषुर्वसुधाधिपस्तत्रैव स्थितिं चकार। बलवदस्वस्थशरीरां स्वप्रियां वीक्ष्य जगतीदयितेन व्यतर्कि—'किमयमातपदोषः स्यादुत यथा मे मनसि वर्तते ? अथवा कृतं संदेहेन।

स्तनन्यस्तोशीरं शिथिलितमृणालैकवलयं
प्रियायाः साबाधं किमपि कमनीयं वपुरिदम् ।
समस्तापः कामं मनसिजनिदाघप्रसरयो-
र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥ २६ ॥

सख्या अवस्थायां पर्याकुलावास्तां तत्सख्यौ । प्रियंवदा जनान्तिकमवदत्—'अनसूये ! तस्य राजर्षेः प्रथमदर्श-

नादारभ्य पर्युत्सुकेव शकुन्तला। किं नु खलु तस्यास्तन्निमित्तोऽयमातङ्को भवेत्।'

अनसूया प्रत्यभाषत—'सखि! ममापीदृश्याशङ्का हृदयस्य। भवतु! प्रक्ष्यामि तावदेनाम्।'

ततो वयस्याभ्यां सातिशयनिर्बन्धपुरस्सरमनुयुज्यमाना काश्यपदुहिता जगाद—'सखि! यतः प्रभृति मम दर्शनपथमागतः स तपोवनरक्षिता राजर्षिस्तत आरभ्य तद्गतेनाभिलाषेणैतदवस्थाऽस्मि संवृत्ता।'

तदाकर्ण्य हृष्टः पुरुषपतिरभाषत—'श्रुतं श्रोतव्यम्।'

ततः शकुन्तला ललाप—'तद्यदि वामनुमतं तदा तथा वर्तेथां यथा तस्य राजर्षेरनुकम्पनीया भवामि। अन्यथाऽवश्यं सिञ्चतं मे तिलोदकम्।'

तच्छ्रुत्वा सर्वथाऽप्युच्छिन्नो मनुजेन्द्रसंशयः। प्रियंवदाऽपि जनान्तिकमुवाद—'अनसूये! दूरगतमन्मथाऽक्षमेयं कालहरणस्य। यस्मिन्बद्धभावैषा स ललामभूतः पौरवाणाम्। तद्युक्तमस्या अभिलाषोऽभिनन्दितुम्।'

अनसूययाऽनुमुमुदे—'तथा यथा भणसि। कः पुनरुपायो भवेद्येनाविलम्बितं निभृतं च सख्या मनोरथं संपादयावः।'

प्रियंवदयाऽवादि—'ननु स राजर्षिरेतस्यां स्निग्धदृष्ट्या सूचिताभिलाष एतान्दिवसान्प्रजागरकृशो लक्ष्यते।'

ततो विचिन्त्य साऽभ्युपायमसूचयत्—'हला मदनलेखोऽस्य क्रियताम्। इमं देवप्रसादस्यापदेशेन सुमनोगोपितं कृत्वा तस्य हस्तं प्रापयिष्यामि।'

अथाऽऽत्मन उपन्यासपूर्वं ललितपदवन्धनं चिन्तयितुं ताभ्यां प्रवर्तितायास्तस्या अवधीरणभीरु हृदयं विवेपे। तद्वर्णनामाकर्ण्य धरणीन्द्रो हर्षप्रकर्षमनुभवन्नभाणीत्—

'अयं स ते तिष्ठति सङ्गमोत्सुको
विशङ्कसे भीरु ! यतोऽवधीरणाम् ।
लभेत वा प्रार्थयिता न वा श्रियं
श्रिया दुरापः कथमीप्सितो भवेत् ॥' २७ ॥

सख्यावाचख्यतुः—'आत्मगुणावमानिनि ! क इदानीं शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन वारयति ।'

अथ प्रतिपद्यमाना कण्वकन्योपविश्य चिन्तयित्वा शुकोदरसुकुमारे नलिनीपत्रे नखैर्निक्षिप्तवर्णं विधायेदं गीतवस्तु सख्योरवाचयत्—

'तव न जाने हृदयं मम पुनः कामो दिवाऽपि रात्रावपि ।
निर्घृण ! तपति बलीयस्त्वयि वृत्तमनोरथान्यङ्गानि ॥' २८ ॥

समनन्तरं मानवेन्द्रः सहसोपसृत्याभिहितवान्—

'तपति तनुगात्रि ! मदनस्त्वामनिशं मां पुनर्दहत्येव ।
ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः ॥' २९ ॥

अथ प्रीते सख्यौ अचलारमणस्य स्वागतं व्याजह्रतुः । अभ्युत्तिष्ठासुं कौशिकसुतामिलापालो ललाप—'अलमलमायासेन। गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति ।' अनसूयया लपितम्—'इतः शिलातलैकदेशमलङ्करोतु वयस्यः ।' विश्वम्भराप्रभुणा तथैवानुष्ठितम्। शकुन्तला समन्दाक्षा समजायत ।

अथोदितं प्रियंवदया—'द्वयोर्नतु युवयोरन्योन्यानुरागः

प्रत्यक्षः। सखीस्नेहो मां पुनरुक्तवादिनीं विदधाति। आपन्नस्य विषयनिवासिनो जनस्याऽऽर्तिहरेण राज्ञा भवितव्यमित्येष युष्माकं धर्मः। तेन हीयमावयोः प्रियसखी त्वामुद्दिश्येदमवस्थान्तरं भगवता मदनेनाऽऽरोपिता। तदर्हस्यभ्युपपत्त्या जीवितं तस्या अवलम्बितुम्।'

राजोवाच—'भद्रे! साधारणोऽयं प्रणयः। सर्वथाऽनुगृहीतोऽस्मि।'

कण्वपुत्रिकाऽमन्त्रयत्—'हला! किमन्तःपुरविरहपर्युत्सुकस्य राजर्षेरुपरोधेन!'

स राजर्षिरभाषत—'हृदयसंनिहिते! इदमनन्यपरायणं मदीयं हृदयमन्यथा समर्थयसे।'

अनसूयाऽनुजगाद—'वयस्य! बहुवल्लभा राजानः श्रूयन्ते। यथा नौ प्रियसखी बन्धुजनशोचनीया न भवति तथा निर्वर्तय।'

स प्रत्यगदत्—'भद्रे! किं बहुना,

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे।
समुद्रवसना चोर्वी सखी च युवयोरियम्॥' ३०॥

तच्छ्रुत्वोभे निर्वृते। अथ प्रियंवदा सापदेशं दृष्टिं निक्षिप्याऽऽचचक्षे—'अनसूये! यथैष इतोदत्तदृष्टिरुत्सुको मृगपोतको मातरमन्विष्यति। एहि संयोजयाव एनम्।'

एवं प्रस्थिते उभे। कण्वकन्यकाऽऽचक्रन्द—'हला! अशरणाऽस्मि। अन्यतरा युवयोरागच्छतु।'

उभे ऊचतुः—'पृथिव्या यः शरणं स तव समीपे वर्तते।'

अमू गच्छन्त्याववलोक्योत्थाय गन्तुमिच्छन्ती शकुन्तला

बलादिलावल्लभेन न्यवर्त्यत । सा शशंस—'पौरव ! रक्षाविनयम् । मदनसंतप्ताऽपि न खल्वात्मनः प्रभवामि ।'

क्षितिकान्तेन कथितम्—'भीरु ! अलं गुरुजनभयेन । दृष्ट्वा ते विदितधर्मा तत्र भवान्न तत्र दोषं ग्रहीष्यति कुलपतिः । अपि च,

गान्धर्वेण विवाहेन बह्वयो राजर्षिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चाभिनन्दिताः ॥' ३१ ॥

शकुन्तलयालपितम्—'मुञ्च तावन्माम् । भूयोऽपि सखीजनमनुमानयिष्ये ।'

दयितेनोदितम्—'भवतु ! मोक्ष्यामि ।'

एवमालपन्त्योः ताभ्यामाकर्णि—'चक्रवाकवधूः ! आमन्त्रयस्व सहचरम् । उपस्थिता रजनीः ।'

विदितवयस्याकूतकथा कुशिककन्यकया शशंसे–'पौरव ! असंशयं मम शरीरवृत्तान्तोपलम्भायाऽऽर्या गौतमीत एवाऽऽगच्छति । यावद्विटपान्तरितो भव ।'

तथैवान्वस्थायि पृथ्वीप्रियेण । क्षणेनैवाऽऽपतितास्तत्र पात्रहस्ता गौतमी सख्यौ च । कण्वदुहितरमुपेत्य गौतमी परिपृष्टवती—'जाते ! अपि लघुसंतापानि तेऽङ्गानि ?'

सा प्रत्यवोचत—'अस्ति मे विशेषः ।'

गौतमी शकुन्तलां शिरसि वैतानिकेन शान्तिवारिणाऽभ्युक्ष्याऽऽचष्ट—'वत्से ! परिणतो दिवसः । एहि, उटजमेव गच्छावः ।'

प्रथममेव सुखोपनते मनोरथे कातरभावममुञ्चन्ती प्रस्थानमनभिनन्दन्ती गाधेयतनूजाऽवशं प्रयाता सह स्ववर्गेण ।

तदा च सा पदान्तरे स्थित्वा वल्लभं लताव्याजेन व्याजहार —'लतावलय ! संतापहारक ! आमन्त्रये त्वां भूयोऽपि परिभोगाय।'

तासु निर्गतासु क्षितीश्वरः पूर्वस्थानमुपेत्य सनिःश्वासं शशंस—'अहो विघ्नवत्यः प्रार्थितार्थसिद्धयः। क्व न खलु सांप्रतं गच्छामि। अथवेहैव प्रियापरिभुक्तमुक्ते लतावलये मुहूर्तं स्थास्यामि।' ततः सर्वतोऽवलोक्य लपितं महीभुजा—

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं
क्लान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः।
हस्ताद्भ्रष्टमिदं बिसाऽऽभरणमित्यासज्यमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहाच्छक्नोमि शून्यादपि ॥'३२॥

तदैव तेन केनाप्युच्चार्यमाणमश्रूयत। यथा 'राजन् !

सायन्तने सवनकर्मणि संप्रवृत्ते
वेदीं हुताशनवतीं परितः प्रयस्ताः।
छायाश्चरन्ति बहुधा भयमादधानाः
संध्यापयोदकपिशाः पिशिताशनानाम् ॥' ३३ ॥

तच्छ्रुत्वाऽसौ 'अयमहमागच्छामि' इत्युक्त्वा सद्यःप्रस्थितः।

[ ४ ]

अथाऽऽश्रमात्पार्थिवप्रस्थानोत्तरं कदाचिदनसूयाप्रियंवदे कुसुमावचयं विदधाने सखीगतमभाषेताम्। अनसूयया भणितम्—'प्रियंवदे ! यद्यपि गान्धर्वेण विधिना निर्वृत्त-कल्याणा शकुन्तलाऽनुरूपभर्तृगामिनी संवृत्तेति निर्वृतं मे हृदयम्, तथाप्येतावच्चिन्तनीयम्। यथाऽद्य स राजर्षिरिष्टिं परिसमाप्य ऋषिभिर्विसर्जित आत्मनो नगरं प्रविश्यान्तः-

पुरस्समागत इतोगतं वृत्तं स्मरति वा न वेति।'

प्रियंवदा प्रत्यवदत्—'विस्रब्धा भव न तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति। तात इदानीमिमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति।'

अनसूया समादधौ—'यथाऽहं पश्यामि तथा तस्यानुमतं भवेत्। गुणवते कन्या प्रतिपादनीयेत्ययं तावत्प्रथमः संकल्पः। तं यदि दैवमेव संपादयति नन्वप्रयासेन कृतार्थौ गुरुजनः।'

एवं सालापं बलिकर्मकुसुमान्यवाचिन्वत्योस्तयोर्ध्वनिरश्रूयत—'अयमहं भोः!'

तच्छ्रुत्वाऽनसूयोवाच–'सखि! अतिथीनामिव निवेदितम्।'

प्रियंवदोवाद—'ननूटजसंनिहिता शकुन्तला।' ततः साऽऽत्मन्यचकथत्—'अद्य पुनर्हृदयेनासंनिहिता।'

प्रस्थिते उभे। परं ते तदैव श्रुतवत्यौ—

'आः! अतिथिपरिभाविनि!

विचिन्तयन्ती यमनन्यमानसा
तपोधनं वेत्सि न मामुपस्थितम्।
स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव॥' ३४॥

तदाकर्ण्यावादीत्प्रियंवदा—'हा धिक्! अप्रियमेव संवृत्तम्। कस्मिन्नपि पूजार्हेऽपराद्धा शून्यहृदया शकुन्तला।'

पुरोऽवलोक्य सा सुलभकोपं दुर्वाससं वेगवलोत्फुल्लया दुर्वारया गत्या प्रतिनिवर्तमानमद्राक्षीत्। पादयोः प्रणम्य तं निवर्तयितुं साऽग्रतः प्रससार, अनसूयाऽर्घोदकमुपाकल्पयत्।

प्रतिनिवृत्य प्रियंवदा व्याजहार—'सखि! प्रकृतिवक्रः

स कस्यानुनयं प्रतिगृह्णाति। किमपि पुनः सानुक्रोशः कृतः। यदा निवर्तितुं नेच्छति तदा विज्ञापितो मया "भगवन्! प्रथम इति प्रेक्ष्याविज्ञाततपःप्रभावस्य दुहितृजनस्य भगवतै-कोऽपराधो मर्षितव्यः" इति। ततो "मे वचनं नान्यथा भवितुमर्हति। किं त्वभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यते" इति मन्त्रयन्स्वयमन्तर्हितः।'

अनसूयाऽन्वचकथत्—'शक्यमिदानीमाश्वासयितुम्। अस्ति तेन राजर्षिणा संप्रस्थितेन स्वनामधेयाङ्कितमङ्गुली-यकं स्मरणीयमिति स्वयं पिनद्धम्। तस्मिन्स्वाधीनोपाया शकुन्तला भविष्यति। अस्तु सखि! द्वयोरेव ननु नौ मुख एष वृत्तान्तस्तिष्ठतु। रक्षितव्या खलु प्रकृतिपेलवा प्रियसखी।'

प्रियंवदा प्रत्यवादीत्—'को नामोष्णोदकेन नवमालिकां सिञ्चति।'

अथातिक्रान्ते कियति काले शकुन्तलागतचिन्ताकुला-ऽनसूया व्यतर्कयत् —'यद्यपि नाम विषयपराङ्मुखस्य जनस्यै-तन्न विदितं तथापि तेन राज्ञा शकुन्तलायामनार्यमाचरितम्। काम इदानीं सकामो भवतु, येनासत्यसंधे जन्ये शून्यहृदया सखी पदं कारिता। अथवा दुर्वाससः कोप एष विकारयति। अन्यथा कथं स राजर्षिस्तादृशानि मन्त्रयित्वैतावत्कालस्य लेखमात्रमपि न विसृजति। तदितोऽभिज्ञानमङ्गुलीयकं तस्य विसृजावः। ननु सखीगामी दोष इति व्यवसिताऽपि न पारयामि प्रवासप्रतिनिवृत्तस्य तातकाश्यपस्य दुष्यन्त-

परिणीतामापन्नसत्त्वां शकुन्तलां निवेदयितुम् । इत्थंगतेऽस्माभिः किं करणीयम् ?'

तदा समागता तत्र प्रसन्ना प्रियंवदा। सा सहर्षं व्याहार्षीत्—'सखि ! त्वरस्व शकुन्तलायाः प्रस्थानकौतुकं निर्वर्तयितुम् । तातकाश्यपोऽद्यैव ऋषिरक्षितामस्मत्सखीं भर्तुः सकाशं विसर्जयति ।'

अनसूयाऽन्वयुङ्क्त—'अथ केन सूचितस्तातकाश्यपस्य वृत्तान्तः ?'

सख्योक्तम्—'अग्निशरणं प्रविष्टस्य शरीरं विना छन्दोमय्या वाण्या ।

"दुष्यन्तेनाऽऽहितं तेजो दधानां भूतये भुवः ।
अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव" ॥' ३९ ॥

अथ 'अद्यैव शकुन्तला नीयते' इत्युत्कण्ठासाधारणं परितोषमनुभवन्त्यावनसूयाप्रियंवदे मङ्गलसमालम्भनानि विरचयितुं प्रवृत्ते ।

तदानीं महर्षेः कण्वस्य रवोऽश्रूयत। यथा 'गौतमि ! आदिश्यन्तां शार्ङ्गरवमिश्राः शकुन्तलानयनाय ।'

अथ सूर्योदय एव शिखामज्जितां प्रतिष्ठितनीवारहस्ताभिः स्वस्तिवाचनिकाभिस्तापसीभिरभिनन्द्यमानां शकुन्तलामुपसृत्य तत्सख्यौ मङ्गलसमालम्भनं व्यरीरचताम् । मेनकानन्दिन्यपि 'दुर्लभमिदानीं मे सखीमण्डनं भविष्यति' इति बाष्पं विससर्ज। तस्या मङ्गलकाले रोदनमश्रूणि प्रमार्जयन्तीभ्यां तत्सखीभ्यां विनिवारितम् । यावच्च ते आश्रमसुलभैः प्रसाधनैस्तामलङ्कुरुतस्तावत् कश्चित्तापसकुमारो

नारदः सस्वचयस्यगौतमः काश्यपप्रभावादुपलब्धान्याभरणा-न्यानीयावर्णयत्—

‘ क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपभोगसुलभो लाक्षारसः केनचित् ।
अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-
र्दत्तान्याभरणानि तत्किसलयोद्भेदप्रतिद्वन्द्विभिः ॥’ ३६ ॥

प्रसाधिता सखीभ्यां शकुन्तला । ततः स्नानोत्तीर्णः कण्वस्तत्र समागतः । स मनस्यालोचयत्—

‘ यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ?’ ३७ ॥

कन्यया सव्रीडमभिवादितेन कण्वेन भणितम्—

‘ ययातेरिव शर्मिष्ठा भर्तुर्बहुमता भव ।
सुतं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥’ ३८ ॥

गौतम्या गदितम्—‘भगवन् ! वरः खल्वेष न आशीः ।’

काश्यपः शशंस—‘वत्से ! इतः सद्योहुतानग्नीन् प्रदक्षिणी-कुरुष्व ।’ सर्वैरपि तथाऽनुष्ठिते, स मुनि ऋक्छन्दसा-ऽऽशशासे—

‘ अमी वेदिं परितः क्लृप्तधिष्ण्याः समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।
अपघ्नन्तो दुरितं हव्यगन्धैर्वैतानास्त्वां वह्नयः पावयन्तु ॥ ३९ ॥

प्रतिष्ठस्वेदानीम् । ततः स सदृष्टिक्षेपमुवाच—‘क ते शार्ङ्गरवमिश्रा ?’

समनन्तरं शार्ङ्गरवोऽभ्युपेत्याभ्यधात्—भगवन् ! इमे स्मः।’

ऋषिरुवाच—'भगिन्यास्ते मार्गमादेशय ।'

ततो मार्गमादेशयति शार्ङ्गरवे सर्वेऽपि प्रातिष्ठन्त। तदानीं काश्यपो वृक्षकानभ्यदधात्—'भोः संनिहितास्तपोवनतरवः!

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनाऽपि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥' ४० ॥

समनन्तरं कोकिलरवमाकर्ण्य मुनिनोचे—

'अनुमतगमना शकुन्तला तरुभिरियं वनवासबन्धुभिः ।
परभृतविरुतं कलं यथा प्रतिवचनीकृतमेभिरीदृशम् ॥' ४१ ॥

ततश्च ज्ञातिजनस्निग्धाभिस्तपोवनदेवताभिरपि कौशिकसुताया गमनमनुज्ञातम्। तासां शब्द आकाशेऽश्रूयत। यथा

'रम्यान्तरः कमलिनीहरितैः सरोभि-
श्छायाद्रुमैर्नियमितार्कमयूखतापः ।
भूयात् कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥' ४२ ॥

तच्छ्रुत्वा शकुन्तला शिरसा ववन्दे । ततः सा जनान्तिकमुवाच—'हला प्रियंवदे ! नन्वार्यपुत्रदर्शनोत्सुकाया अप्याश्रमपदं परित्यजन्त्या दुःखेन मे चरणौ पुरतः प्रवर्तेते ।'

प्रियंवदोवाच—'न केवलं तपोवनविरहकातरा सख्येव । त्वयोपस्थितवियोगस्य तपोवनस्यापि तावत्समवस्था दृश्यते।

उद्गलितदर्भकवला मृग्यः परित्यक्तनर्तना मयूराः ।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः ॥' ४३ ॥

अथ काश्यपतनया सोदर्यस्नेहभागिनीं वनज्योत्स्नामुपेत्य-

ऽऽमन्त्रितवती—'वनज्योत्स्ने ! चूतसंगताऽपि मां प्रत्यालिङ्गतो गताभिः शाखाबाहाभिः। अद्यप्रभृति दूरपरिवर्तिनी भविष्यामि।' ततः सा सख्यावाचख्यौ—'हला ! एषा द्वयोरपि युवयोर्हस्ते निक्षेपः।'

ते प्रत्यूचतुः—'अयं जनः कस्य हस्ते निक्षेपः ?' ततस्ते बाष्पं विसृजतः। ते तथाऽवलोक्य काश्यपेनाभिदधे—'अनसूये ! अलं रुदित्वा। ननु भवतीभ्यामेव स्थिरीकर्तव्या शकुन्तला।'

सर्वेऽग्रतश्चलिताः। शकुन्तला ललाप—'तात ! एषोटजपर्यन्तचारिणी गर्भमन्थरा मृगवधूर्यदाऽनघप्रसवा भवति तदा मह्यं कमपि प्रियनिवेदयितृकं विसर्जयिष्यथ।'

काश्यपः प्रत्युवाच—'नेदं विस्मरिष्यामः।'

अथ कस्मिंश्चिन्मृगे मुनिकन्यानिवसने सज्जमाने सा परावृत्य वीक्षितवती, तदा काश्यपेनाभिहितम्—'वत्से !

यस्य त्वया व्रणविरोपणमिङ्गुदीनां
　तैलं न्यषिच्यत मुखे कुशसूचिविद्धे।
श्यामाकमुष्टिपरिवर्धितको जहाति
　सोऽयं न पुत्रकृतकः पदवीं मृगस्ते॥' ४४॥

तं निवर्त्य प्रस्थितां रुदतीं तां तस्यास्तातः पर्यवस्थापयामास। एवं प्रस्थितास्ते यदा तटाकतटमटीकन्त तदा शार्ङ्गरव उवाच—'भगवन् ! उदकान्तं स्निग्धो जनोऽनुगन्तव्य इति श्रूयते। तदिदं सरस्तीरम्। अत्र संदिश्य प्रतिगन्तुमर्हसि।'

अथो सर्वे क्षीरवृक्षच्छायामाश्रित्य स्थिताः। काश्यपेन

शशंसे—'शार्ङ्गरव ! इति त्वया मद्वचनात्स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः ।

" अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलञ्चाऽऽत्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिञ्च ताम् ।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतः परं न खलु तद्वाच्यं वधूबन्धुभिः ॥" ' ४५ ॥

ततः स स्वसुतामामन्त्रयत—'वत्से ! त्वमिदानीमनुशासनीयाऽसि । वनौकसोऽपि सन्तो लौकिकज्ञा वयम् । सा त्वमितः पतिकुलं प्राप्य,

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृताऽपि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याऽऽधयः ॥' ४६ ॥

ननु वत्से ! परिष्वजस्व मां सखीजनं च ।'

सा पप्रच्छ—'तात ! इत एव किं प्रियंवदामिश्राः सख्यो निवर्तिष्यन्ते ?'

मुनिः प्रत्यब्रवीत्—'वत्से ! इमे अपि प्रदेये । न युक्तमनयोस्तत्र गन्तुम् । त्वया सह गौतमी यास्यति ।'

तां प्ररुदतीं वीक्ष्य स पुनर्जगाद—'वत्से ! किमेवं कातराऽसि ?

अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला ।
तनयमचिरात् प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से ! शुचं गणयिष्यसि ॥' ४७ ॥

अथ सममेव परिष्वङ्गं याचिते सख्यौ तथा विधाया-चकथताम्—'सखि ! यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत्ततस्तस्येदमात्मनामधेयाङ्कितमङ्गुलीयकं दर्शय ।'

तयोः संशयं श्रुत्वाऽऽकम्पितां शकुन्तलां ते भूयोऽभ्य-धत्ताम्—'मा भैषीः । स्नेहः पापशङ्की ।'

अथ 'युगान्तरमारूढः सविता । त्वरतामत्र भवती ।' इति त्वरयति शार्ङ्गरवे शकुन्तलाऽऽश्रमाभिमुखी स्थित्वा काश्यपं शशंस—'तात ! कदा नु भूयस्तपोवनं प्रेक्षिष्ये'

कण्वेन भणितम्—'श्रूयताम्,

भूत्वा चिराय चतुरन्तमहीसपत्नी
दौष्यन्तिमप्रतिरथं तनयं निवेश्य ।
भर्त्रा तदर्पितकुटुम्बभरेण सार्धं
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥' ४८ ॥

अथ वियोगविक्लवास्ते विविधमालप्य ततः शकुन्तलां विसर्जयामासुः । यदा च सा वनराज्याऽन्तर्हिता तदा ते न्यवर्तन्त । कण्वो भणितवान्—'हन्त !

अर्थो हि कन्या परकीय एव तामद्य संप्रेष्य परिग्रहीतुः ।
जातो ममायं विशदः प्रकामं प्रत्यर्पितन्यास इवान्तरात्मा ॥' ४९ ॥

[ ५ ]

अथ कञ्चुकी वातायनो दुष्यन्तं विज्ञापयामास—'जयतु जयतु देवः । एते खलु हिमगिरेरुपत्यकारण्यवासिनः काश्यपसंदेशमादाय सस्त्रीकास्तपस्विनः संप्राप्ताः । श्रुत्वा देवः प्रमाणम् ।'

तन्निशम्य विशांपतिः सबहुमानमशंसत्—'किं काश्यप-

संदेशहारिणः ! तेन हि मद्वचनाद्विज्ञाप्यतामुपाध्यायः सोमरातः। "अमूनाश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हति" इति। अहमप्यत्र तपस्विदर्शनोचिते प्रदेशे स्थितः प्रतिपालयामि।'

अथ प्रस्थिते वातायनेऽग्निशरणं गत्वा पौरवस्तत्राभिनवसंमार्जनसश्रीकमलिन्दमधिष्ठायाऽऽलोचयत्— 'किमुद्दिश्य भगवता काश्यपेन मत्सकाशमृषयः प्रेषिताः स्युः ?

किं तावद्व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं
धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम्।
आहोस्वित् प्रसवो ममाऽपचरितैर्विष्टम्भितो वीरुधाम्
इत्यारूढबहुप्रतर्कमपरिच्छेदाऽऽकुलं मे मनः ॥' ५० ॥

एवं विचिन्तयति जगतीपतौ संप्राप्तास्तत्र गौतमीसहिताः शकुन्तलां पुरस्कृत्य मुनयः। पुरश्च तेषामास्तां पुरोधःकञ्चुकिनौ।

निमित्तमनुभूय 'अये ! किं मे वामेतरन्नयनं विस्फुरति ?" इति कथयन्तीं कौशिककन्यकां गौतमी जगाद—'जाते ! प्रतिहतममङ्गलम्। सुखानि ते भर्तृकुलदेवता वितरन्तु।' परं यथा यथा साऽग्रतः प्रसरति तथा तथा तस्याः स्वान्तं वेपते।

अथोभयपक्षसमुचितोपचारानन्तरं शार्ङ्गरवोऽब्रवीत्—'तत्र भवान्काश्यपो भवन्तमनामयप्रश्नपूर्वकमिदमाह "यन्मिथः समयादिमां मदीयां दुहितरं भवानुपायंस्त तन्मया प्रीतिमता युवयोरनुज्ञातम्। कुतः,

त्वमर्हतां प्राग्रसरः स्मृतोऽसि यच्छकुन्तला मूर्तिमती च सत्क्रिया।
समानयंस्तुल्यगुणं वधूवरं चिरस्य वाच्यं न गतः प्रजापतिः ॥ ५१ ॥

तदिदानीमापन्नसत्त्वा प्रतिगृह्यतां सहधर्मचरणाय" इति।' गौतम्यपि निजगाद—'आर्य ! किमपि वक्तुकामाऽस्मि। न च मे वचनावकाशोऽस्ति। कथमिति,

नावेक्षितो गुरुजनोऽनया बन्धुता न तथा त्वया।
एकक्रम एव कृते किमिव भणाम्येकमेकस्य ॥'१२॥

पार्थिवोऽप्राक्षीत्—'किमिदमुपन्यस्तम् ?'

पावकः खल्वभूदसौ वचनोपन्यासः शकुन्तलायै।

शार्ङ्गरवोऽवोचत्—'कथमिदं नाम ?' भवन्त एव सुतरां लोकवृत्तान्तनिष्णाताः।

सतीमपि ज्ञातिकुलैकसंश्रयां जनोऽन्यथा भर्तृमतीं विशङ्कते।
अतः समीपे परिणेतुरिष्यते प्रियाऽप्रिया वा प्रमदा स्वबन्धुभिः॥'१३॥

महीपतिरुवाच—'किं चात्र भवती मया परिणीतपूर्वा ?'

शार्ङ्गरवोऽवादीत्—

'किं कृतकार्यद्वेषो धर्मं प्रति विमुखता कृतावज्ञा ?'

भूपतिनाऽभ्यधायि—'कुतोऽयमसत्कल्पनाप्रश्नः ?'

तापसोऽभाषत—

'मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु ॥'१४॥

गौतमी तु 'जाते ! मुहूर्तं मा लज्जस्व। अपनेष्यामि तावत्तेऽवगुण्ठनम्। ततस्त्वां भर्ताऽभिज्ञास्यति' इत्यभिधाय तस्यास्तिरस्करिणीं संहृतवती। निर्वर्ण्य सुविचार्य च तामनभिजानन् सुविमृश्य स व्याजहार-'भोस्तपोधनाः ! चिन्तयन्नपि न खलु स्वीकरणमत्र भवत्याः स्मरामि। तत्कथमिमामभिव्यक्तसत्त्वलक्षणां प्रत्यात्मानं क्षेत्रिणमाशङ्कमानः प्रतिपत्स्ये।'

शार्ङ्गरवेण भणितम्—मा तावत्

'कृताभिमर्शामनुमन्यमानः सुतां त्वया नाम मुनिर्विमान्यः ।
मुष्टं प्रतिग्राहयता स्वमर्थं पात्रीकृतो दस्युरिवासि येन ॥'२१ ॥

शारद्वतः प्रत्यवभाषत्—'शार्ङ्गरव ! विरम त्वमिदानीम्। शकुन्तले ! वक्तव्यमुक्तमस्माभिः । सोऽयमत्र भवानेवमाह। दीयतामस्मै प्रत्ययप्रतिवचनम् ।'

सा सापवारितकमवोचत्—'इदमवस्थान्तरं गते तादृशेऽनुरागे किं वा स्मारितेन। आत्मेदानीं मे शोचनीय इति व्यवसितमेतत् ।' ततः सा प्रकाशमशंसीत्—'आर्यपुत्र !' ततश्चार्धोक्ते विरम्य पुनः प्रवृत्ता—'संशयित इदानीं नैष समुदाचारः। पौरव ! न युक्तं नाम ते तदा पुराऽऽश्रमपदे स्वभावोत्तानहृदयमिमं जनं समयपूर्वं प्रतार्येदृशैरक्षरैः प्रत्याख्यातुम् ।'

धरणिरमणः कर्णौ पिधायाभ्यधात्—'शान्तं पापम् !

व्यपदेशमाविलयितुं किमीहसे जनमिमञ्च पातयितुम् ।
कूलङ्कषेव सिन्धुः प्रसन्नमम्भस्तटतरुञ्च ॥' २६ ॥

सा प्रत्युवाच—'भवतु। यदि परमार्थतः परपरिग्रहशंकिना त्वयैवं वक्तुं प्रवृत्तं तदभिज्ञानेनानेन तवाऽऽशङ्कामपनेष्यामि।' पार्थिवोऽपि 'उदारः कल्पः' इति प्रस्तावममुमभिननन्द। परं यदा सा मुद्रास्थानं परामृशति तदाऽङ्गुलिमङ्गुलीयकशून्यामवेत्य महान्तं विषादमुपगता गौतमीमवेक्षाञ्चक्रे। गौतमी व्याजहार—'नूनं ते शक्रावताराभ्यन्तरे शचीतीर्थसलिलं वन्दमानायाः प्रभ्रष्टमङ्गुलीयकम् ।'

संप्रति स्मितं विधाय राजा व्याजहार—'इदं तत् प्रत्युत्पन्नमति स्त्रैणम्' इति यदुच्यते।'

तत्सर्वं विधिविलसितं मन्यमाना मेनकात्मजा मनुजेन्द्रतपोवननिवाससमयवृत्तान्तविशेषेण तं प्रत्याययितुमयतिष्ट। तद्यथा। 'नन्वेकस्मिन् दिवसे नवमालिकामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते संनिहितमासीत्। तत्क्षणे स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थितः। त्वयाऽयं तावत्प्रथमं पिबत्वित्यनुकम्पिनोपच्छन्दित उदकेन। न पुनस्तेऽपरिचयाद्धस्ताभ्याशमुपगतः। पश्चात्तस्मिन्नेव मया गृहीते सलिलेऽनेन कृतः प्रणयः। तदा त्वमित्थं प्रहसितोऽसि। "सर्वः सगन्धेषु विश्वसिति। द्वावप्यत्राऽऽरण्यकाविति।" ' परं न कथमपि तस्य स्मृतिरभूत्। स उवाच—

स्त्रीणामशिक्षितपटुत्वममानुषीषु
संदृश्यते किमुत याः प्रतिबोधवत्यः।
प्रागन्तरिक्षगमनात् स्वमपत्यजातम्
अन्यैर्द्विजैः परभृताः खलु पोषयन्ति॥' २७॥

अत्र शकुन्तला सरोषमलपत्—'अनार्य! आत्मनो हृदयानुमानेन पश्यसि। क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते।'

अथ दुष्यन्तः 'संदिग्धबुद्धिं मां कुर्वन्नकैतव इवास्याः कोपो लक्ष्यते' इति व्यचारयत्, प्रकाशं तूवाच—'भद्रे! प्रथितं दुष्यन्तस्य चरितम्।'

सा प्रत्युवाच—'सुष्टु तावदत्र स्वच्छन्दचारिणी कृताऽस्मि याऽहमस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयस्थितविषस्य

हस्ताभ्याशमुपगता ।' ततः सा पटान्तेन मुखमावृत्य रोदितुमारेभे । तद्दृष्ट्वा शार्ङ्गरवेणोक्तम्—'इत्थमात्मकृतं प्रतिहतं चापलं दहति ।

अतः परीक्ष्य कर्तव्यं विशेषात् संगतं रहः ।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥' ४८ ॥

महीभृदुवाच—'अयि भोः ! किमत्र भवतीप्रत्ययादेवास्मान् संयुतदोषाक्षरैः क्षिणुथ ?'

शार्ङ्गरव उपस्थितानभि सासूयमुवाच—'श्रुतं भवद्भिरधरोत्तरम् !

आ जन्मनः शाठ्यमशिक्षितो यस्तस्याऽप्रमाणं वचनं जनस्य ।
परातिसंधानमधीयते यैर्विद्येति ते सन्तु किलाऽऽप्तवाचः ॥' ४९ ॥

शारद्वतोऽवदत्—'शार्ङ्गरव ! अनुष्ठितो गुरोः संदेशः । प्रतिनिवर्तामहे वयम् ।' ततः स राजानमभ्युवाच—

'तदेषा भवतः कान्ता त्यज चैनां गृहाण वा ।
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी ॥' ६० ॥

अथ प्रस्थिताः शकुन्तलां तत्रैव विहाय गौतमीशार्ङ्गरवशारद्वताः । परित्यक्तया तयोचे—'कथमनेन कितवेन विप्रलब्धा अस्मि । यूयमपि मां परित्यजथ ।' एवमुक्त्वा साताननुप्रातिष्ठत । तां तथा वीक्ष्य गौतमी स्थित्वोवाच—'वत्स शार्ङ्गरव ! अनुगच्छतीयं खलु नः करुणपरिदेविनी शकुन्तला । प्रत्यादेशपरुषे भर्तरि किं वा मे पुत्रिका करोतु ।'

शार्ङ्गरवो निवृत्य सरोषमुक्तवान्—'किं पुरोभागे ! स्वातन्त्र्यमवलम्बसे ?'

तच्छ्रुत्वा भीतां वेपमानां तां स पुनरवोचत्–'शकुन्तले !

यदि यथा वदति क्षितिपस्तथा
त्वमसि किं पितुरुत्कुलया त्वया ।
अथ तु वेत्सि शुचिव्रतमात्मनः
पतिकुले तव दास्यमपि क्षमम् ॥ ६१ ॥

तिष्ठ साधयामो वयम् ।'

पौरवेणावाचि–'भोस्तपस्विन् ! किमत्र भवतीं विप्रलभसे ?'

शार्ङ्गरवः—'यदा तु पूर्ववृत्तमन्यसङ्गाद्विस्मृतो भवांस्तदा कथमधर्मभीरुः ?'

दुष्यन्तः पुरोहितमभाषत–'भवन्तमेवात्र गुरुलाघवं पृच्छामि,

मूढः स्यामहमेषा वा वदेन् मिथ्येति संशये ।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः ?' ६२ ॥

अथ पुरोहितो विचार्यावोचत्–'यदि तावदेवं क्रियताम् । अत्र भवती तावदा प्रसवादस्मद्गृहे तिष्ठतु । त्वं साधुभिरुद्दिष्टः प्रथममेव "चक्रवर्तिनं पुत्रं जनयिष्यसि" इति । सचेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो भविष्यति, अभिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि । विपर्यये तु पितुरस्याः समीपनयनमवस्थितमेव ।'

महीपतिना प्रतिपन्नोऽसौ प्रस्तावः ततः पुरोहितेनानुगन्तुमुक्ता शकुन्तला रुदती सह पुरोधसा तपस्विभिश्चान्निशरणान्निष्क्रान्ता ।

अथाचिरेणैव विस्मितः पुरोधा निवृत्य मनुजेन्द्रं जगाद—'देव ! अद्भुतं खलु संवृत्तम् । परावृत्तेषु कण्वशिष्येषु,

सा निन्दन्ती स्वानि भाग्यानि बाला बाहूत्क्षेपं क्रन्दितुं च प्रवृत्ता ।
स्त्रीसंस्थानञ्चाप्सरस्तीर्थमाराद्दुत्क्षिप्यैनां ज्योतिरेकं जगाम ॥' ६३ ॥

उदन्तममुं निशम्य सर्वे विस्मिताः। पर्याकुलो भूपालः शयनालयं ययौ। ततः पर्यालोचयच्च—

'कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम्।
बलवत्तु दूयमानं प्रत्याययतीव मे हृदयम्॥' ६४॥

[ ६ ]

अथ कदाचिन् मित्रावसुर्नाम नागरिको राष्ट्रियश्यालो मणिबन्धोत्कीर्णनामधेयं राजकीयमङ्गुलीयकं विचिक्रीषुं कमपि धीवरं गृहीतवान्। जानुक-सूचकौ नाम रक्षिणौ तमदभ्रं ताडयित्वोचतुः—'अरे कुम्भीरक ! कथय कुत्र त्वयैतद्राजकीयमङ्गुलीयकं समासादितम्।'

स पुरुषो भीतभीत ऊचे—'प्रसीदन्तु भावमिश्राः। अहं नेदृशकर्मकारी।'

जानुकोऽचकथत्—'किं शोभनो ब्राह्मण इति कलयित्वा राज्ञा प्रतिग्रहो दत्तः।'

पुरुषोऽभाषत—'शृणुतेदानीम्। 'अहं शक्रावताराभ्यन्तरवासी धीवरः।'

सूचकोऽकथयत्—'पाटच्चर ! किमस्माभिर्जातिः पृष्टा।'

श्यालोऽलपत्—'सूचक ! कथयतु सर्वमनुक्रमेण। मैनमन्तरे प्रतिबन्धय।'

पुरुषः प्रक्रान्तवान्—'अहं जालोद्गालादिभिर्मत्स्यबन्धोपायैः कुटुम्बभरणं करोमि।'

अत्र नागरिको विहस्योवाच—'विशुद्ध इदानीमाजीवः।' धीवरेण भणितम्—

'सहजं किल यद्विनिन्दितं न च तत्कर्म विवर्जितां व्रजेत् ।
पशुमारणकर्मदारुणो ह्यनुकम्पामृदुरेव श्रोत्रियः ॥ ६१ ॥

श्यालो ललाप—'ततस्ततः ।'

पुरुषोऽभाषिष्ट—'एकदा खण्डशो रोहितमत्स्यो मया कल्पितो यावत् । तस्योदराभ्यन्तर इदं रत्नभासुरमङ्गुलीयं दृष्ट्वा पश्चादहं तस्य विक्रयाय दर्शयन् गृहीतो भावमिश्रैः । मारयत वा मुञ्चतवा । अयमस्याऽऽगमवृत्तान्तः ।'

नागरिकेणोक्तम्—'जानुक ! विस्रगन्धी गोधादी मत्स्य-बन्ध एव निःसंशयम् । अङ्गुलीयकदर्शनमस्य विमर्शितव्यम् । राजकुलमेव गच्छामः ।'

ततः प्रस्थिताः सर्वे । राजकुलमासाद्य राष्ट्रियोऽभणत् —'सूचक ! इमं गोपुरद्वारेऽप्रमत्तौ प्रतिपालयतम् । यावदि-ममङ्गुलीयकं यथाऽऽगमनं भर्तुर्निवेद्य ततः शासनं प्रतीक्ष्य निष्क्रमामि ।'

एवमभिधाय गतः स स्तोकेनैव कालेन पत्रहस्तो राज-शासनं प्रतीक्ष्य निवृत्तः । सः 'उपपन्नः खल्वङ्गुलीयस्या-ऽऽगमः' इति कथयन्धीवरं परिमुक्तबन्धनं कृतवान् । ततः 'एष भर्त्राऽङ्गुलीयकमूल्यसम्मितः प्रसादोऽपि दापितः' इति पुरुषाय स्वं प्रायच्छत् ।

सूचकोऽचकथत्—'एष नामानुग्रहो यच्छूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः ।'

जानुकः कथयामास—'आवुत्त ! परितोषं कथय । तेनाङ्गुलीयकेन भर्तुः संमतेन भवितव्यम् ।'

राष्ट्रियश्यालोऽलपत्—'न तस्मिन्महार्हे रत्नं भर्तुर्बहुमतमिति तर्कयामि। तस्य दर्शनेन भर्तुरभिमतो जनः स्मारितः। मुहूर्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकनयन आसीत्।'

जानुकस्तु 'सेवितं नामाऽऽवुत्तेनास्य कृते मात्स्यिकभर्तुः' इत्युक्त्वा पुरुषमसूयया ददर्श।

पुरुषोऽपि 'भट्टारक! इतोऽर्धं युष्माकं सुमनोमूल्यं भवतु' इत्युत्कोचमकल्पयत्।

सुतरां प्रीतः श्यालस्तेन समं कादम्बरीसख्याय शौण्डिकाऽऽपणं जगाम।

अथातिक्रान्ते कियति काले सानुमती नामाप्सराः पर्यायनिर्वर्तनीयमप्सरस्तीर्थसांनिध्यं यावत्साधुजनाभिषेककालं निर्वर्त्य मेनकासंबन्धेन शरीरभूतायाः शकुन्तलाया राजर्षेरुदन्तं प्रत्यक्षीकर्तुमाकाशयानेन तत्राऽऽजगाम। समन्तादवलोक्यापि सा वसन्तर्तूत्सवेऽपि निरुत्सवारम्भमिव राजकुलं समीक्ष्य विस्मिता। प्रणिधानेन सर्वं विज्ञातुं प्रभवन्त्यपि सख्या बहुमानेन सा तद्विधाय केवलं तिरस्करिणीप्रतिच्छन्ना परभृतिकामधुकरिकानाम्न्योरुद्यानपालिकयोः पार्श्ववर्तिनी भूत्वोपलब्धुं प्रवृत्ता। तयोर्मिथ आभाषणेन, अनन्तरं च क्षणादेव तत्राऽऽगतेन कञ्चुकिना साकं तयोरालापेन सानुमत्या विज्ञातं यत् 'यदैव खलु स्वाङ्गुलीयकदर्शनादनुस्मृतं वसुमतीदयितेन "सत्यमूढपूर्वा मे तत्र भवती रहसि शकुन्तला मोहात्प्रत्यादिष्टा" इति, तदा प्रभृत्येव पश्चात्तापमुपगतः सः,

रम्यं द्वेष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते
शय्याप्रान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः ।
दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा
गोत्रेषु स्खलितस्तदा भवति च व्रीडाविलक्षश्चिरम् ॥ ६६ ॥

तस्मादेव प्रभवतो वैमनस्यात्स वसन्तोत्सवं प्रतिषिद्धवान्' इति ।

अथ पश्चात्तापसदृशवेशो विश्वम्भरावल्लभस्तत्रैवाऽऽजगाम माढव्येन विदूषकेन वेत्रवत्या नाम प्रतीहार्या च समम् । तमागच्छन्तं विज्ञायोद्यानपालिके ततो विनिर्गते । ध्यानमन्दं सर्पतोत्सुकेन क्ष्मापतिना निजगदे—

'प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम् ।
अनुशयदुःखायेदं हतहृदयं संप्रति विबुद्धम् ॥' ६७ ॥

तदवेक्ष्य सानुमत्याऽभ्यधायि—'नन्वीदृशानि तपस्विन्या भागधेयानि ।'

अनन्तरं पौरव उवाच–'वेत्रवति ! मद्वचनादमात्यमार्यपिशुनं ब्रूहि, "चिरप्रबोधनान्न संभावितमस्माभिरद्य धर्मासनमध्यासितुम् । यत्प्रत्यवेक्षितं पौरकार्यमार्येण तत्पत्रमारोप्य दीयताम्" इति ।'

तन्निदेशं शिरसि कुर्वाणा निर्जगाम प्रतीहारी । वातायनोऽपि निरसरत् ।

एवं संपन्ने निर्मक्षिके दुष्यन्तः स्ववयस्यमुवाच—'सखे ! क्वोपविष्टः प्रियायाः किंचिदनुकारिणीषु लतासु दृष्टिं विलोभयामि ?'

माढव्येन भणितम्—'नन्वासन्नपरिचारिका चतुरिका भवता संदिष्टा "माधवीमण्डप इमां वेलामतिवाहयिष्ये ।

तत्र मे चित्रफलकगतां स्वहस्तलिखितां तत्र भवत्याः शकुन्तलायाः प्रतिकृतिमानय " इति ।'

अथ सानुमत्यानुगतावुभावपि तत्र गत्वा वासन्तीविताने मणिशिलापट्टक उपविष्टौ । सानुमत्यपि सख्याः प्रतिकृतिं द्रष्टुमुल्लोचलतां संश्रित्य स्थिता ।

दीर्घं निःश्वस्य दुष्यन्तेन भाषितम्—'सखे ! सर्वमिदानीं स्मरामि शकुन्तलायाः प्रथमवृत्तान्तम् । कथितवानस्मि भवते च । स भवान् प्रत्यादेशवेलायां मत्समीपगतो नासीत् । पूर्वमपि न त्वया कदाचित्संकीर्तितं तत्र भवत्या नाम । कदाचिदहमिव विस्मृतवानसि त्वम् ।'

माढव्येनोक्तम्—'न विस्मरामि । किं तु सर्वं कथयित्वाऽवसाने पुनस्त्वया "परिहासविजल्प एष न भूतार्थः" इत्याख्यातम् । मयाऽपि मृत्पिण्डबुद्धिना तथैव गृहीतम् । अथवा भवितव्यता खलु बलवती ।'

मनुजेन्द्रेण जगदे—'वयस्य ! निराकरणविक्लवायाः प्रियायाः समवस्थामनुस्मृत्य बलवदशरणोऽस्मि । सा हि

इतः प्रत्यादेशात् स्वजनमनुगन्तुं व्यवसिता
　　मुहुस्तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।
पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती
　　मयि क्रूरे यत्तत् सविषमिव शल्यं दहति माम् ॥' ६८ ॥

सानुमती पर्यालोचयत्—'अहो, ईदृशी स्वकार्यपरता ! अस्य संतापेनाहं रमे ।'

माढव्यो बभाण—'भोः ! अस्ति मे तर्कः । केनापि तत्र भवत्याकाशचारिणा नीतेति ।'

जगतीदयितो जगाद—'कः पतिदेवतामन्यः परामष्टुमुत्सहेत। मेनका किल सख्यास्ते जन्मप्रतिष्ठेति श्रुतवानस्मि। तत्सहचारिणीभिः सखी ते हृतेति मे हृदयमाशङ्कते।'

नर्मसचिवेन व्याहृतम्—'यद्येवम्, अस्ति खलु समागमः कालेन तत्र भवत्या। न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं द्रष्टुं पारयतः।'

अथो अङ्गुलीयकं विलोक्यैलापालो व्यलपत्—'अये! इदं तावदसुलभस्थानभ्रंशि शोचनीयम्।

तव सुचरितमङ्गुलीय! नूनं प्रतनु ममेव विभाव्यते फलेन।
अरुणनखमनोहरासु तस्याश्च्युतमसि लब्धपदं यदङ्गुलीषु॥'६९॥

ततः परिहासवयस्येनाभिहितम्—'भोः! इयं नाममुद्रा केनोद्घातेन तत्र भवत्या हस्ताभ्याशं प्रापिता?'

वसुमतीपतिना प्रत्यवादि—'श्रूयताम्। स्वनगराय प्रस्थितं मां प्रिया सबाष्पमाह "कियच्चिरेणाऽऽर्यपुत्रः प्रतिपत्तिं दास्यति?" इति। तदानीमिमां मुद्रां तदङ्गुलौ निवेशयता मया प्रत्यभिहिता—

"एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय गच्छति यावदन्तम्।
तावत् प्रिये! मदवरोधगृहप्रवेशं
नेता जनस्तव समीपमुपैष्यतीति॥" ७०॥

तच्च दारुणात्मना मया मोहान्नानुष्ठितम्।'

ततो महीप उन्मत्तानां पन्थानं गृहीत्वाऽङ्गुलीयकमुपालब्धुमारब्ध—

'कथं नु तं बन्धुरकोमलाङ्गुलिं करं विहायासि निमग्नमम्भसि ।
अचेतनं नाम गुणं न लक्षयेन्मयैव कस्मादवधीरिता प्रिया ॥'७१॥

अथ चित्रफलकहस्ता चतुरिका तत्र संप्राप्य 'इयं चित्रगता भट्टिनी' इति प्रतिच्छन्दं दर्शितवती। अभूत्तत्र मधुराऽवस्थानदर्शनीयो भावाऽनुप्रवेशः। पश्यतो दृष्टिर्निम्नोन्नतप्रदेशेषु स्खलति स्म। प्रतिच्छन्दं वीक्ष्य मुनिसुतायाः सुसंस्तुताऽपि सानुमती सहसा 'जाने सख्यग्रतो मे वर्तते' इति निजगाद।

भूभर्त्रा भणितम्—'चतुरिके ! अर्धलिखितमेतद्विनोदस्थानम्। गच्छ। वर्तिकां तावदानय।'

चित्रगतया प्रिययोन्मादितो राजा जगाद-'अहं हि

'साक्षात्प्रियामुपगतामपहाय पूर्वं
चित्रार्पितां पुनरिमां बहु मन्यमानः ।
स्रोतोवहां पथि निकामजलामतीत्य
जातः सखे ! प्रणयवान् मृगतृष्णिकायाम् ॥' ७२ ॥

ततः स प्रतिकृतौ लिलिखिषितं किमप्यन्यत् वर्णयितुं प्रवृत्तः। यथा—

'कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः ।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥ ७३ ॥

कृतं न कर्णार्पितबन्धनं सखे ! शिरीषमागण्डविलम्बिकेसरम् ।
न वा शरच्चन्द्रमरीचिकोमलं मृणालसूत्रं रचितं स्तनान्तरे ॥' ७४ ॥

चित्रं निपुणं निरूप्य परिहाससखाऽऽचख्यौ—'आः,

एष दास्याः पुत्रः कुसुमरसपाटच्चरस्तत्र भवत्या वदनमभिलङ्घति मधुकरः ।'

पौरवोऽब्रवीत्—'अयि भोः कुसुमलताप्रियातिथे ! किमत्र परिपतनखेदमनुभवसि ?

'एषा कुसुमनिषण्णा तृषिताऽपि सती भवन्तमनुरक्ता ।
प्रतिपालयति मधुकरी न खलु मधु विना त्वया पिबति ॥' ७५ ॥

तच्छ्रुत्वा उन्मत्तो दुष्यन्त इति विज्ञाय माढव्योऽभणत्—'भोः ! चित्रं खल्वेतत् ।'

हृदये हत इव महीनायको बाष्पं विहरन्नुवाच—'कथं चित्रम् ? वयस्य ! किमिदमनुष्ठितं पौरोभाग्यम् ?

दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन ।
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ॥ ७६ ॥

वयस्य ! कथमेवमविश्रान्तदुःखमनुभवामि ।

प्रजागरात् खिलीभूतस्तस्याः स्वप्ने समागमः ।
बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥' ७७ ॥

अत्र सानुमत्योदितम्—'सर्वथा प्रमार्जितं त्वया प्रत्यादेशदुःखं शकुन्तलायाः ।'

अथाऽऽगता तत्र रिक्तकरा चतुरिका । सा व्यजिज्ञपत्—'जयतु जयतु भर्ता । वर्तिकाकरण्डकं गृहीत्वेतो मुखं प्रस्थिताऽस्मि । स मे हस्तादन्तरा तरलिकाद्वितीयया देव्या वसुमत्या "अहमेवाऽऽर्यपुत्रस्योपनेष्यामि" इति सबलात्कारं गृहीतः । यावद्देव्या विटपलग्नमुत्तरीयं तरलिका मोचयति तावन्मया निर्वाहित आत्मा ।'

संभ्रान्तो भूभृदभ्यधात्—'वयस्य ! उपस्थिता देवी

बहुमानगर्विता च। भवानिमां प्रतिकृतिं रक्षतु।'

सोऽपि 'यदि भवानन्तःपुरकालकूटान्मोचयते तदा मां मेघप्रतिच्छन्दे प्रासादे शब्दापय' इत्युक्त्वा द्रुतपदं निष्क्रान्तः।

ततः समागता प्रतीहारी। तस्याः सकाशात् पार्थिवेन विज्ञातं "पत्रहस्तां मां दृष्ट्वा प्रतिनिवृत्ता देवी" इति। तया विनिवेदितम्—'देव ! अमात्यो विज्ञापयति "अर्थजातस्य गणनाबहुलतयैकमेव पौरकार्यमवेक्षितम्। तद्देवः पत्रारूढं प्रत्यक्षीकरोतु" इति।'

अथोपनतं तत्पत्रं प्रतीहार्या। तत्राऽङ्कितमभूत्—'समुद्रव्यवहारी सार्थवाहो धनमित्रो नाम नौव्यसने विपन्नः। अनपत्यश्च किल तपस्वी। राजगामी तस्याऽर्थसंचयः" इति।' तदनुवाच्य दुष्यन्तेन गदितम्—'कष्टं खल्वनपत्यता ! प्रचुरधनत्वाद्बहुपत्नीकेन तत्र भवता भवितव्यम्। विचार्यतां यदि काचिदापन्नसत्त्वा तस्य भार्यासु स्यात्।'

प्रतीहार्या प्रत्यभिहितम्—'देव ! इदानीमेव साकेतस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना जायाऽस्य श्रूयते।'

अथ पौरवेण भणितम्—'ननु गर्भः पित्र्यं रिक्थमर्हति। गच्छ, एवममात्यं ब्रूहि।'

अथ प्रस्थिता प्रतीहारी। ततोऽधिकतरं सन्तापमनुभवन्भूपतिपुङ्गवो दीर्घमुष्णं च निःश्वस्य शशंस—'एवं भोः सन्ततिविच्छेदनिरवलम्बना मूलपुरुषाऽवसाने संपदः परमुपतिष्ठन्ते। ममाप्यन्ते पुरुवंशश्रीरकाल इवोप्तबीजा भूरेवं वृत्ता। अहो ! दुष्यन्तस्य संशयमारूढाः पिण्डभाजः। कुतः,

अस्मात् परं बत यथाश्रुति संभृतानि
को नः कुले निवपनानि नियच्छतीति ।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुशेषमुदकं पितरः पिबन्ति ॥' ७८ ॥

इदं वीक्ष्य भृशं परितापमुपगता सानुमती । साऽऽभाषत—'हा धिक् ! हा धिक् ! सति खलु दीपे व्यवधानदोषेणैषोऽन्धकारदोषमनुभवति । अहमिदानीमेव निर्वृतं करोमि । अथवा श्रुतं मया शकुन्तलां समाश्वासयन्त्या महेन्द्रजनन्या मुखात् "यज्ञभागोत्सुका देवा एव तथाऽनुष्ठास्यन्ति यथाऽचिरेण धर्मपत्नीं भर्ताऽभिनन्दिष्यति" इति । तद्युक्तमेतं कालं प्रतिपालयितुम् । यावदनेन वृत्तान्तेन प्रियसखीं समाश्वासयामि' इति सा प्रयाता ।

अथ महीपतिः माढव्यमदृष्टरूपेण केनापि सत्त्वेनातिक्रम्य मेघप्रतिच्छन्दस्य प्रासादस्याग्रभूमिमारोपितं श्रुत्वा संशयगतं तं स्ववयस्यं परित्रातुमविलम्बं प्रस्थितः क्षणेनैवाऽऽसाद्य 'सखे ! न भेतव्यम्, न भेतव्यम्' इति तमाश्वासयामास । तेन तूक्तम्—'कथं न भेष्यामि । एष मां कोऽपि प्रत्यवनतशिरोधरमिक्षुमिव त्रिभङ्गं करोति ।'

धराधवो धनुरानायितवान् । तदानीमेवाश्रूयत—

'एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि चेष्टमानम् ।
आर्तानां भयमपनेतुमात्तधन्वा
दुष्यन्तस्तव शरणं भवत्विदानीम् ॥' ७९ ॥

अथाऽऽत्मानमुद्दिश्यमानं विदित्वा बलवदभिक्रुद्धः

क्षितिपतिः 'तिष्ठ कुणपाशन ! त्वामिदानीं न भविष्यसि' इति वदन्नुपरिष्टाद्गतः । न च तत्र किमप्यवाप्तवान् । परं तेन तदानीमेवैवमश्रावि—'अविद्वा ! अविद्वा ! अहमत्र भवन्तं पश्यामि । त्वं मां न पश्यसि । बिडालगृहीतो मूषिक इव निराशोऽस्मि जीविते संवृत्तः ।'

अथो मध्यमलोकपालस्तिरस्करिणीगर्वितं तं कुणपाशनं हन्तुं सायकं समधत्त । ततो माढव्यमुत्सृज्य तत्र प्रादुर्भूतो मातलिरुवाच—

'कृताः शरव्यं हरिणा तवासुराः शरासनं तेषु विकृष्यतामिदम् ।
प्रसादसौम्यानि सतां सुहृज्जने पतन्ति चक्षूंषि न दारुणाः शराः ॥'८० ॥

उभयोपचारानन्तरं मातलिः स्वाभ्यागमप्रयोजनम-कीर्तयत् । तद्यथा—'अस्ति कालनेमिप्रसूतिर्दुर्जयो नाम दानवगणः । शतक्रतोरजय्यस्य तस्य त्वं रणशिरसि निहन्ता स्मृतोऽसि । एतदर्थं हरिणा भवत्सकाशं प्रेषितोऽहम् । अत्राऽऽगतोऽहं विक्लवमायुष्मन्तं कोपयितुं माढव्यं प्रति तथा कृतवानस्मि । स भवानात्तशस्त्र एवेदानीं तमैन्द्र-रथमारुह्य विजयाय प्रतिष्ठताम् ।'

समनन्तरं नृपतिरमात्यं पिशुनं प्रजां परिपालयितुं सं-दिश्य संक्रन्दनस्यन्दनमधिरुह्य प्रस्थितः ।

[ ७ ]

अथानुष्ठितनिदेशो मेदिनीपतिर्मघवता मनोरथानामप्य-भूमिना विसर्जनावसरसत्कारविशेषेणाभ्यर्हितः । तस्य हि दिवौकसां समक्षमर्धासनोपवेशितस्य

अन्तर्गतप्रार्थनमन्तिकस्थं जयन्तमुद्वीक्ष्य कृतस्मितेन ।

आमृष्टवक्षोहरिचन्दनाङ्का मन्दारमाला हरिणा पिनद्धा ॥ ८१ ॥

एवं निर्भरं संभावितो रथाधिरूढोऽसौ मातलिना सह भूलोकं प्रतस्थे।

असुरसंप्रहारोत्सुकेन तेन राज्ञा पूर्वेद्युर्दिवमधिरोहता न लक्षितोऽभूत्स्वर्गमार्गः। अवरोहन्स मातलिवर्णितानि रमणीयतमानि त्रिदिवभूमिदृश्यानि दर्शं दर्शं मोदते स्म। परिवहवायोर्मार्गं वीक्ष्य प्रसन्नस्तस्य सबाह्यकरणोऽन्तरात्मा। ततो रथाङ्गमवलोकयन्नुवाच—'अये! मेघपदवीमवतीर्णौ स्वः। कुतः?

अयमरविवरेभ्यश्चातकैर्निष्पतद्भि-
हरिभिरचिरभासां तेजसा चानुलिप्तैः।
गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते सीकरक्लिन्ननेमिः॥' ८२॥

मातलिर्लेलाप—'क्षणादायुष्मान् स्वाधिकारभूमौ वर्तिष्यते।'

अधोऽवलोक्य महीपतिरवोचत्—'वेगावतरणादाश्चर्य-दर्शनः संलक्ष्यते मनुष्यलोकः। तथाहि,

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी
पर्णाभ्यान्तरलीनतां विजहति स्कन्धोदयात् पादपाः।
संतानैस्तनुभावनष्टसलिला व्यक्तिं भजन्त्यापगाः
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते ॥'८३॥

मातलिरप्युदाररमणीयां पृथिवीं सबहुमानमवलोक्य शश्लाघे।

ततः पूर्वापरसमुद्रावगाढं कनकरसनिस्यन्दं सांध्यमिव मेघपरिघं सानुमन्तमवलोक्य तद्गतं पृष्टो मातलिरलपत्—

'आयुष्मन् ! एष खलु हेमकूटो नाम किंपुरुषपर्वतस्तपःसंसिद्धिक्षेत्रम्। पश्य,

स्वायम्भुवान्मरीचेर्यः प्रबभूव प्रजापतिः ।
सुरासुरगुरुः सोऽत्र सपत्नीकस्तपस्यति ॥' ८४ ॥

भूपतिरभाषत—'तेन ह्यनतिक्रमणीयानि श्रेयांसि। प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि।'

अथ द्वावपि रथेनावतीर्णौ। परिवर्धितमन्दारवृक्षं प्रजापतेराश्रमं प्रविश्यामृतह्रदमिवावगाढो धरापतिः। ततः संयन्त्रिते रथे द्वावपि ततोऽवतेरतुः। विस्मयादवलोकयन्क्षितिपालो लपितवान्—

'प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे धर्माभिषेकक्रिया ।
ध्यानं रत्नशिलातलेषु विबुधस्त्रीसंनिधौ संयमो
यत्काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी !' ८५ ॥

मातलिरवदत्—'उत्सर्पिणी खलु महतां प्रार्थना। अस्मिन्नशोकवृक्षमूले तावदास्तामायुष्मान्, यावत्त्वामिन्द्रगुरवे निवेदयितुमन्तरान्वेषी भवामि।' एवमुक्त्वा स राज्ञाऽनुमतः प्रतस्थे।

अनन्तरं निमित्तं रूपयित्वा नरपतिरवादीत्—

'मनोरथाय नाऽऽशंसे किं बाहो ? स्पन्दसे वृथा ।
पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते ॥' ८६ ॥

अथ कुतश्चिदुत्थितम् 'मा खलु चापलं कुरु। कथं गत एवाऽऽत्मनः प्रकृतिम्' इति ध्वनिं श्रुत्वा नरनाथो व्यचारयत्—'अभूमिरियमविनयस्य। को नु खल्वेष निषिध्यते।'

ततः शब्दानुसारेणावलोक्य स सविस्मयमपश्यद्यत्कश्चित्तपस्विनीभ्यामनुबध्यमानोऽबालसत्त्वो बालः

अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।
प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति ॥ ८७ ॥

स केसरिपोतकमकथयत्—'जृम्भस्व सिंह ! दन्तांस्ते गणयिष्ये ।'

प्रथमा तपस्विन्यवदत्—'अविनीत ! किं नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि । हन्त ! वर्धते तव संरम्भः । स्थाने खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि ।'

अथ तस्मिन् बाल औरस इव पुत्रेऽस्निह्यत महीपमनः । तेन च 'नूनमनपत्यता मां वत्सलयति' इति व्यभावि ।

अपरा तापसी व्याजहार—'एषा खलु केसरिणी त्वां लङ्घयिष्यति यदि तस्याः पुत्रकं न मुञ्चसि ।'

बालः सस्मितं ललाप–'अहो ! बलीयः खलु भीतोऽस्मि ।'

बालोऽसौ पार्थिवस्य महतस्तेजसो बीजं प्रत्यभात् ।

प्रथमा तापसी भूयोऽभ्यधात्—'वत्स ! एनं बालमृगेन्द्रं मुञ्च । अपरं ते क्रीडनकं दास्यामि ।'

बालोऽपि 'कुत्र देह्येतत्' इति हस्तं प्रसारितवान् ।

द्वितीया तापसी न्यगदत्–'सुव्रते ! न शक्यत एष वाचामात्रेण विरमयितुम् । गच्छ त्वम् । मदीय उटजे मार्कण्डेयस्यर्षिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति । तमस्योपहर ।' ततो निष्क्रान्तायां सुव्रतायां दारकोऽसौ "अनेनैव तावत्क्रीडिष्यामि" इत्यभिधाय तापसीं विलोक्य जहास ।

तापसी जगाद—'भवतु । न मामयं गणयति ।' अनन्तरं

पार्श्वमवलोक्य सोवाच—'कोऽत्र ऋषिकुमाराणाम् ।' ततश्च राजानमवलोक्य बभाषे—'भद्रमुख ! एहि तावत् । मोचयानेन दुर्मोकहस्तग्रहेण डिम्भलीलया बाध्यमानं बाल-मृगेन्द्रम् ।'

नृपतिरुपगम्य सस्मितमुवाच—'अयि भो महर्षिपुत्र !

एवमाश्रमविरुद्धवृत्तिना संयमः किमिति जन्मतस्त्वया ।
सत्त्वसंश्रयसुखोऽपि दूष्यते कृष्णसर्पशिशुनेव चन्दनम् ॥' ८८ ॥

तापस्योक्तम्—'भद्रमुख ! न खल्वयमृषिकुमारः ।'

पौरवेण जगदे—'आकारसदृशं चेष्टितमेवास्य कथयति । स्थानप्रत्ययात्तु वयमेवंतर्किणः ।'

अथ यथाऽभ्यर्थितमनुतिष्ठन् राजर्षिर्बालस्पर्शमुपलभ्य चेतसोऽतिशयितां निर्वृतिं लेभे ।

उभौ निर्वर्ण्य तापस्याऽभिहितम्—'आश्चर्यम् ! आश्चर्यम् ! अस्य बालस्य तेऽपि संवादिन्याकृतिरिति विस्मापिताऽस्मि । अपरिचितस्यापि तेऽप्रतिलोमः संवृत्त इति ।'

बालमुपलालयन्निलापालो ललाप—'न चेन्मुनिकुमारोऽयम्, अथ कोऽस्य व्यपदेशः ?'

'पुरुवंशः' इति प्रतिवचः प्राप्य स व्यमृशत्—'कथमेकान्वयो मम ! अतः खलु मदनुकारिणमेनमत्र भवती मन्यते । अस्ति तपोवननिवासः पौरवाणामन्त्यं कुलव्रतम् ।' ततः स भूयोऽन्वयुङ्क्त—'न पुनरात्मगत्या मानुषाणामेष विषयः ।'

तापस्या प्रत्युक्तम्—'यथा भद्रमुखो भणति । अप्सरःसंबन्धेनास्य जनन्यत्र देवगुरोस्तपोवने प्रसूता ।'

पार्थिवः सापवारितकमाह स्म—'हन्त ! द्वितीयमिदमा-

शाजननम् ।' ततः पुनरपि पप्रच्छ—'अथ सा तत्र भवती किमाख्यस्य राजर्षेः पत्नी ?'

साऽवोचत्–'कस्तस्य धर्मदारपरित्यागिनो नाम संकीर्तयितुं चिन्तयिष्यति ।'

अथ पार्थिवश्चिचिन्त—'इयं खलु कथा मामेव लक्ष्यीकरोति । यदि तावदस्य शिशोर्मातरं नामतः पृच्छामि । अथवाऽनार्यः परदारव्यवहारः ।'

अत्रान्तरेऽभ्युपेता मृण्मयूरहस्ता प्रथमा तापसी सुव्रताऽवदत्—'सर्वदमन ! शकुन्तलावण्यं प्रेक्षस्व ।'

शिशुः सदृष्टिक्षेपमुवाच—'कुत्र वा मम माता ?'

उभे ऊचतुः—'नामसादृश्येन वञ्चितो मातृवत्सलः ।'

द्वितीययाऽभ्यधीयत—'वत्स ! अस्य मृत्तिकामयूरस्य रम्यत्वं पश्येति भणितोऽसि ।'

अवनिवल्लभेनावधारितम्—'किं वा शकुन्तलेत्यस्य मातुराख्या । सन्ति पुनर्नामधेयसादृश्यानि । अपि नाम मृगतृष्णिकेव नाममात्रप्रस्तावो मे विषादाय कल्पेत ।'

ततः सुव्रता सोद्वेगमुवाच—'अहो ! रक्षाकरण्डकमस्य मणिबन्धे न दृश्यते ।

दुष्यन्तं रक्षाकरण्डकमादातुं व्यवसितं वीक्ष्य यावदुभे तं निषेधयतस्तावत्तं गृहीतकरण्डकं विलोक्य विस्मिते बभूवतुः ।

पौरवेण परिपृष्टम्—'किमर्थं प्रतिषिद्धाः स्म ।'

सुव्रतयोदितम्—'शृणोतु महाराजः ! एषाऽपराजिता नामौषधिरस्य जातकर्मसमये भगवता मारीचेन दत्ता । एतां

किल मातापितरावात्मानं च वर्जयित्वाऽपरो भूमिपतितां न गृह्णाति। अथ गृह्णाति ततस्तं सर्पो भूत्वा दशति। अनेकशोऽस्माभिः प्रत्यक्षीकृताऽस्या विक्रिया।'

अथ 'कथमिव संपूर्णमपि मे मनोरथं नाभिनन्दामि' इति सहर्षं विभावयन् भूवल्लभो बालं पर्यष्वजत।

अनन्तरमेव नियमव्यापृतायै शकुन्तलायै तं वृत्तान्तं निवेदयितुं गतयोस्तयोर्बालोऽपि मातुः सकाशं गन्तुं स्वमोक्षमियेष। तदा 'पुत्रक! मया सहैव मातरमभिनन्दिष्यसि' इत्युक्तः स प्रत्यभाषत—'मम खलु तातः दुष्यन्तः। न त्वम्।'

अनेनाधिकतरं प्रत्यायितः पौरवः।

अथाऽऽगता तत्रैकवेणीधरा नियमक्षाममुखी परिधूसरे वसने वसाना शकुन्तला। अधुना शापनिवृत्तेर्दुष्यन्तस्तां तत्क्षणमभिज्ञातवान्। सा तु तं पश्चात्तापविवर्णमनभिज्ञाय विचचार—'क एष इदानीं कृतरक्षामङ्गलं दारकं मे गात्रसंसर्गेण दूषयति।'

बालोऽपि मातरमुपेत्याब्रवीत्—'मातः! एष कोऽपि पुरुषो मां पुत्र इत्यालिङ्गति।'

राज्ञा जगदे—'प्रिये!

स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थिताऽसि मे सुमुखि!
उपरागान्ते शशिनः समुपगता रोहिणी योगम्॥' ८६॥

अभिवादनोत्सुका काश्यपतनयाऽपि 'जयतु जयत्वार्यपुत्रः' इत्यर्धोक्ते बाष्पकण्ठी व्यरमत्। ततस्तस्याः पादयोः प्रणिपतितेनेन्द्रसखेनोचे—

'सुतनु ! हृदयात् प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसः संमोहो मे तदा बलवानभूत् ।
प्रबलतमसामेवंप्रायाः शुभेषु प्रवृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥' ६० ॥

तमुत्थापयन्ती कौशिककन्यकाऽगादीत्—'नूनं मे सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणाममुखमासीद्येन सानुक्रोशोऽप्यार्यपुत्रो मयि विरसः संवृत्तः । अथ कथमार्यपुत्रेण स्मृतो दुःखभाग्ययं जनः ?'

गाधेयतनूजाया अश्रूणि प्रमृज्य मानवेन्द्रेण भणितम्—'अस्मादङ्गुलीयोपलम्भात् खलु स्मृतिरुपलब्धा ।'

ततो मातलिरभ्युपेत्योवाच—'दिष्ट्या धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन चाऽऽयुष्मान् वर्धते । एत्वायुष्मान् ! भगवान् मारीचस्ते दर्शनं वितरति ।'

सर्वे तेऽधुना भगवन्मारीचेः स्थानं जग्मुः । अथो यथायथमभिवादनाशीर्वचःप्रभृत्युत्तरमैकैकं निर्दिशन् मारीच उवाच—

'दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान् ।
श्रद्धा वित्तं विधिश्चेति त्रितयं तत्समागतम् ॥' ६१ ॥

पुरुकुलप्रदीपः मारीचदर्शनात् प्रागभिप्रेतसिद्धिमभिलक्ष्य शशंस—

'उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक् तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं क्रमस्तव प्रसादस्य पुरस्तु संपदः ॥'६२॥

मातलिना ललपे—'एवं विधातारः प्रसीदन्ति ।'

अथ भगवान्मारीचः कण्वदुहितरमुवाच—'वत्से ! चरिता-

र्थाऽसि। सहधर्मचारिणं प्रति न त्वया मन्युः कार्यः। पश्य,

शापादसि प्रतिहता स्मृतिरोधरूक्षे
भर्तर्यपेततमसि प्रभुता तवैव।
छाया न मूर्च्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा॥' ३३॥

ततः सर्वदमनं निर्दिशन्स पुनरुवाच—'विधिवदस्माभिरनुष्ठितजातकर्माणं शाकुन्तलेयं चक्रवर्तिनमवगच्छतु भवान्। पश्य,

रथेनानुद्धातस्तिमितगतिना तीर्णजलधिः
पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः।
इहायं सत्त्वानां प्रसभदमनात्सर्वदमनः
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात्॥' ३४॥

प्रीतो नरपतिरुदैरयत्—'भवता कृतसंस्कारे सर्वमस्मिन् वयमाशास्महे।'

अथ काश्यपेन सार्धमासनस्थाऽदितिरुवाच—'भगवन्! अनया दुहितृमनोरथसंपत्त्या कण्वोऽपि तावच्छ्रुतविस्तरः क्रियताम्। दुहितृवत्सला मेनकेहैवोपचरन्ती तिष्ठति।'

मारीचिनोक्तम्—'तपःप्रभावात्प्रत्यक्षं सर्वमेव तत्र भवतः तथाऽप्यसौ प्रियमस्माभिः प्रष्टव्यः। गालव! इदानीमेव विहायसा गत्वा मम वचनात्तत्र भवते कण्वाय प्रियमावेदय।'

अथ पौरवोऽपि सवधूकुमारः ऋषिमामन्त्र्य रथमारुह्य प्रस्थितः स्वां राजधानीम्।



# उत्तररामचरितम्

[१]

अथ प्रावर्तिष्ट चिरं पौलस्त्यकुलधूमकेतोर्महाराजरामस्य रात्रिंदिवमसंहृतनान्दीकः पट्टाभिषेकक्षणः। निर्वृत्ते खलु तस्मिन् प्रेषिता हि स्वगृहान् महाराजेन लङ्कासमरसुहृदो महात्मानः प्लवङ्गमराक्षसाः सभाजनोपस्थायिनश्च नानादिगन्तपावना ब्रह्मर्षयो राजर्षयश्च।

ततः पुरस्कृतारुन्धतीवसिष्ठा रामस्य मातरोऽपि रोमपादस्यापत्यकृतिकाया दशरथकन्यकायाः शान्तायाः पतेः ऋष्यशृङ्गस्य प्रारब्धद्वादशवार्षिकसत्रस्यानुरोधात् कठोरगर्भामपि जानकीं विमुच्य तदाश्रमपदं प्रयाताः।

तदानीं पावकपरीक्षापरिपूतां सीतामधिकृत्य रावणपुरीप्रवासमूलकोऽपवादो लोके प्रसृतोऽपि महाराजं प्रति नास्यन्दत।

जनकगमनाद्विमनसां जानकीं परिसान्त्वयति राघवे ऋष्यशृङ्गाश्रमादष्टावक्रः संप्राप्तः। परस्परस्योपचारानन्तरं सीतारामौ स्वजनवार्तवार्तामनुयुयुजाते। अष्टावक्रोऽपि कुशलप्रवृत्तेरावेदनान्तरं सीतामुद्दिश्य प्रोवाच—'देवि! कुलगुरुर्भगवान्वसिष्ठस्त्वामिदमाह—

"विश्वम्भरा भगवती भवतीमसूत
राजा प्रजापतिसमो जनकः पिता ते ।
तेषां वधूस्त्वमसि नन्दिनि ! पार्थिवानां
येषां कुलेषु सविता च गुरुर्वयं च ॥ १ ॥

तत्किमन्यदाशास्महे । केवलं वीरप्रसवा भूयाः ।"

स पुना राममभ्यधत्त—'इदं च भगवत्याऽरुन्धत्या देवीभिः शान्तया च भूयो भूयः संदिष्टम् । "यः कश्चिद्गर्भदौर्हृदोदयो भवत्यस्याः सोऽवश्यमचिरान्मानयितव्यः" इति ।

दाशरथिरुवाच—'क्रियते यदेषा कथयति ।'

अष्टावक्रः पुनरारभत—'ननान्दुः पत्या च देव्याः संदिष्टम् —"वत्से ! कठोरगर्भेति नाऽनीताऽसि । वत्सोऽपि रामभद्रस्त्वद्विनोदार्थमेव स्थापितः । तत्पुत्रपूर्णोत्सङ्गामायुष्मतीं द्रक्ष्यामः ।'

'तथाऽस्तु । भगवता वसिष्ठेन न किंचिदादिष्टोऽस्मीति ?' इति राघवेण पृष्टो मुनिरुवाच—'श्रूयताम्,

जामातृयज्ञेन वयं निरुद्धास्त्वं बाल एवासि नवं च राज्यम् ।
युक्तः प्रजानामनुरञ्जने स्यास्तस्माद्यशो यत्परमं धनं वः ॥'२ ॥

तच्छ्रुत्वा पुरुषोत्तमो बभाषे—'यथा समादिशति भगवान्मैत्रावरुणिः ।

स्नेहं दयां च सौख्यं च यदि वा जानकीमपि ।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा ॥' ३ ॥

ततः संदेशं प्रतिगृहीतवान्राघवोऽष्टावक्रस्य विश्रमाय व्यवस्थां व्यदधात् ।

अथ समागतो लक्ष्मणो न्यवेदयत्—'जयति जयत्यार्यः ।

'आर्य ! अर्जुनेन चित्रकरेणास्मदुपदिष्टमार्यस्य चरितमस्यां वीथ्यामभिलिखितम्। तत्पश्यत्वार्यः।'

जानकीविनोदने कुशलमनुजं श्लाघमानेन रामेण भणितम्—'तत्क्रियानवधिः?'

सौमित्रिणा प्रतिभणितम्—'यावदार्याया हुताशनशुद्धिः।'

अथ खेदमुपगतो राघवोऽब्रवीत्—'शान्तं पापम्,

उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः।
तीर्थोदकं च वह्निश्च नान्यतः शुद्धिमर्हतः॥' ४॥

ततः स सीतामाह—'देवि यजनसंभवे! प्रसीद। एष ते जीवितावधिः प्रवादः।

क्लिष्टो जनः किल जनैरनुरञ्जनीय-
स्तन्नो यदुक्तमशुभं च न तत्क्षमं ते।
नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्ध्नि स्थितिर्न चरणैरवताडनानि॥' ५॥

सीता प्रत्युवाच—'भवत्वार्यपुत्र! भवतु। एहि। प्रेक्षामहे तावत्ते चरितम्।'

अथ प्रस्थिताः सर्वेऽपि प्रतिरूपाणि निरूपयितुम्। तत्र चित्रितेषु प्रभूतेषु ललितेषु दृश्येषु प्रथमतो भगवतो भृशाश्वात्कौशिकमुपसंक्रान्तानि, तेन च ताटकावधे दाशरथेः प्रसादीकृतानि, ततश्च तत्प्रसूतिमुपस्थास्यन्ति जृम्भकास्त्राण्यवलोकितानि। ततश्चादृश्यत मिथिलावृत्तान्तः। घनश्यामः वपुःप्रकर्षाभिरामः हेलया शंकरशरासनावभङ्गाभिरामः स राम आलेख्यगतो जानक्या मुदमाततान। अग्रतश्च स्वपुरोहितेन गौतमेन शतानन्देन सहितो राजर्षिर्जनकः

स्वसंबन्धिनो वसिष्ठादीनचर्यन्नभिलिखित आसीत्। परतस्तत्कालकृतगोदानमङ्गलाश्चत्वारो भ्रातरो विवाहदीक्षिता अङ्किता अभूवन्। दृष्ट्वा च सीतया सहसोदितम्—'अहो! जानामि तस्मिन्नेव प्रदेशे तस्मिन्नेव काले वर्ते।' सीतोर्मिलामाण्डवीश्रुतकीर्तयश्च तत्रैव चित्रिता आसन्। प्रतिकृतिगतं भगवन्तं भार्गवं वीक्ष्य कम्पिता जनकतनूजा। अत्रानुजं स्वविक्रमं वर्णयितुं प्रस्तुतं समीक्ष्य विनयमाहात्म्योपपन्नो राघवः साक्षेपमुवाच—'अयि बहुतरं द्रष्टव्यम्। अन्यतो दर्शय।' तस्मिंश्च ततोऽयोध्यां दर्शितवति रामो सास्रममन्त्रयत—'स्मरामि, हन्त! स्मरामि,

जीवत्सु तातपादेषु नूतने दारसंग्रहे।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः॥' ६॥

अथ मन्थरावृत्तान्तं चित्रार्पितमनुस्मारयत्यजन्मनि महीपतिः सत्वरमन्यतो दर्शयन्शशंस—'देवि वैदेहि!

इङ्गुदीपादपः सोऽयं शृङ्गिवेरपुरे पुरा।
निषादपतिना यत्र स्निग्धेनाऽऽसीत्समागमः॥' ७॥

विहसता लक्ष्मणेनाऽऽत्मनि लपितम्—'अये! मध्यमाम्बावृत्तान्तमन्तरितमार्येण।'

ततः प्रसन्नपुण्यसलिलां भगवतीं भागीरथीमवलोक्य रघुकुलपतिरलपत्—'रघुकुलदेवते! नमस्ते। सर्वदाऽपि मत्पूर्वजप्रसादपरा सा त्वमम्ब! स्नुषायामरुन्धतीव सीतायां शिवानुध्याना भव।'

ततो विन्ध्याटवीचित्राणि प्रक्रान्तानि। विन्ध्याटवीमुखविराधवृत्तान्तोत्तरमविरलानोकहनिवहानिरन्तरास्निग्धनील-

परिसरारण्यपरिणद्धगोदावरीमुखकन्दरो जनस्थानमध्यगो गिरिः प्रस्रवणो नामादृश्यत। तत्पश्यता सर्वजनाभिरामेण रामेण भणितम्—

'स्मरसि सुतनु ! तस्मिन्पर्वते लक्ष्मणेन
प्रतिविहितसपर्यासुस्थयोस्तान्यहानि ?
स्मरसि सरसनीरां तत्र गोदावरीं वा
स्मरसि च तदुपान्तेष्वावयोर्वर्तनानि ? ८ ॥

किं च,

किमपि किमपि मन्दं मन्दमासत्तियोगा-
दविरलितकपोलं जल्पतोरक्रमेण ।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णो
रविदितगतयामा रात्रिरेव व्यरंसीत् ॥' ९ ॥

ततश्च पञ्चवट्यां संवृत्तः शूर्पणखाविवादः प्रतिच्छन्दितोऽभूत् । वर्तमानमिव प्रतिभान्तं जनस्थानवृत्तान्तं वीक्ष्य सौमित्रिर्व्याजहार—

'अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना
तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि ।
जनस्थाने शून्ये विकलकरणैरार्यचरितै-
रपि ग्रावा रोदित्यपि च दलति वज्रस्य हृदयम् ॥'१०॥

तच्छ्रुत्वा रघुपतिः सास्रोऽभवत् ।

ततो लघुराघवः 'अथैतन्मन्वन्तरपुराणस्य तत्र भवतस्तात-जटायुषश्चरित्रविक्रमोदाहरणम्' इत्यभिधायाग्रजस्य चित्त-माचिक्षेप। तदाऽपि रामं जटायुषः स्मरणेन शोकाभिभूतं विलोक्य स उवाच—'अयमसौ जनस्थानस्य पश्चिमतः

कुञ्जवान्नाम पर्वतो दनुकबन्धाधिष्ठितो दण्डकारण्यभागः। तदिदममुष्य परिसरे मतङ्गाश्रमपदम्। तत्र श्रमणी नाम सिद्धा शवरतापसी। तदेतत्पम्पाभिधानं पद्मसरः। अयमार्यो मारुतिः। अयं ककुभसुरभिर्माल्यवान्नाम शैलः।'

अथ प्रत्यावृत्तजानकीविप्रयोगः पङ्क्तिरथसूनुर्न ततोऽग्रे द्रष्टुमक्षमत। जनकनन्दिन्यभूद्विश्रान्ता। अतः सर्वेऽपि विश्रमितुमायन्।

प्रतिकृतीर्दर्शं दर्शं प्रत्युत्पन्नदोहला सेलासुता ललाप—'आर्यपुत्र! जाने "पुनरपि प्रसन्नगम्भीरासु वनराजिषु विहृत्य पवित्रनिर्मलशिशिरसलिलां भगवतीं भागीरथीमवगाहिष्ये" इति।'

रामेण मन्त्रितम्—'वत्स लक्ष्मण! अचिरादेव संपादनीयो दौहृद इति संप्रत्येव गुरुभिः संदिष्टम्। तदस्खलितसंपातं रथमुपस्थापय।'

सीतयोक्तम्—'आर्यपुत्र! युष्माभिरप्यागन्तव्यम्।'

राम उवाच—'अतिकाठिनहृदये! एतदपि वक्तव्यम्।'

प्रयाते लक्ष्मणे सीतारामौ वातायनोपकण्ठे विश्रमितुं संविष्टौ। तत्रैव खेदनिद्रयाऽपहृता सीता भर्तुर्बाहुमुपधानीकृत्य सुष्वाप। सोऽपि तस्याः स्पर्शे स्पर्शे परिमूढेन्द्रियगणः किमप्यनिर्वचनीयं सुखं निर्विशन्विभावितवान्—

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः॥'११॥

अत्रान्तरे पौरजानपदेष्वपसर्पः प्रहितः शुद्धान्तचारी दुर्मुखो भवनं प्रविवेश। तदानीमेव 'हा आर्यपुत्र ! कुत्रासि?' इत्युत्स्वप्नायितं सीतया। स्वप्नोद्विग्नायास्तस्या अङ्गं सस्नेहं परामृशन्राम आत्मानं बहु मेने।

तत उपसृत्य कृतप्रणामो दुर्मुखो 'ब्रूहि यदुपलब्धम्' इति राघवेणानुयुक्तः प्रत्युवाच—'उपस्तुवन्ति देवं पौरजानपदा यथा "विस्मारिता वयं महाराजं दशरथं रामदेवेन" इति।'

काकुत्स्थोऽचकथत्—'अर्थवाद एवैषः। दोषं तु मे कथंचित्कथय येन प्रतिविधीयते।'

तदनु स चरः सास्रं महाराजस्य कर्णे निभृतं किमप्यभिदधे। तच्छ्रुत्वैवातितीव्रवाग्वज्राभिहतो राघवः सपदि मोहमवाप। आश्वस्य च विलपितुमुपचक्रमे—

हा हा धिक्परगृहवासदूषणं यद्वैदेह्याः प्रशमितमद्भुतैरुपायैः।
एतत्तत्पुनरपि दैवदुर्विपाकादालर्कं विषमिव सर्वतः प्रसक्तम्॥ १२॥

तत्किमद्य मन्दभाग्यः करोमि?' ततो विमृश्य सकरुणं बभाण—'अथवा किमेतत्,

सतां केनापि कार्येण लोकस्याऽऽराधनं परम्।
तत्प्रतीतं हि तातेन मां च प्राणांश्च मुञ्चता॥ १३॥

संप्रत्येव च भगवता वसिष्ठेन संदिष्टम्। अपि च,

यत्सावित्रैर्दीपितं भूमिपालैर्लोकश्रेष्ठैः साधुचित्रं चरित्रम्।
मत्संबन्धात्कश्मला किंवदन्ती स्याच्चेदस्मिन् हन्त! धिङ्मामधन्यम्॥ १४॥

हा देवि यजनसंभवे! हा स्वजन्मानुग्रहपवित्रितवसुन्धरे! हा मुनिजनकनन्दिनि! हा पावकवसिष्ठारुन्धतीप्रशस्तशीलशालिनि! हा राममयजीविते! हा महारण्य-

वासप्रियसखि ! हा तातप्रिये ! हा स्तोकवादिनि !

त्वया जगन्ति पुण्यानि त्वय्यपुण्या जनोक्तयः ।
नाथवन्तस्त्वया लोकास्त्वमनाथा विपत्स्यसे ॥' १५ ॥

एवं बहुविधं विलप्य रामो दुर्मुखस्य कर्णेऽनुजमाऽऽख्यातुं किमप्यकथयत्। तन्निशम्य चरोऽचकथत्—'हा! कथमग्निपरिशुद्धाया गर्भस्थितपवित्रसन्तानाया देव्या दुर्जनवचनादिदं व्यवसितं देवेन ।'

रामोऽभाषत—'शान्तं पापम्! शान्तं पापम्! दुर्जना नाम पौरजानपदाः ।

इक्ष्वाकुवंशोऽभिमतः प्रजानां जातं च दैवाद्वचनीयबीजम् ।
यच्चाद्भुतं कर्म विशुद्धिकाले प्रत्येतु कस्तद्यदि दूरवृत्तम् ॥ १६ ॥

तद्गच्छ ।'

एवं भर्त्रा भर्त्सितश्चरो निभृतं निष्क्रान्तः ।

अथाध्यवसितसीतानिर्वासनो रामश्चिचिन्त—'हा कष्टम्। अतिबीभत्सकर्मा नृशंसोऽस्मि संवृत्तः ।

शैशवात्प्रभृति पोषितां प्रियां सौहृदादपृथगाश्रयामिमाम् ।
छद्मना परिददामि मृत्यवे सौनिके गृहशकुन्तिकामिव ॥ १७ ॥

तत्किमस्पृश्यः पातकी देवीं दूषयामि ।' एवमात्मानमधिक्षिपन्स सीतायाः शिरः समुन्नमय्य बाहुमाकर्षन्पुनरवोचत्-

'अपूर्वकर्मचण्डालमयि मुग्धे! विमुञ्च माम् ।
श्रितासि चन्दनभ्रान्त्या दुर्विपाकं विषद्रुमम् ॥' १८ ॥

अथोत्थाय 'हन्त! हन्त! संप्रति विपर्यस्तो जीवलोकः। अद्यावसितं जीवितप्रयोजनं रामस्य । शून्यमधुना जीर्णारण्यं जगत्। अशरणोऽस्मि। का गतिः?' इत्येवं बहुशः

प्रलप्य स भार्यायाः पादौ शिरसि कृत्वा 'अयं पश्चिमस्ते रामशिरसि पादपङ्कजस्पर्शः' इत्युदीर्य च प्ररुदितः।

अथो 'अब्रह्मण्यम् ! अब्रह्मण्यम् !' इत्युद्घोषं निशम्य तन्निमित्तान्वेषी भरताग्रजो विज्ञातवान्। यथा—

'ऋषीणामुग्रतपसां यमुनातीरवासिनाम्।
लवणत्रासितः स्तोमस्त्रातारं त्वामुपस्थितः ॥' १६ ॥

तच्छ्रुत्वा 'कथमद्यापि राक्षसत्रासः' इति सक्रोधमभिदधन्स शत्रुघ्नं माधुरस्य कुम्भीनसीकुमारस्योन्मूलनाय प्रेषयामास। ततो भगवतीं वसुन्धरां स्वां दुहितरमवेक्षितुमभ्यर्थ्य रुदंस्ततो निश्चक्राम।

निद्रिता सीताऽपि 'हा सौम्य आर्यपुत्र ! कुत्रासि ?' इति वदन्ती सहसोत्थाय 'हा धिक् ! हा धिक् ! दुःस्वप्नरणरणकविप्रलब्धाऽऽर्यपुत्रशून्यमिवाऽऽत्मानं पश्यामि' इत्यभिदधौ। ततो विलोक्य 'हा धिक् ! हा धिक् ! एकाकिनीं प्रसुप्तां मामुज्झित्वा कुत्र गतो नाथः ? भवतु, अस्मै कोपिष्यामि यदि तं प्रेक्षमाणाऽऽत्मनः प्रभविष्यामि' इत्याकलयन्ती सा तदैवाऽऽगतेन दुर्मुखेनाभ्यर्थिता। यथा 'देवि ! कुमारलक्ष्मणो विज्ञापयति "सज्जो रथः। तदारोहतु देवी" इति।'

सीताऽपि रथमारुह्य वनाय प्रतस्थे।

[ २ ]

अथो समतीता द्वादश हायनाः। अथ कदाचिद्वनदेवी कामप्यध्वगवेषामात्रेयीनाम्नीं तापसीं फलकुसुमगर्भेण पल्लवार्घ्येणोपस्थायापृच्छत्—'आर्ये आत्रेयि ! कुत इहाऽऽगम्यते ? किंप्रयोजनो दण्डकारण्योपवनप्रचारः ?'

सा प्रतिजगाद—

'अस्मिन्नगस्त्यप्रमुखाः प्रदेशे भूयांस उद्गीथविदो वसन्ति ।
तेभ्योऽधिगन्तुं निगमान्तविद्यां वाल्मीकिपार्श्वादिह पर्यटामि ॥'२०॥

ततो विस्मिता वनदेवताऽनुयुयुजे—'यदा तावदन्येऽपि मुनयस्तमेव हि पुराणब्रह्मवादिनं प्राचेतसमृषिं ब्रह्मपारायणायोपासते, तत्कोऽयमार्यायाः प्रवासः ?'

तया गदितम्—'तस्मिन् हि महानध्ययनप्रत्यूह इत्येष दीर्घप्रवासोऽङ्गीकृतः । तस्य भगवतः केनापि देवताविशेषेण सर्वप्रकाराद्भुतं स्तन्यत्यागमात्रके वयसि वर्तमानं दारकद्वयमुपनीतम् । तत्खलु न केवलं तस्य, अपि तु तिरश्चामप्यन्तःकरणानि तत्त्वान्युपस्नेहयति ।

तच्छ्रुत्वा विस्मिततरा वनदेवताऽवदत्—'अपि तयोर्नामसंज्ञानमस्ति ?'

आत्रेयी प्रत्यवदत्—'तयैव किल देवतया तयोः कुशलवाविति नामनी च प्रभावश्चाऽऽख्यातः । यथा "तयोः किल सरहस्यानि जृम्भकास्त्राणि जन्मसिद्धानि" इति । तौ च भगवता वाल्मीकिना धात्रीकर्मतः परिगृह्य पोषितौ रक्षितौ च । निर्वृत्तचौलकर्मणोस्तयोस्त्रयीवर्जमितरास्तिस्रो विद्याः सावधानेन परिनिष्ठापिताः । तदनन्तरं भगवतैकादशे वर्षे क्षात्रेणकल्पेनोपनीय त्रयीविद्यामध्यापितौ । न त्वेताभ्यामतिदीप्तप्रज्ञाभ्यामस्मदादेः सहाध्ययनयोगोऽस्ति ।'

वनदेवतयोदितम्—'अयमध्ययनप्रत्यूहः ?

आत्रेय्या मन्त्रितम्—'अन्यश्च । अथ स ब्रह्मर्षिरेकदा माध्यंदिनसवनाय नदीं तमसामनुप्रपन्नः । तत्र युग्मचारिणोः

क्रौञ्चयोरेकं व्याधेन वध्यमानं ददर्श। आकस्मिकप्रत्यवभासां देवींवाचमानुष्टुभेन छन्दसा परिणतामभ्युदैरयत्।

"मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥" '२१॥

तदाकर्ण्याधिकाधिकं विस्मिता वनदेवता जगाद—'आम्नायादन्यत्र नूतनच्छन्दसामवतारः।'

आत्रेयी भूयः प्रारभत–'तेन हि पुनः समयेन तं भगवन्तमाविर्भूतशब्दप्रकाशमृषिमुपसंगम्य भगवान्भूतभावनः पद्मयोनिरवोचत् "ऋषे ! प्रबुद्धोऽसि वागात्मनि ब्रह्मणि। तद्ब्रूहि रामचरितम्। अव्याहतज्योतिरार्षं ते चक्षुः प्रतिभातु। आद्यः कविरसि।" इत्युक्त्वाऽन्तर्हितः। अथ स भगवान् प्राचेतसः प्रथमं मनुष्येषु शब्दब्रह्मणस्तादृशं विवर्तमितिहासं रामायणं प्रणिनाय। तस्मादेव हि ब्रवीमि तत्र महानध्ययनप्रत्यूह इति। संप्रत्यगस्त्याश्रमस्य पन्थानं ब्रूहि।'

वनदेवता निरदिशत्—'इतः पञ्चवटीमनुप्रविश्य गम्यतामनेन गोदावरीतीरेण।

अत्र सास्राऽऽत्रेय्युवाच—'अप्येतत्तपोवनम् ? अप्येषा पञ्चवटी ? अपि सरिदियं गोदावरी ? अप्ययं गिरिः प्रस्रवणः ? अपि जनस्थानवनदेवता त्वं वासन्ती ?'

वनदेवतयोदीरितम्—'तथैव तत्सर्वम्।'

अथाऽऽत्रेय्या प्रलपितम्—'हा वत्से जानकि !

स एष ते वल्लभशाखिवर्गः प्रासङ्गिकीनां विषयः कथानाम्।
त्वां नामशेषामपि दृश्यमानः प्रत्यक्षदृष्टामिव नः करोति॥ २२॥

वासन्त्या सभयं सीतादेव्या अत्याहितं पृष्टाऽऽत्रेयी

कथयामास—'न केवलमत्याहितम्। सापवादमपि।' ततः सा कर्णे किमप्यवर्णयत्। तन्निशम्य मूर्च्छिता वासन्ती। प्रत्यागत्य सा प्रपच्छ—'आर्ये आत्रेयि! अथ तस्मादरण्यात् परित्यज्य निवृत्ते लक्ष्मणे सीतायाः किं वृत्तमिति काचिदासीत्प्रवृत्तिः?'

'नहि, नहि' इति प्रतिवचोविक्लवा वासन्ती पुनः परिपप्रच्छ—'कष्टम्! आर्यारुन्धतीवसिष्ठाधिष्ठितेषु नः कुलेषु जीवन्तीषु च वृद्धासु राज्ञीषु कथमिदं जातम्?'

आत्रेय्याऽऽख्यातम्—'ऋष्यश्रृङ्गसत्रे गुरुजनस्तदासीत्। संप्रति परिसमाप्तं द्वादशवार्षिकं सत्रम्। ऋष्यश्रृङ्गेण च संपूज्य विसर्जिता गुरवः। ततो भगवत्यरुन्धती "नाहं वधूविरहितामयोध्यां गच्छामि" इत्याह। तदेव राममातृभिरनुमोदितम्। तदनुरोधाद्भगवतो वसिष्ठस्यापि श्रद्धा वाल्मीकिवनं गत्वा तत्र वत्स्यामः" इति।'

ततो वासन्त्या जिज्ञासितम्—'अथ स रामभद्रः किमाचारः?'

अत्राऽऽत्रेय्युवाच—'तेन राज्ञा राजक्रतुरश्वमेधः प्रक्रान्तः।'

वासन्ती निजगाद—'अहह धिक्! परिणीतमपि?'

इतराऽवदत्—'शान्तम्। नहि, नहि। हिरण्मयी सीताप्रतिकृतिर्गृहिणीकृता।'

वनदेवताऽवदत्—'हन्त भोः!

वज्रादपि कठोराणि मृदूनि कुसुमादपि।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हसि॥' २३॥

आत्रेय्या पुनः प्रक्रान्तम्—'विसृष्टश्च वामदेवानुमन्त्रितो

मेध्याश्वः। प्रक्लृप्ताश्च तस्य यथाशास्त्रं रक्षितारः। तेषामधिष्ठाता लक्ष्मणात्मजश्चन्द्रकेतुर्दत्तदिव्यास्त्रसंप्रदायश्चतुरङ्गसाधनान्वितोऽनुप्राहितः।'

अत्रापरा सहर्षकौतुकास्रमुदीरयामास—'कुमारलक्ष्मणस्यापि पुत्र इति मातः! जीवामि।'

तत इतरया भूय उपक्रान्तम्—'अत्रान्तरे ब्राह्मणेन मृतं पुत्रमुत्क्षिप्य राजद्वारे सोरस्ताडमब्रह्मण्यमुद्घोषितम्। ततः "न राजापचारमन्तरेण प्रजानामकालमृत्युः संचरति" इत्यात्मदोषं निरूपयति करुणामये रामभद्रे सहसैवाशरीरिणी वागुदचरत्—

"शम्बूको नाम वृषलः पृथिव्यां तप्यते तपः।
शीर्षच्छेद्यः स ते राम! तं हत्वा जीवय द्विजम्॥' २४॥

इत्युपश्रुत्य कृपाणपाणिः पुष्पकमधिरुह्य सर्वा दिशो विदिशश्च शूद्रतापसान्वेषणाय जगत्पतिः संचारं समारब्धवान्।

तच्छ्रुत्वा 'शम्बूको नामाधोमुखो धूमपः शूद्रोऽस्मिन्नेव जनस्थाने तपश्चरति। अपि नाम रामभद्रः पुनरिदं वनमलङ्कुर्यात्' इत्याशंसया हर्षनिर्भरा वासन्ती तापस्याऽऽमन्त्रिता तां विससर्ज।

अथाचिरेणैव सद्योद्यतखड्गः पुष्पकस्थो रामभद्रस्तत्र संप्राप्तः। ततोऽनिच्छन्नपि तपस्यति शम्बूके कथमपि कृपाणं विसृज्योवाच—'कृतं रामसदृशं कर्म। अपि जीवेत्स ब्राह्मणपुत्रः।'

दिव्याकृतिमापन्नः स शूद्रस्तथा तत्राऽऽविर्भूय रामं प्रणिपत्याऽऽवेदयत्—

'दत्ताभये त्वयि यमादपि दण्डधारे
संजीवितः शिशुरसौ मम चेयमृद्धिः ।
शम्बूक एष शिरसा चरणौ नतस्ते
सत्सङ्गजानि निधनान्यपि तारयन्ति ॥' २५ ॥

तद्वीक्ष्य प्रीतः काकुत्स्थोऽवदत्—'द्वयमपि प्रियं नः तदनुभूयतामुग्रस्य तपसः परिपाकः ।'

शम्बूकोऽकथयत्—'स्वामिन् ! युष्मत्प्रसादादेवैष महिमा किमत्र तपसा । अथवा महदुपकृतं तपसा । अन्यथा कथमयोध्यायाः योजनानां शतैर्दूरवर्तिन्यामुपगमो दण्डकायां वने वः ।

दण्डकाशब्दं श्रुत्वैव दाशरथिः सविस्मयं शशंस—'किं नाम दण्डकेयम् ?'

दिव्यजनेनाऽऽवेदितम्—'दण्डकैवैषा । अत्र किल पूर्वं निवसता देवेन

चतुर्दश सहस्राणि चतुर्दश च राक्षसाः ।
त्रयश्च दूषणखरत्रिमूर्धानो रणे हताः ॥ २६ ॥

येन सिद्धक्षेत्रेऽस्मिन्मादृशामपि जानपदानामकुतोभयः संचारः संवृत्तः ।'

अथ तं प्रदेशं प्रत्यभिज्ञातवान्रघुकुलकेतुरकथयत्—'न केवलं दण्डकैव, जनस्थानमपि !

पश्यामि च जनस्थानं भूतपूर्वखरालयम् ।
प्रत्यक्षानिव वृत्तान्तान्पूर्वाननुभवामि च ॥ २७ ॥

ततः सर्वतोऽवलोक्य सीतायाः स्मरन्सोऽचिन्तयत्—प्रियारामा हि वैदेह्यासीत् । एतानि नाम कान्ताराणि । किमतः परं भयानकं स्यात् ।'

अथ शम्बूको विविधानि हारीणि वन्यदृश्यानि दर्शयित्वा विमनायमानमश्रुपरिप्लुतनयनं राघवं पर्यवस्थापयितुमियेष, परमभूदत्र वितथप्रयत्नः। गुरुराघवः सबाष्पस्तम्भमभाषत—'भद्र! शिवास्ते पन्थानो देवयानाः। प्रलीयस्व पुण्येभ्यो लोकेभ्यः।'

तेन प्रत्युक्तम्—'यावत्पुराणब्रह्मर्षिमगस्त्यमभिवाद्य शाश्वतं पदमनुप्रविशामि।'

निर्गते तस्मिन्नेकाकी रामभद्रस्तांस्तान्प्रदेशान्विरुवन्मयूरान्गिरीन्मत्तहरिणानि वनस्थानि नीरन्ध्रनीपनिचुलानि सरित्तटानि, प्रस्रवणं गिरिं गोदावरीं नदीं च दर्शं दर्शं भृशं विक्लवो जातः। ततः पञ्चवटीं स्मरता तेन निध्यातम्—'अत्रैव सा पञ्चवटी यत्र निवासेन विविधविस्रम्भातिप्रसंगसाक्षिणः प्रदेशाः प्रियायाः प्रियसखी च वासन्ती नाम वनदेवता। किमिदमापतितमद्य रामस्य। संप्रति हि

चिरादुद्वेगारम्भी प्रसृत इव तीव्रो विषरसः<br>
कुतश्चित्संवेगात् प्रचल इव शल्यस्य शकलः।<br>
व्रणो रूढग्रन्थिः स्फुटित इव हृन्मर्मणि पुनः<br>
पुराभूतः शोको विकलयति मां नूतन इव ॥ २८ ॥

अथ पूर्वसुहृदो भूमिभागान्द्रष्टुं प्रवृत्तः निरूप्य स विभावितवान्—'अनवस्थितो भूतसंनिवेशः। तथाहि,

पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां<br>
विपर्यासं यातो घनविरलभावः क्षितिरुहाम्।<br>
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं<br>
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ॥' २९ ॥

ततः परिहरन्तमपि तं स्नेहाद्बलादाचकर्षेव पञ्चवटी। 'सीतया सहोषितामेनां तया विरहितोऽहं विलोकयामि वा, असंभाव्यैव वा गच्छामि' इति विचारपरोऽसावागतेन शम्बूकेनोक्तः—'जयतु देवः। भगवानगस्त्यो मत्तः श्रुतसंनिधानस्त्वामाह "परिकल्पितावरणमङ्गला प्रतीक्षते वत्सला लोपामुद्रा, सर्वे च महर्षयः। तदेहि संभावयास्मान्" ।' सोऽपि गुरुजनादेशानुरोधाच्छम्बूकेन सममगस्त्याश्रमपदमभिप्रतस्थे।

[ ३ ]

अथ तमसा नाम तटिनी मुरलां प्रपच्छ—'सखि ! किमसि संभ्रान्तेव ?'

मुरला प्रत्युवाच—'सखि प्रेषिताऽस्मि भगवतोऽगस्त्यस्य पत्न्या लोपामुद्रया सरिद्वरां गोदावरीमभिधातुम् । "जानास्येव यथा वधूपरित्यागात्प्रभृति

अनिर्भिन्नो गभीरत्वादन्तर्गूढघनव्यथः ।
पुटपाकप्रतीकाशो रामस्य करुणो रसः ॥ ३० ॥

तेन च तथाविधेष्टजनकष्टविनिपातजन्मना दीर्घशोकसंतानेन संप्रति परिक्षीणो रामभद्रः। तमवलोक्य कम्पितमिव कुसुमसमबन्धनं मे हृदयम्। अधुना च रामभद्रेण प्रतिनिवर्तमानेन नियतमेव पञ्चवटीवने वधूसहनिवासविस्रम्भसाक्षिणः प्रदेशा द्रष्टव्याः। तत्र च निसर्गधीरस्याप्येवंविधायामवस्थायामतिगम्भीराभोगशोकक्षोभसंवेगात्पदे पदे महाप्रमादानि शोकस्थानानि शङ्कनीयानि । तद्भगवति गोदावरि ! त्वया तत्र भवत्या सावधानया भवितव्यम्।

वीचीवातैः सीकरक्षोदशीतैराकर्षद्भिः पद्मकिञ्जल्कगन्धान् ।
मोहे मोहे रामभद्रस्य जीवं स्वैरं स्वैरं प्रेरितैस्तर्पयेति ॥' ३१ ॥

तमसयाऽभिहितम्—'उचितमेव दाक्षिण्यं स्नेहस्य । संजीवनोपायस्तु मूलत एव रामभद्रस्य संनिहितः । स चैवम् । अस्ति खलु वाल्मीकितपोवनोपकण्ठात्परित्यज्य निवृत्ते सति लक्ष्मणे सीता देवी प्राप्तप्रसववेदनमतिदुःख-संवेगादात्मानं गङ्गाप्रवाहे निक्षिप्तवती । तदैव तत्र दारकद्वयं प्रसूता भगवतीभ्यां पृथ्वीभागीरथीभ्यामप्युभाभ्यामभ्युपपन्ना रसातलं च नीता । स्तन्यत्यागात्परेण दारकद्वयं च तस्य प्राचेतसस्य महर्षेर्गङ्गादेव्या समर्पितं स्वयम् ।'

तच्छ्रुत्वा विस्मयमुपगता मुरलाऽलपत्—

'ईदृशानां विपाकोऽपि जायते परमाद्भुतः ।
यत्रोपकरणीभावमायात्येवंविधो जनः ॥' ३२ ॥

ततस्तमसया भूयोऽप्युपक्रान्तम्—'इदानीं तु शम्बूक-वृत्तान्तेनानेन संभावितजनस्थानं रामभद्रं सरयूमुखादुपश्रुत्य भगवती भागीरथी यदेव लोपामुद्रया स्नेहादाशङ्कितं तदेवा-भिशङ्क्य सीतासमेता केनचिदिव गृहाचारव्यपदेशेन गोदावरीमुपगता । तया च भगवत्याऽऽदिष्टा जानकी "वत्से देवयजनसंभवे सीते ! अद्य खल्वायुष्मतोः कुश-लवयोर्द्वादशस्य जन्मवत्सरस्य संख्यामङ्गलग्रन्थिरभिवर्तते । तदात्मनः पुराणश्वशुरमेतावतो मानवस्य राजर्षिवंशस्य प्रस-वितारं सवितारमपहतपाप्मानं देवं स्वहस्तापचितैः पुष्पै-रुपतिष्ठस्व । न त्वामवनिपृष्ठवर्तिनीमस्मत्प्रभावाद्वनदेवता अपि द्रक्ष्यन्ति किमुत मर्त्याः" इति । अहमप्याज्ञापिता

"तमसे! त्वयि प्रकृष्टप्रेमैव वधूर्जानकी। अतस्त्वमेवास्याः प्रत्यनन्तरी भव" इति। साहमधुना यथाऽऽदिष्टमनुतिष्ठामि।'

मुरलाऽपि वृत्तमिदं भगवत्यै लोपामुद्रायै निवेदयितुं प्रतस्थे। तमसा च गोदावरीह्रदान्निष्क्रम्यावनिपृष्ठमाश्रित्य पुष्पावचायव्यग्रया सीतया संगता।

अथ कुतश्चित् 'विमानराज! अत्रैव स्थीयताम्' इति वागुदचरत्। तच्छ्रुत्वा स्वरसंयोगेन 'नन्वार्यपुत्रेणैवैतद्व्याहृतम्' इति विज्ञाय जानकीससाध्वसोल्लासाऽजायत। तया निध्यातम्—'अहो! जलभरभरितमेघमन्थरस्तनितगम्भीरमांसलः कुतो नु भारतीनिर्घोषो भ्रियमाणकर्णविवरां मामपि मन्दभागिनीं झटित्युत्सुकापयति?'

तमसयोदितम्—'श्रूयते "तपस्यतः किल शूद्रस्य दण्डधारणार्थमैक्ष्वाको राजा दण्डकारण्यमागतः" इति।'

सीता प्रत्यवदत्—'दिष्ट्याऽपरिहीनधर्मः स राजा।' ततः सा समागतं रघुकुलप्रदीपं दूरादेव दृष्ट्वाऽभाषिष्ट—'दिष्ट्या कथं प्रभातचन्द्रमण्डलापाण्डरपरिक्षामदुर्बलेनाऽऽकारेण निजसौम्यगम्भीरानुभावमात्रप्रत्यभिज्ञेय एवाऽऽर्यपुत्रो भवति।' एवमुदीर्य सा तमसामाश्लिष्य मुमूर्च्छ। तया समाश्वासिता सा शृणोति स्म—'अनेन पञ्चवटीदर्शनेन,

अन्तर्लीनस्य दुःखाग्नेरद्योद्दामं ज्वलिष्यतः।
उत्पीड इव धूमस्य मोहः प्रागावृणोति माम्॥ ३२॥

हा प्रिये जानकि!'

तदाकर्ण्य जनकनन्दिनी जगाद—'हा धिक्! हा धिक्!

मन्दभागिनीं व्याहृत्याऽऽमीलितनेत्रनीलोत्पलो मूर्च्छित एव। भगवति तमसे ! परित्रायस्व परित्रायस्व !'

तया प्रत्युक्तम्—

'त्वमेव ननु कल्याणि ! संजीवय जगत्पतिम्।
प्रियस्पर्शो हि पाणिस्ते तत्रैष निरतो जनः॥' ३४॥

एवं प्रवर्तिता सास्रा विदेहसुता भूम्यां निपतितं भर्तारमभ्युपेता। तया स्पृश्यमानः स साह्लादमुच्छ्वसितः। स्पर्शसुखमनुभूतवान्स व्यभावयत्—

'स्पर्शः पुरा परिचितो नियतं स एव
संजीवनश्च मनसः परितोषणश्च।
संतापजः सपदि यः परिहृत्य मूर्च्छा-
मानन्दनेन जडतां पुनरातनोति॥' ३५॥

तत उपविश्य व्याजहार—'न खलु वत्सलया देव्याऽभ्युपपन्नोऽस्मि ? भवतु, पश्यामि।'

एवमुदीर्य मार्गयितुं प्रवृत्ते जानकीजानौ तमनुव्रता साऽब्रवीत्—'भगवति तमसे ! अपसराव तावत्। मां प्रेक्ष्यानभ्यनुज्ञातेन संनिधानेन राजाऽधिकं कोपिष्यति।'

तच्छङ्कामपनुदन्ती तमसा शशंस—'अयि वत्से ! भागीरथीप्रसादाद्वनदेवतानामप्यदृश्याऽसि संवृत्ता।'

सर्वतोऽवलोक्य तामलभमानो राघवः सनिर्वेदमुवाच—'हा प्रिये जानकि ! हा, न किं चिदत्र !!'

राघववधूरभाषत—'भगवति ! निष्कारणपरित्यागिनोऽप्येतस्य दर्शनेनैवंविधेन कीदृशी मे हृदयावस्था ?'

प्रियामपश्यन्सीतापतिरवदत्—'अथवा कुतः प्रियतमा।

नूनं संकल्पाभ्यासपाटवोपादान एष भ्रमो रामभद्रस्य।'

ततः 'अहो, महान्प्रमादः!

सीतादेव्याः स्वकरकलितैः सल्लकीपल्लवाग्रै-

रग्रे लोलः करिकलभको यः पुरा वर्धितोऽभूत्।'

इति कुतश्चिदुच्चरितं शब्दं श्रुत्वा सीतारामाभ्यां सकरुणौत्सुक्यमुक्तम्—किं तस्य ?'

अनन्तरमश्रूयत—

'वध्वा सार्धं पयसि विहरन्सोऽयमन्येन दर्पा-

दुद्दामेन द्विरदपतिना संनिपत्याभियुक्तः ॥' ३६ ॥

अथ पुरस्तादागता वासन्तिकाऽचकथत्—'देव! त्वर्यतां त्वर्यताम्। इतो जटायुशिखरस्य दक्षिणेन सीतातीर्थेन गोदावरीमवतीर्य संभावयतु देव्याः पुत्रकं देवः।'

अथ प्रस्थिताः सर्वेऽपि गोदावरीतीरं संप्राप्ताः। गजद्वयीं निरूप्य वासन्त्यवोचत्—'देव! मोदस्व विजयिना वधूद्वितीयेन देव्याः पुत्रकेण।'

तच्छ्रुत्वा हर्षपूरनिर्भरोजानकीजानिर्निजगाद—'हा देवि! दिष्ट्या वर्धसे।

येनोद्गच्छद्बिसकिसलयस्निग्धदन्ताङ्कुरेण

व्याकृष्टस्ते सुतनु लवलीपल्लवः कर्णमूलात्।

सोऽयं पुत्रस्तव मदमुचां वारणानां विजेता

यत्कल्याणं वयसि तरुणे भाजनं तस्य जातः॥' ३७॥

वासन्ती पुनरन्यतो निर्दिशन्त्यवोचत्—'इतोऽपि देवः पश्यतु,

अनुदिवसमवर्धयत् प्रिया ते यमचिरनिर्गतमुग्धलोलबर्हम् ।
मणिमुकुट इवोच्छिखः कदम्बे नदति स एष वधूसखः शिखण्डी ॥' ३८ ॥

भूयोऽपि प्रसन्नताप्रकर्षमनुभवन् काकुत्स्थोऽचकथत्—'मोदस्व तात ! वयमद्य वर्धामहे ।

अमिषु कृतपुटान्तर्मण्डलावृत्तिचक्षुः
प्रचलितचटुलभ्रूताण्डवैर्मण्डयन्त्या ।
करकिसलयतालैर्मुग्धया नर्त्यमानं
सुतमिव मनसा त्वां वत्सलेन स्मरामि ।। ३९ ॥

हन्त ! तिर्यञ्चोऽपि परिचयमनुरुन्धन्ते,

कतिपयकुसुमोद्गमः कदम्बः प्रियतमया परिवर्धितोऽयमासीत् ।
स्मरति गिरिमयूर एष देव्याः स्वजन इवात्र यतः प्रमोदमेति ॥' ४० ॥

ततः सा वनदेवता सीतापतिं शिलातल उपवेश्याशंसीत्—

'नीरन्ध्रबालकदलीवनमध्यवर्ति
कान्तासखस्य शयनीयशिलातलं ते ।
अत्र स्थिता तृणमदाद्वनगोचरेभ्यः
सीता ततो हरिणकैर्न विमुच्यते स्म ॥' ४१ ॥

रामस्तु 'इदमशक्यं द्रष्टुम्' इत्यभिधायान्यतो रुदन्नुपाविशत् ।

अथ भूयसीं विक्लवतामवापिता सीताऽवदत्—'सखि वासन्ति ! किं त्वया कृतमार्यपुत्रस्य चैतद्दर्शयन्त्या । हा धिक् ! हा धिक् ! स एवार्यपुत्रः । तदेव पञ्चवटीवनम् । सैव प्रियसखी वासन्तिका ! त एव विविधविस्रम्भसाक्षिणो गोदावरीकाननोद्देशाः । त एव जातनिर्विशेषा मृगपक्षिणः पादपाश्च । मम पुनर्मन्दभाग्याया दृश्यमानमपि सर्वमेवै-

तन्नास्ति । ईदृशो जीवलोकस्य परिणामः संवृत्तः।'

ततः क्षितिपतिमाक्षेप्तुं वासन्ती पप्रच्छ—'महाराज ! अपि कुशलं कुमारलक्ष्मणस्य ?' यदा च सीताचिन्ताविक्लवो रामभद्रस्तन्नाश्रौषीत्तदा सा भूयोऽप्यप्राक्षीत्—'महाराज ! ननु कुशलं पृच्छामि कुमारलक्ष्मणस्येति ?'

काकुत्स्थोऽकल्पयत्—'अये, महाराजेति निष्प्रणयमामन्त्रणपदम्। सौमित्रिमात्रके बाष्पस्खलिताक्षरः कुशलप्रश्नः। तथा मन्ये विदितसीतावृत्तान्तेयमिति।' एवं विचिन्त्य स प्रतिजगाद—'आः, कुशलं कुमारलक्ष्मणस्य।'

ततो रुदन्ती वासन्ती मन्त्रयामास—'अयि देव ! किं परं दारुणः खल्वसि ?'

तत्कर्णे कुर्वती सीताऽचकथत्—'सखि वासन्ति ! किं त्वमेवंवादिनी भवसि ? पूजार्हः सर्वस्याऽऽर्यपुत्रो विशेषतो मम प्रियसख्याः।'

वासन्ती परमब्रवीत्—

'त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव शान्तमथवा किमतः परेण ॥' ४२ ॥

इति वदन्ती सा मोहमुपगता। रामभद्रेण पर्यवस्थापिता सा पुनरनुयुयुजे—'तत्किमिदमकार्यमनुष्ठितं देवेन ?'

रामोऽमन्त्रयत—'लोको न मृष्यतीति।'

वासन्त्यवदत्—'कस्य हेतोः ?'

रामेण भणितम्—'स एव जानाति किमपि।'

वनदेवतयोदीरितम्—

'अयि कठोर ! यशः किल ते प्रियं किमयशो ननु घोरमतः परम् ।
किमभवद्विपिने हरिणीदृशः कथय नाथ ! कथं बत मन्यसे ?' ४३ ॥

उपालम्भं तमुपश्रुत्य वैदेह्या व्याहृतम्—'सखि वासन्ति ! त्वमेव दारुणा कठोरा च । यैवं प्रलपन्तं प्रलापयसि ।'

तमसयाऽभिहितम्—'प्रणय एवं व्याहरति शोकश्च ।'

प्रजारञ्जनः प्रजानाथोऽचकथत्–'सखि ! किमत्र मन्तव्यम् ?

त्रस्तैकहायनकुरङ्गविलोलदृष्टे-
स्तस्याः परिस्फुरितगर्भभरालसायाः ।
ज्योत्स्नामयीव मृदुबालमृणालकल्पा
क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता ॥' ४४ ॥

जनकजनितया जगदे—'आर्यपुत्र ! धराम्येषा धरामि ।'

ततो दशास्यशमनः 'हा प्रिये जानकि ! क्वासि' इत्याक्रन्द्य प्रमुक्तकण्ठं प्ररुदितः ।

रघुकुलवध्वा वैक्लव्यमपनुनुत्सुस्तमसा मन्त्रयाञ्चक्रे—'वत्से ! सांप्रतिकमेवैतत् । कर्तव्यानि खलु दुःखितैर्दुःखनिर्धारणानि ।

पूरोत्पीडे तटाकस्य परीवाहः प्रतिक्रिया ।
शोकक्षोभे च हृदयं प्रलापैरवधार्यते ॥' ४५ ॥

सीताविरहकातरस्वान्तस्तत्पतिर्व्यलपत्–'कष्टं भोः ! कष्टम् ।

दलति हृदयं शोकोद्वेगाद्द्विधा न तु भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥' ४६ ॥

वासन्त्याऽतिक्रान्ते धैर्यमवलम्बितुमुक्तस्तथाविधः शोकसंतप्तो रघुकुलरत्नं रामोऽमन्त्रयत—'किमुच्यते धैर्यमिति ?

देव्या शून्यस्य जगतो द्वादशः परिवत्सरः ।
प्रणष्टमिव नामापि न च रामो न जीवति ॥' ४७ ॥

भर्तुर्विलपितं संश्रुत्य सीता 'एवमपि मन्दभागिन्यहं या पुनरायासकारिण्यार्यपुत्रस्य' इत्यात्मानं धिगकरोत् ।

दारुणेन दुःखेनाविरलज्वालमन्तर्ज्वलन् जानकीनाथः पुनरपि मोहमुपगतः । स्वकमुद्दिश्य सकलजीवलोकमाङ्गलिकजन्मलाभस्य रामस्य वारंवारं संशयितजीवितदारुणं दशापरिणामं वीक्ष्याऽऽत्मानं मन्दभागिनीं समर्थयमाना भूसुताऽपि विचेतना जाता । तां समाश्वासयन्ती तमसाऽभिदधे—'ते पाणिस्पर्शौ रामभद्रस्य जीवनोपायः ।'

अथ सा सपद्यभ्युपेत्य वल्लभं हृदि ललाटे च पस्पर्श । तेन प्रत्यापन्नचेतनो रघुकुलकेतुरभ्यधात्—

'आलिम्पन्नमृतमयैरिव प्रलेपैरन्तर्वा बहिरपि वा शरीरधातून् ।
संस्पर्शः पुनरपि जीवयन्नकस्मादानन्दादपरमिवाऽऽदधाति मोहम् ॥' ४८ ॥

अनन्तरं स आनन्दनिमीलिताक्ष एवोवाच—'सखि वासन्ति ! दिष्ट्या वर्धसे । पुनरपि प्राप्ता जानकी । पश्य नन्वियं पुरत एव ।'

आत्मानं विप्रलब्धां मन्यमाना वासन्त्यधिचिक्षेप—'अयि देव रामभद्र ! किमिति मर्मच्छेददारुणैरतिप्रलापैः प्रियसखीविपत्तिदुःखदग्धामपि मां पुनः पुनर्मन्दभाग्यां दहसि ।'

दशरथजनुषा भाषितम्—'सखि ! कुतः प्रलापः,

गृहीतो यः पूर्वं परिणयविधौ कङ्कणधरः
सुधासूतेः पादैरमृतशिशिरैर्यः परिचितः ।
स एवायं तस्यास्तदितरकरौपम्यसुभगो
मया लब्धः पाणिर्ललितलवलीकन्दलनिभः ॥' ४९ ॥

इत्युक्त्वा सोऽगृह्णात्करम् । तदानीं सीता ससंभ्रमं हस्तमाक्षिप्यापससर्प ।

एवं वृत्ते दाशरथिरशंसीत्—'धिक् प्रमादः,

करपल्लवः स तस्याः सहसैव जडो जडात्परिभ्रष्टः ।
परिकम्पिनः प्रकम्पी करान्मम स्विद्यतः स्विद्यन् ॥' ५० ॥

ततः स सर्वतोऽवलोक्य विललाप—'हा कथं नास्त्येव ! नन्वकरुणे वैदेहि !'

सीतया तर्कितम्—'अकरुणाऽस्मि यैवंविधं त्वां पश्यन्त्येव जीवामि ।'

काकुत्स्थः पुनराचक्रन्द—'क्वासि प्रिये ! देवि ! प्रसीद प्रसीद । न मामेवंविधं परित्युक्तमर्हसि ।'

दशरथवधूरवादीत्—'अय्यार्यपुत्र ! विप्रतीपमिव ।'

रामस्य क्रन्दनमुपश्रुत्य वासन्त्यवादीत्—'देव ! प्रसीद प्रसीद ! स्वेनैव लोकोत्तरेण धैर्येण संस्तम्भयातिभूमिं गतमात्मानम् । कुत्र मे प्रियसखी ?'

तदेवानुमन्यमानेन रामेणाभिहितम्—'व्यक्तं नास्त्येव । कथमन्यथा वासन्त्यपि न पश्येत् । अपि खलु स्वप्न एष स्यात् । न चास्मि सुप्तः । कुतो रामस्य निद्रा । सर्वथाऽपि स एवैष भगवाननेकवारपरिकल्पितो विप्रलम्भः पुनः पुनरनुबध्नाति माम् ।'

सीतोदचारयत्—'मयैव दारुणया विप्रलब्ध आर्यपुत्रः।'

आमिमन्त्रयिषुणा रामेणामन्त्रितम्—'सखि वासन्ति ! दुःखायैव सुहृदामिदानीं रामदर्शनम् । कियच्चिरं त्वां रोदयिष्यामि । तदनुजानीहि मां गमनाय ।'

तन्निशम्य सोद्वेगमोहं तमसामाश्लिष्य सीता बभाषे—'हा भगवति तमसे ! गच्छतीदानीमार्यपुत्रः । किं करोमि ?'

इत्युक्त्वा च सा मुमूर्च्छ । तमसा तां समाश्वासयन्त्युदगिरत्—'वत्से जानकि ! समाश्वसिहि, समाश्वसिहि । विधिस्तवानुकूलो भविष्यति । तदायुष्मतोः कुशलवयोर्वर्षवृद्धिमङ्गलानि संपादयितुं भागीरथीपदान्तिकमेव गच्छावः।'

जानकी निजगाद—'भगवति ! प्रसीद क्षणमात्रमपि दुर्लभदर्शनं पश्यामि ।'

राक्षसकुलप्रलयधूमकेतुरलापीत्—'अस्ति चेदानीमश्वमेधसहधर्मचारिणी मे ।'

सपत्नीमाशङ्कमानया सीतयोदितम्—'आर्यपुत्र ! का ?'

वासन्त्या 'परिणीतमपि किम्' इत्यनुयुक्तः पार्थिवः प्रत्यभिधत्त—'नहि, नहि । हिरण्मयी सीताप्रतिकृतिः ।'

तच्छ्रुत्वा सीता सोच्छ्वाससास्रमुवाच—'आर्यपुत्र ! इदानीमसि त्वम् । अहो ! उत्खातितमिदानीं मे परित्यागशल्यमार्यपुत्रेण ।'

धराधवोऽनुबबन्ध—'तत्रापि तावद्बाष्पदिग्धं चक्षुर्विनोदयामि ।'

अथ प्रसन्ना पार्थिवपत्नी व्याजहार—'धन्या खलु सा

यैवमार्यपुत्रेण बहु मन्यते । यैवमार्यपुत्रं विनोदयन्त्याशाबन्धनं खलु जाता जीवलोकस्य ।'

ततस्तमसा तां सस्मितस्नेहार्द्रं परिष्वज्याभाषिष्ट—'अयि वत्से ! एवमात्मा स्तूयते ।'

अथो 'परिहासितास्मि भगवत्या' इति सलज्जया सीतयाऽभिहिता तमसा तां गृहीत्वा गन्तुं व्यवसिता । वैदेही तु स्ववल्लभचरणकमलौ नमस्कृत्य विसंज्ञा बभूव, परं पर्यवस्थापिता तमसया । शम्बूकशासिताऽपि विमानराजमारुह्य प्रतस्थे ।

[ ४ ]

अथ कदाचित्पुपोष भूयिष्ठसन्निधापितातिथिजनं समधिकारम्भरमणीयतां भगवतो वाल्मीकेराश्रमपदम् । तपोधनाभ्यागमसंभवामनध्यायमुदमभिननन्दुर्वटुकाः । ऋष्यशृङ्गाश्रमादरुन्धतीं पुरस्कृत्य महाराज दशरथस्य दारानधिष्ठाय भगवान्वसिष्ठस्तत्र संप्राप्तः । तस्मिन्नेव वासरे वासिष्ठात्पूर्वं राजर्षिर्जनकोऽपि तत्र समागतोऽभूत् । स खलु देव्याः सीतायास्तादृशं दैवदुर्विपाकमुपश्रुत्य वैखानसः समवर्तत । अतिक्रान्ता अस्य कतिपये संवत्सराश्चन्द्रद्वीपतपोवने तपस्तप्यमानस्य । संप्रति स प्रियसुहृदं भगवन्तं प्राचेतसं द्रष्टुं समागमत् ।

वनवासित्वेऽपि व्यवहारविदा भगवता वसिष्ठेन देव्याः कौशल्यायाः सकाशं भगवत्यरुन्धती 'स्वयमुपेत्य वैदेहो द्रष्टव्यः' इति वक्तुं प्रहिता । प्राचेतसवसिष्ठावुपास्यासौ राजर्षिराश्रमपदस्य बहिर्वृक्षमूलमधिष्ठाय सीतागतं

चिन्तयति स्म—'कष्टम्! एवं नाम जरया, दुःखेन च दुरासदेन, भूयस्तपोभिः क्षीणक्षीणो नाद्यापि मे दग्धदेहः पतति। "अन्धतामिस्रा ह्यसूर्या नाम ते लोकाः। प्रेत्य तेभ्यः प्रतिविधीयन्ते य आत्मघातिनः" इत्येवमृषयो मन्यन्ते। अयि देवयजनसंभवे! ईदृशस्ते निर्माणभागः परिणतः, येन लज्जया स्वच्छन्दमप्याक्रन्दितुं न शक्यते। हा पुत्रि!

अनियतरुदितस्मितं विराजत्कतिपयकोमलदन्तकुड्मलाग्रम्।
वदनकमलकं शिशोः स्मरामि स्खलदसमञ्जसमञ्जुजल्पितं ते' ॥ ११॥

अथ गृष्टिर्नाम काञ्चुकीयो भगवतीमरुन्धतीं महादेवीं कौसल्यां च जनकमनुप्रापयामास। दशरथजायां निरूप्य वैदेहोऽतर्कयत्—'हा हा! कथमयं महाराजस्य दशरथस्य धर्मदाराः प्रियसखी मे कौसल्या। क एतां प्रत्येति "सैवेयम्" इति नाम।

य एव मे जनः पूर्वमासीन्मूर्तो महोत्सवः।
क्षते क्षारमिवासह्यं जातं तस्यैव दर्शनम् ॥' १२ ॥

कौशल्याऽपि पदे पदेऽनध्यवसिताऽरुन्धत्या काञ्चुकीयेन चाऽऽत्मानं संस्तभ्य भगवतो वसिष्ठस्याऽऽदेशमनुरोद्धुमुक्ताऽऽचख्यौ—'ईदृशे काले मिथिलाधिपो मया द्रष्टव्य इति सममेव सर्वदुःखान्यवतरन्ति। तस्मान्न शक्नोम्युद्वर्तमानमूलबन्धनं हृदयं पर्यवस्थापयितुम्। कथं नु खलु वत्साया मे वध्वा वनगतायास्तस्याः पितू राजर्षेर्मुखं दर्शयामः।'

प्रत्युद्गम्य भगवतीमरुन्धतीमभिवाद्य जनकः कञ्चुकिनमपृच्छत्—'आर्यगृष्टे! अप्यनामयमस्याः प्रजापालकस्य मातुः?'

तच्छ्रुत्वा 'निरवशेषमतिनिष्ठुरमुपालब्धाः स्मः' इति समालोचयन्नृष्यश्र्ङ्गो बभाण—'राजर्षे ! अनेनैव मन्युना चिर-परित्यक्तरामभद्रदर्शनां नार्हसि दुःखयितुमतिदुःखितां देवीम् । रामभद्रस्यापि दैवदुर्योगः कोऽपि । यत्किल समन्ततः प्रवृत्त-बीभत्सकिंवदन्तीकाः पौराः । न चाग्निशुद्धिमनल्पकाः प्रतिय-न्तीति दारुणमनुष्ठितं देवेन ।

तदाकर्ण्य रोषमुपगतः सीरध्वजोऽभ्यधात्—'आः ! को-ऽयमग्निर्नामस्मत्प्रसूतिपरिशोधने । कष्टमेवंवादिना जनेन रामभद्रपरिभूता अपि पुनः परिभूयामहे ।'

अरुन्धती निश्वस्य शशंस—'एवमेतत् । अग्निरग्निरिति वत्सां प्रति लघून्यत्तराणि । सीतेत्येव पर्याप्तम् । सा ननु वन्द्यैव जगताम् ।'

कौसल्याऽपि 'अहो समुन्मूलयन्तीव वेदनाः' इति वदन्त्यमूर्च्छत् । तद्वीक्ष्य वैदेहः परिदिदेव—'हन्त ! सर्वथा नृशंसोऽस्मि । यच्चिरस्य दृष्टान्प्रियसुहृदः प्रियदारानस्निग्ध इव पश्यामि ।

स संबन्धी श्लाघ्यः प्रियसुहृदसौ तच्च हृदयं
स चाऽऽनन्दः साक्षादपि च निखिलं जीवितफलम् ।
शरीरं जीवो वा यदधिकमतोऽन्यत् प्रियतरं
महाराजः श्रीमान् किमिव मम नाऽसीद्दशरथः ?' २३ ॥

हा प्रियसखि !' एवमभिधाय स तां कमण्डलूदकेन न्यषिञ्चत् ।

आश्वस्ता कौसल्या स्वप्रलपितमन्वबध्नात्—'हा वत्से जानकि ! कुत्रासि ? एहि मे पुनरपि जाते ! उद्योत-

योत्सङ्गम्। सर्वदा महाराज एवं भणति "एषा रघुकुलमहत्तराणां वधूरस्माकं तु जनकसुता दुहितैव। जाते जानकि! किं करोमि? दृढवज्रलेपप्रतिबन्धनिश्चलं हतजीवितं मां मन्दभागिनीं न परित्यजति।'

तां समाश्वासयन्त्याऽरुन्धत्याऽभिदधे—'बाष्पविश्रमोऽप्यन्तरेषु कर्तव्य एव। अन्यच्च किं न स्मरसि यदवोचदृष्यशृङ्गाश्रमे युष्माकं कुलगुरुः "भवितव्यं तथेत्युपजातमेव। किं तु कल्याणोदर्कं भविष्यति" इति।'

शोकावेगेन तदप्रतियन्ती महादेव्युवाच—'कुतोऽतिक्रान्तमनोरथाया ममैतत्।'

स्वभर्तृवचस्स्वप्रत्ययममर्षयन्ती वसिष्ठपत्नी सावेगमवोचत्—'तत्किं मन्यसे राजपत्नि! मृषोद्यं तदिति। न हीदं क्षत्रिये! मन्तव्यम्।'

अथोदचरत्कुतश्चित्कोलाहलरवः। शिष्टानध्याय इत्युद्धतं खेलन्तो वटवस्तत्र समापतिताः। सुलभसौख्यं बालत्वं विमृशन्ती कौसल्या कुमाराणामेकमवलोक्य व्यचारयत्—'अहो, क एष रामभद्रस्य कौमारलक्ष्मीसावष्टम्भैर्मुग्धललितैरङ्गैर्दारकोऽस्माकं लोचने शीतलयति?'

वटुं तं विलोकयन्त्याः सहर्षोत्कण्ठाया अरुन्धत्या अपि मनस्येवमभूत्—'इदं नाम भागीरथीनिवेदितं रहस्यकर्णामृतम्। न त्वेवं विद्मः कतरोऽयमायुष्मतोः कुशलवयोरिति।'

काञ्चुकीयोऽवदत्—'नूनं क्षत्रियब्रह्मचारी दारकोऽयमिति मन्ये।'

जनको निजगाद—'एवमेतत्। अस्य हि,

चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्तोकपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम्।
मौर्व्या मेखलया नियन्त्रितमधो वासश्च माञ्जिष्ठकं
पाणौ कार्मुकमक्षसूत्रवलयं दण्डोऽपरः पैप्पलः ॥' २४ ॥

अथ समुपजातकौतूहलो जनको गृष्टिमादिशत्—'आर्ये! भगवन्तं वाल्मीकिमेव गत्वा पृच्छ "कुतस्त्योऽयम्" इति। इमं च दारकं ब्रूहि "केऽप्येते प्रवयसस्त्वां दिदृक्षवः" इति।'

ततः सविनयनिशमितगृष्टिवचनः स कुमारोऽपि विसर्जिताशेषसदृशदारकस्ततोमुखमपसृतः। तं चिरं निर्वर्ण्य सीरध्वजेनाभिदधे—'अहो! परिलघुरयस्कान्तशकलोऽयोधातुमिव संमोहस्थिरमपि मनो मे हरति।'

असौ बालक उपसृत्य सविनयमुवाच—'एष वो लवस्य शिरसा प्रणामपर्यायः।'

अथ प्रीतिजनितजडिमोपहिताः सर्वेऽपि लवमाशशासिरे। अरुन्धती तमुत्सङ्गे गृहीत्वा स्वाङ्केन सममेव स्वकं मनोरथमपि पूर्णमाकलयमास। ततस्तं स्वक्रोडमारोप्य कौसल्या ललाप—'अहो न केवलं देहबन्धेन स्वरेण च रामभद्रमनुहरति। ननु कठोरकमलगर्भपक्ष्मलशरीरस्पर्शोऽपि तादृश एव।' अनन्तरं सा तच्चिबुकमुन्नमय्य निरूप्य सबाष्पाकूतमवदत्—'राजर्षे! किं न पश्यसि? निपुणं निरूप्यमाणो वत्साया मे वध्वा मुखचन्द्रेणापि संवदत्येव।'

वैदेहेनाभिहितम्—

वत्सायाश्च रघूद्वहस्य च शिशावस्मिन्नभिव्यज्यते
संवृत्तिः प्रतिबिम्बितेव निखिला सैवाऽऽकृतिः सा द्युतिः।
सा वाणी विनयः स एव सहजः पुण्यानुभावोऽप्यसौ
हा हा देवि ! किमुत्पथैर्मम मनः पारिप्लवं धावति ॥'२१॥

अथ दशरथजायाऽनुयुयुजे—'तात ! अस्ति ते माता। स्मरति वा तातम् ।'

लव उवाच—'नहि ।'

सा पुनः पप्रच्छ—'ततः कस्य त्वम् ?'

दारको जगाद—'भगवतः सुगृहीतनामधेयस्य वाल्मीकेः।'

कौसल्याऽऽनुबबन्ध—'अयि जात ! कथयितव्यं कथय।'

स प्रत्युवाच—'एतावदेव जानामि ।'

अथाश्रूयत रवः—"भो भोः सैनिकाः ! एष खलु कुमारश्चन्द्रकेतुराज्ञापयति—न केनचिदाश्रमाभ्यर्णभूमय आक्रमितव्याः—इति ।"

चन्द्रकेतुकीर्तनं संश्रुत्य प्रीतो जनकः, अरुन्धतीकौसल्ये च।

दारकोऽपृच्छत्—'आर्य ! क एष चन्द्रकेतुर्नाम ?'

जनको न्यगदत्—'जानासि रामलक्ष्मणौ दाशरथी ?'

बटुरुवाच—'एतावेव रामायणकथापुरुषौ ।'

सीरध्वजोऽभिदधौ—'तस्य लक्ष्मणस्यायमात्मजश्चन्द्रकेतुः ।'

लवेन लपितम्—'ऊर्मिलायाः पुत्रस्तर्हि मैथिलस्य राजर्षेर्दौहित्रः ।'

विचिन्त्य वैदेहोऽवदत्—'यदि त्वमीदृशः कथायाम-

भिज्ञस्तद्ब्रूहि तावत्पश्यामस्तेषां दशरथस्य पुत्राणां कियन्ति नामधेयान्यपत्यानि केषु दारेषु प्रसूतानि ?'

दारकोऽचकथत्—'नायं कथाभागोऽस्माभिरन्येन वा श्रुतपूर्वः ।'

सीतापिताऽब्रवीत्—'किं न प्रणीतः कविना ?'

पटुर्बटुरुवाच—'प्रणीतः, न प्रकाशितः। तस्यैव कोऽप्येकदेशः प्रबन्धान्तरेण रसवानभिनेयार्थः कृतः । तं च स्वहस्तलिखितं मुनिर्भगवान्व्यसृजद्भगवतो भरतस्य तौर्यत्रिकसूत्रधारस्याप्सरोभिः प्रयोजयितुम् । महती पुनस्तस्मिन् भगवतो वाल्मीकेरास्था। यतः केषांचिदन्तेवासिनां हस्तेन तत्पुस्तकं भरताश्रमं प्रति प्रेषितम्। तेषामनुयात्रिकश्चापपाणिः प्रमादच्छेदनार्थमस्मद्भ्राता प्रेषितः ।'

अथ कौसल्याऽप्राक्षीत्—भ्राताऽपि तेऽस्ति ?'

लवो ललाप—'अस्त्यार्यः कुशो नाम ।'

कौसल्या पुनः पप्रच्छ—'ज्येष्ठ इति भणितं भवति ।'

दारकोऽकथयत्—'एवमेतत्। प्रसवानुक्रमेण स किल ज्यायान्। यमावावाम् ।'

ततः सीताजनकेन कथाप्रपञ्चस्य पर्यन्तं पृष्टः स प्रत्यभाषत—'अलीकपौरापवादोद्विग्नेन राज्ञा निर्वासितां देवीं देवयजनसंभवां सीतामासन्नप्रसववेदनामेकाकिनीमरण्ये लक्ष्मणः परित्यज्य प्रतिनिवृत्त इति ।'

अथ निर्भरगर्भभरां पृथिवीतनूजामेकाकिनीं स्मृत्वा पुनरप्यदभ्रेण मन्युनाऽऽक्रान्तौ तस्याः श्वश्रूपितरौ ।

ततः कुमारेण कौसल्याजनकपरिचयं पृष्ट्वाऽरुधन्ती तयो-

नाम्नी निर्दिदेश। तच्छ्रुत्वा लवस्तौ सबहुमानखेदकौतुकम-वालोकयत्।

अथ तत्राऽऽपतिताः केचन संभ्रान्ता वटवो लवमुद्दिश्योचुः—'कुमार! कुमार! अश्वोऽश्व इति कोऽपि भूतविशेषो जनपदेष्वनुश्रूयते, सोऽयमधुनाऽस्माभिः स्वयं प्रत्यक्षीकृतः।'

तच्छ्रुतवांल्लवोऽवदत्—'अश्वोऽश्व इति नाम पशुसमाम्नाये सांग्रामिके च पठ्यते। तद्ब्रूत कीदृशः?'

वटवोऽवदन्—'अये श्रूयताम्!

'पश्चात्पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं
दीर्घग्रीवः स भवति खुरास्तस्य चत्वार एव।
शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रान्
किं व्याख्यानैर्व्रजति स पुनर्दूरमेह्येहि यामः॥' २६॥

इत्युक्त्वा ते तस्याजिने हस्तयोश्चाऽऽचकृषुः। सोऽपि जनकादीनुद्दिश्य 'आर्याः! पश्यत। एभिर्नीतोऽस्मि' इति सकौतुकोपरोधविनयमभिधाय त्वरितं निष्क्रान्तः।

इदानीं मुनिसकाशात्प्रत्यागतः काञ्चुकीय उवाच—'भगवान्वाल्मीकिराह "ज्ञातव्यमेतदवसरे भवद्भिः" इति।'

अथोपेत्याऽऽजानेयं वीक्ष्य लव उवाच—'दृष्टमवगतं च नूनमाश्वमेधिकोऽयमश्वः। पठितमेव हि युष्माभिरपि तत्काण्डम्। किं न पश्यथ प्रत्येकं शतसंख्याः कवचिनो दण्डिनो निषङ्गिणश्च रक्षितारः। तत्प्रायमेवान्यदपि दृश्यते। यदि च विप्रत्ययस्तत्पृच्छथ।'

वटवः ऊचुः—'भो भोः ! किंप्रयोजनोऽयमश्वः परिवृतः पर्यटति ?'

इदानीमेव तैः सर्वैरप्युद्धुष्यमाणमश्रावि—

' योऽयमश्वः पताकेयमथवा वीरघोषणा ।
सप्तलोकैकवीरस्य दशकण्ठकुलद्विषः ॥' १७ ॥

तन्निशम्य लवः सावलेपमिवावोचत्—'अहो संदीपनान्यक्षराणि ।' पुनः स उद्घोषयितॄनुद्दिश्य सधीरमुवाच—'भो भोः ! तत्किमक्षत्रिया पृथिवी यदेवमुद्घोष्यते ?'

'रे रे ! महाराजं प्रति कुतः क्षत्रियाः' इति प्रतिवचः श्रुत्वा विवृद्धमन्युर्लवोऽलापीत्—'धिग्जाल्मान् !

यदि नो सन्ति सन्त्येव केयमद्य विभीषिका ।
किमुक्तैरेभिरधुना तां पताकां हरामि वः ॥ १८ ॥

हे वटवः परिवृत्य लोष्टैरभिघ्नन्त । उपनयतैनमश्वम् । एष रोहितानां मध्येचरो भवतु ।'

अथ कश्चित्पुरुषोऽभ्युपेत्य सामर्षावलेपमभाषत—'धिक् चपल ! किमुक्तवानसि ? तीक्ष्णतरा ह्यायुधश्रेण्यः शिशोरपि दृप्तां वाचं न सहन्ते । राजपुत्रश्चन्द्रकेतुर्दुर्दान्तः सोऽप्यपूर्वारण्यदर्शनाक्षिप्तहृदयो न यावदायाति तावत्त्वरितमनेन तरुगहनेनापसर्पत ।'

भर्त्सनाभीता वटवोऽप्यवोचन्—'कुमार ! कृतं कृतमश्वेन। तर्जयन्ति विस्फारितशरासनाः कुमारमायुधीयश्रेण्यः । दूरे चाऽऽश्रमपदमितः । तदेहि । हरिणप्लुतैः पलायामहे ।'

लवस्तु शस्त्राणि विस्फुरन्त्यवलोक्य शरासनमारोपितमौर्वीकं चकार ।

[ ५ ]

अथो लवस्याश्वमेधतुरंगमरक्षकैः साकं श्रुतमात्रमेव रोमहर्षजनकं महज्जन्यमजनि। स एकाक्येव निशिततरविशिखखरवर्षणैः सकलसैन्यमण्डलं व्याकुलीचकार। अपूर्वारण्यदर्शनव्यासक्तश्चन्द्रकेतुरपि चारैरायोधनोदन्तमुपश्रुत्य धनुष्पाणिः साद्भुतहर्षसंभ्रमः सुमन्त्रनियन्त्रितेन स्यन्दनेन समरस्थलीं संप्राप्तः। स लवेन विधीयमानं नाराचधारासंपातं निशाम्य चकितचकितमुवाच—'आर्य सुमन्त्र! अयं वीरपोतोऽसहाय एव चमूनामुपरि कार्मुकेण शरतुषारं किरति। आश्चर्यम्!

मुनिजनशिशुरेकः सर्वतः सैन्यकाये
　　नव इव रघुवंशस्याप्रसिद्धप्ररोहः।
दलितकरिकपोलग्रन्थिटङ्कारघोर-
　　ज्वलितशरसहस्रः कौतुकं मे करोति ॥ ९६ ॥

मम त्वेकमुद्दिश्य भूयसामारम्भ इति हृदयमपत्रपते।'

सुमन्त्रेण मन्त्रितम्—'वत्स! एभिः समस्तैरपि नालमस्य, किं पुनर्व्यस्तैः?'

चन्द्रकेतुनोक्तम्—'आर्य! त्वर्यताम्, त्वर्यताम्। अनेन हि महानाश्रितजनप्रमारोऽस्माकमारब्धः।' ततोऽग्रतः पश्यन् स सविस्मयलज्जासंभ्रममुवाच—'हन्त धिक्! अपावृत्तान्येव सर्वतः सैन्यानि मम।'

सुमन्त्रः रथवेगं निरूप्यावदत्—आयुष्मन्! एष ते वाग्विषयीभूतः स वीरः।'

चन्द्रकेतुराह्वयत्—

'भो भो लव ! महाबाहो ! किमेभिस्तव सैनिकैः ।
एषोऽहमेहि मामेव तेजस्तेजसि शाम्यतु ॥' ६० ॥

ततः धीरोद्धतपराक्रमः सावलेपो लवः परावृत्यावदत्—'साधु राजपुत्र ! साधु । सत्यमैक्ष्वाकः खल्वसि । तदहं परागत एवास्मि ।'

तदैव स भूयोऽपि समुत्थितं महान्तं कोलाहलं श्रुत्वा सावष्टम्भं परावृत्य निरूप्य चोवाच—'कथमिदानीं भग्ना अपि पुनः प्रतिनिवृत्ताः पृष्ठानुसारिणः पर्यवष्टम्भयन्ति मां चमूपतयः । धिग्जाल्मान् ।'

एवमभिधाय तं परिक्रामन्तं विलोक्य चन्द्रकेतुरचकथत्—'भो भोः कुमार !

अत्यद्भुतादपि गुणातिशयात् प्रियो मे
तस्मात्सखा त्वमसि यन्मम तत्तवैव ।
तत्किं निजे परिजने कदनं करोषि
नन्वेष दर्पनिकषस्तव चन्द्रकेतुः ॥' ६१ ॥

लवस्तु सांग्रामिकैः मुहुर्मुहुर्मुक्तं क्ष्वेडितं श्रावं श्रावं चण्डतां गतोऽभ्यधात्—'भवतु, कालहरणप्रतिषेधाय जृम्भकास्त्रेण तावत्सैन्यानि संस्तम्भयामि ।'

अथोल्लोलान्सैन्यघोषानकस्मादेव प्रशान्तान्वीक्ष्य विस्मितौ चन्द्रकेतुसुमन्त्रौ । 'नियतं जृम्भकास्त्रमामन्त्रितं लवेन' इति सैन्यावस्थयोभाभ्यामुन्नीतम् ।

सुमन्त्रोऽमन्त्रयत–'कुतः पुनरस्य जृम्भकाणामागमः स्यात्?'
सौमित्रिसूनुरवदत्—'भगवतः प्राचेतसादिति मन्यामहे । यद्यपि,

कुशाश्वतनया ह्येते कृशाश्वात्कौशिकं गताः ।
अथ तत्संप्रदायेन रामभद्रे स्थिता इति ॥ ६२ ॥

एवमस्ति तथापि 'अपरेऽपि प्रचीयमानसत्त्वप्रकाशाः स्वयं सर्वे मन्त्रदृशः पश्यन्ति ।'

अथ परागतश्चन्द्रकेतुं प्रतिवीरः । आलोकनमात्रेणोभयोः समुत्पन्नोऽन्योन्यानुरागः ।

लवं निर्वर्ण्य सुमन्त्रः सास्रमात्मन्यचिन्तयत्—'हृदय! किमन्यथा परिप्लवसे ?

मनोरथस्य यद्बीजं तद्दैवेनाऽऽदितो हृतम् ।
लतायां पूर्वलूनायां प्रसवस्योद्भवः कुतः ?' ६३ ॥

प्रतिवीरं पादचारमवलोक्य चन्द्रकेतुः स्यन्दनादवतरीतुं व्यवसितः सुमन्त्रेण तन्निमित्तं परिपृष्टः प्रतिबभाण—'एकस्तावदयं वीरपुरुषः पूजितो भवति । अपि च खल्वार्य ! क्षत्रधर्मः परिपालितो भवति । न रथिनः पादचारमभियुञ्जन्तीति शास्त्रविदः परिभाषन्ते ।

चन्द्रकेतुं रथादवतरन्तं वीक्ष्य लवोऽवोचत—'अतीव नाम शोभसे रथ एव । कृतं कृतमत्यादरेण ।'

तथोक्तश्चन्द्रकेतुः प्रत्युवाच—'तर्हि महाभागोऽप्यन्यं रथमलङ्करोतु ।'

लवेनालप्यत—'को विचारः स्वेषूपकरणेषु । किं त्वरण्यसदो वयमनभ्यस्तरथचर्याः ।

सुमन्त्रेण भणितम्—'जानासि वत्स ! दर्पसौजन्ययोर्यदाचरितम् । यदि पुनस्त्वामीदृशमैक्ष्वाको राजा रामभद्रः पश्येत्तदा स्नेहेन हृदयमभिष्यन्देत ।'

लवः प्रत्युवाच—'आर्य ! सुजनः स राजर्षिः श्रूयते ।' ततः स सलज्जमिवोवाच—

'वयमपि न खल्वेवंप्रायाः क्रतुप्रतिघातिनः
क इव न गुणैस्तं राजानं जनो बहु मन्यते ।
तदपि खलु मे स व्याहारस्तुरङ्गमरक्षिणां
विकृतिमखिलक्षत्राक्षेपप्रचण्डतयाऽकरोत् ॥' ६४ ॥

अथ स्मितं विधाय चन्द्रकेतुर्व्याजहार—'किं नु भवतस्तातप्रतापोत्कर्षेऽप्यमर्षः ?'

प्रतिवीरोऽवदत्—'अस्त्विहामर्षो मा भूद्वा । अन्यदेतत् पृच्छामि "दान्तं हि राजानं राघवमनुशुश्रुमः । स किल नाऽऽत्मना दृप्यति नाप्यस्य प्रजा वा दृप्ता जायन्ते । तत्किं मनुष्यास्तस्य राक्षसीं वाचमुदीरयन्ति ।" अथापि पृच्छामि "किं व्यवस्थितविषयः क्षात्रधर्मः" इति ?'

ततः सुमन्त्रेण भणितम्—'नैव खलु जानासि देवमैक्ष्वाकम् ।

'सैनिकानां प्रमाथेन सत्यमोजायितं त्वया ।
जामदग्न्यस्य दमने न हि निर्बन्धमर्हसि ॥' ६६ ॥

अत्र लवः सहासमलपत्—'आर्य ! "जामदग्न्यस्य दमनः स राजा" इति कोऽयमुच्चैर्वादः ।

सिद्धं ह्येतद्वाचि वीर्यं द्विजानां बाह्वोर्वीर्यं यत्तु तत्क्षत्रियाणाम् ।
शस्त्रग्राही ब्राह्मणो जामदग्न्यस्तस्मिन्दान्ते का स्तुतिस्तस्य राज्ञः ? ६७ ॥

को हि रघुपतेश्चरितं महिमानं च न जानाति ? यदि नाम किंचिदस्ति वक्तव्यम् । अथवा शान्तम् ।

वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु किं वर्ण्यते
सुन्दस्त्रीमथनेऽप्यकुण्ठयशसो लोके महान्तो हि ते।
यानि त्रीण्यपराङ्मुखान्यपि पदान्यासन्खरायोधने
यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः ॥' ६८॥

तदाकर्ण्य चन्द्रकेतुः प्रस्फुरितकोपो लवमुच्चुक्रोश—आः, तातापवादिन्! भिन्नमर्याद! अति हि नाम प्रगल्भसे।'

आश्रमकुमारेणोक्तम्–'अये! मय्येव भ्रुकुटीमुखः संवृत्तः।'

अनन्तरमुभावपि विमर्दक्षमां भूमिमवतीर्णौ।

[ ६ ]

अथ परस्परबद्धस्पर्धयोर्विकर्तनकुलकुमारयोः प्रतिमानतां विक्रमस्य गतयोस्तदा तदालोकनकुतूहलागतविद्याधराश्चर्यकारणं रणं प्रवृत्तम्। जातक्षोभेन चन्द्रकेतुना प्रयुक्तमप्रतिरूपमाग्नेयमस्त्रम्। तेन हि नवकिंशुकद्युतिसविभ्रमः शिखी शरसंपाततां गत सर्वदिक्संपातप्रचण्ड आकाशं दुर्दर्शतरलतडिच्छटाकडारमपरमिव झटिति चकार। ततः कुमारलवप्रयुक्तवारुणास्त्रप्रभावेणाविरलप्रवृत्तवारिधारासंपातैः प्रशान्तमेव पावकास्त्रम्। अथ प्रलयवातोत्क्षोभगम्भीरगुलगुलायमानमेघमेदुरितान्धकारनीरन्ध्रमिव भूतं विपद्यमानं विलोक्योर्मिलासूनुना वायव्यमस्त्रमीरितम्। तेन हि,

विद्याकल्पेन मरुता मेघानां भूयसामपि।
ब्रह्मणीव विवर्तानां क्वापि प्रविलयः कृतः॥ ६९॥

अथ शम्बूकवधात्प्रतिनिवृत्तो रघुपतिः ससंभ्रमोत्क्षिप्तकरभ्रमदुत्तरीयाञ्चलो दूरत एव मधुरस्निग्धवचनप्रतिषिद्धव्यापारस्तयोरन्तरे विमानवरमवतारयामास। दिनकरकुल-

चन्द्रेण चन्द्रकेतुना प्रणतः स भास्करवंशवर्धनस्तं सरभसमुत्थाप्य सस्नेहास्नं दृढं परिष्वज्य चानामयमन्वयुङ्क्त।

लक्ष्मणसूनुराचष्ट—'कुशलमत्यद्भुतप्रियवयस्यलाभाभ्युदयेन। तद्विज्ञापयामि मामिव विशेषेण स्निग्धेन चक्षुषा पश्यत्वमुं वीरमनरालसाहसं तातः।'

लवं निरूप्य जातोल्लासेन मनुवंशकेतुना कथितम्—'दिष्ट्याऽतिगम्भीरमधुरकल्याणाकृतिरयं वयस्यो वत्सस्य।

त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः
क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोशस्य गुप्त्यै।
सामर्थ्यानामिव समुदयः संचयो वा गुणाना-
माविर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः॥' ७० ॥

एकपद एव दुःखविश्रान्तिमनुभवन्स निध्यातवान्—

'व्यतिपजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः॥' ७१ ॥

रामं वीक्ष्य 'अहो पुण्यानुभावदर्शनोऽयं महापुरुषः' इति विभावयँल्लवोऽपि वयस्यभावमुपगतं प्रतिभटमागन्तुकगतं पप्रच्छ—'चन्द्रकेतो! क एते ?'

स प्रत्युदाजहार—'प्रियवयस्य! ननु ज्येष्ठतातपादाः।'

लवः सोल्लासमलपत्—'कथं रघुनाथ एव। दिष्ट्या सुप्रभातमद्य यदयं देवो दृष्टः।' ततः 'चन्द्रकेतुना प्रियवयस्येत्युक्तमतो ममापि धर्मतस्तादृश एव' इति स सविनयं निर्वर्ण्याब्रवीत्—'तात! प्राचेतसान्तेवासी लवोऽभिवादयते।'

इति श्रुत्वा स्नेहनिर्भरमना इलापालः 'आयुष्मन् ! एह्येहि' इत्यालपंस्तमपरिश्लथमालिलिङ्ग ।

ऐक्ष्वाकस्य तादृक्तं स्नेहं वीक्ष्य समन्दाक्षो लवो व्यजिज्ञपत्—'मृष्यन्तां त्विदानीं लवस्य बालिशतां तातपादाः।'

भूपतिरवादीत्—'किमपराद्धं वत्सेन ?'

चन्द्रकेतुरकीर्तयत्—'अश्वानुयात्रिकेभ्यस्तातप्रतापाविष्करणमुपश्रुत्य वीरायितमनेन ।'

रामेण भणितम्—'नन्वयमलङ्कारः क्षत्रियस्य । न तेजस्तेजस्वीप्रसृतमपरेषां विषहते ।'

चन्द्रकेतुर्जगाद—'अमर्षोऽप्यस्यैव शोभते महावीरस्य। पश्यन्तु हि तातपादाः । प्रियवयस्यनियुक्तेन जृम्भकास्त्रेण विक्रम्य स्तम्भितानि सर्वसैन्यानि ।'

अथ विकर्तनकुलकेतुर्लवं तमस्त्रमुपसंहर्तुमादिदेश । सोऽपि तत्क्षणं ध्यानेनास्त्रं प्रशमितवान् ।

हर्षरसनिर्भरो दाशरथिरवोचत्—'सरहस्यप्रयोगसंहारजृम्भकास्त्राणि दिष्ट्या वत्सस्यापि संपद्यन्ते। इमानि च नियतं सांप्रदायिकानि। कुमारस्य पुनः कुतः संप्रदायः ?'

लवो लपति स्म—'स्वतः प्रकाशान्यावयोरस्त्राणि ।'

किंचिद्विचिन्त्य रामेण भणितम्—'किं न संभाव्यते ? प्रकृष्टपुण्योपादानकः कोऽपि महिमा स्यात्। द्विवचनं तु कथम् ?'

लवः प्रत्यलपत्—'भ्रातरावावां यमौ ।'

दाशरथि पर्यपृच्छत्—'स तर्हि द्वितीयः क ?'

अथ नरेन्द्रसैन्यैः समं लवस्या ऽऽयोधनवार्तामुपश्रुत्य

सक्रोधहर्षधैर्यं धनुरास्फालयन् कुशस्तत्र संप्राप्तः। तमवलोक्य रघुकुलललामः 'वत्स! कोऽयं मेचकच्छविर्वालः?' इति लवं पप्रच्छ। स प्रत्यभाषत—'अयमसौ मम ज्यायानार्यः कुशो नाम भरताश्रमात्प्रतिनिवृत्तः।'

कौसल्यासूनुः सकौतुकमुवाच—'तर्हि वत्स! इत एवैतमाह्वयाऽऽयुष्मन्तम्।'

एवमुक्तः लवो ज्येष्ठभ्रातरमानेतुं प्रस्थितः। प्रत्युद्गम्याभिवादितवान्स ज्येष्ठेन पृष्टः—'नन्वायुष्मन्! किमियं वार्ता युद्धं युद्धमिति?'

कनिष्ठेन भणितम्—'यत्किंचिदेतत्। आर्यस्तु दृप्तं भावमुत्सृज्य विनयेन वर्तताम्। यदत्र स रामायणकथानायको ब्रह्मकोशस्य गोप्ता रघुनन्दनः स्थितः।'

ज्येष्ठोऽभाषिष्ट—'आशंसनीयपुण्यदर्शनः स महात्मा। किंतु स कथमस्माभिरुपगन्तव्य इति न संप्रधारयामि।'

लवोऽवदत्—'यथैव गुरुस्तथोपसदनेन। यतो हि स स्निह्यत्यावयोरुत्कण्ठते च युष्मत्संनिकर्षस्य। अन्यच्चात्युदात्तः सुजनश्चन्द्रकेतुरौर्मिलेयः प्रियवयस्येति सख्येन मामुपतिष्ठते। तेन तत्संबन्धेन धर्मतात एवायं राजर्षिः।'

'संप्रत्यवचनीयो राजन्येऽपि प्रश्रयः' इत्युक्त्वा कुशो दाशरथेरभ्याशमेत्य तमभ्यवादयत। रामोऽप्याशीःशंसन पुरस्सरं तं परिष्वज्यामृतस्रोतसेव सिक्तः परमां निर्वृतिमवाप।

ललाटंतपे तपति घर्मांशौ लवप्रस्तावं प्रतिपद्य सालवृक्षच्छायायां कृतासनपरिग्रहे रघुपतौ सर्वे तमभितो यथोचितमुपविष्टाः। कुमारयुगलं निरूपयन्राम एवं मनस्यकरोत्—

'अहो प्रश्रययोगेऽपि गतिस्थित्यासनादयः ।
साम्राज्यशंसिनो भावाः कुशस्य च लवस्य च ॥ ७२ ॥

भूयिष्ठं च रघुकुलकौमारमनयोः पश्यामि,

कठोरपारावतकण्ठमेचकं वपुर्वृषस्कन्धसुबन्धुरांसयोः ।
प्रसन्नसिंहस्तिमितं च वीक्षितं ध्वनिश्च माङ्गल्यमृदङ्गमांसलः ॥' ७३ ॥

ततो निपुणं निरूपयन्नवोचत्—'अये ! न केवलमस्मद्वंश-संवादिन्याकृतिः,

अपि जनकसुतायास्तच्च तच्चानुरूपम्
स्फुटमिह शिशुयुग्मे नैपुणोन्नेयमस्ति ।
ननु पुनरिव तन्मे गोचरीभूतमक्ष्णो-
रभिनवशतपत्रश्रीमदास्यं प्रियायाः ॥' ७४ ॥

समनन्तरं विमृशतस्तस्य मनस्यभूत्—'तदेतत्प्राचेतसा-ऽध्युषितमरण्यं यत्र किल देवी परित्यक्ता । इयं चानयोरा-कृतिर्वयोऽनुभावश्च । यत्स्वतः प्रकाशान्यस्त्राणीति च । तत्रापि स्मरामि खलु तदपि चित्रदर्शनप्रासङ्गिकं शस्त्राभ्यनुज्ञातं प्रवृद्धं स्यात् । न ह्यसम्प्रदायिकान्यस्त्राणि पूर्वेषामपि शुश्रुमः । अयं विस्मयसंप्लवमानसुखदुःखातिशयो हृदयस्य मे वि-प्रलम्भः । यमाविति च भूयिष्ठमात्मसंवादः । जीवद्धया-पत्यचिह्नो हि देव्या गर्भिणीभाव आसीत् ।'

एवं विविधं विकल्पयन् सास्रनेत्रो रामः प्रकाशमुवाच—'वत्सौ ! रामायणं रामायणमिति श्रूयते भगवतो वाल्मीकेः सरस्वतीनिष्यन्दः प्रशस्तिरादित्यवंशस्य । तत्कौतूहलेन यत्किंचिच्छ्रोतुमिच्छामि ।'

ततः सीतारामयोः प्रणयातिशयमधिकृत्य कुशोदीरितं

पद्यद्वयं श्रुत्वैव समुद्बोधितसीतास्मृती रामोऽतिदारुण-हृदयमर्मोद्घातबाधितो विललाप। अथ यावत्स पद्यमेकं पुनराकर्ण्य भूयोऽपि शोकाभिभूतस्तिष्ठति तावत् 'वसिष्ठो वाल्मीकिर्जनको दशरथमहिष्यश्च शिशुकलहमाकर्ण्याऽऽश्रमादागच्छन्ति। सीतावियोगपरिदुर्बलस्य रामस्यानुभावमात्रैकगम्यां शरीरश्रियं दूरादवलोक्य विधुरा मातरो जनकश्च प्रमोहमुपगताः' इति भाषितं कर्णकुहरमापतितम्। श्रुत्वैव च 'हा! अत्र मातरो गुरुजनाश्चात्रैव। कष्टं खल्वेते द्रष्टव्याः' इति सशोकविस्मितो रामोऽन्ये च तान्संभावयितुं तत्र प्रस्थिताः।

[ ७ ]

संनिधापितः खलु स्वप्रभावेन भगवता वाल्मीकिना सब्रह्मक्षत्रपौरजानपदाः प्रजाः सह रघुकुलेनाऽऽहूय कृत्स्न एव सदेवासुरतिर्यङ्निकायः सचराचरो भूतग्रामः। लक्ष्मणोऽपि काकुत्स्थकुलकमलदिवाकरेणाऽऽदिष्टो गङ्गातीरमातोद्यस्थानमुपगम्य मर्त्यामर्त्यस्य भूतग्रामस्य समुचितस्थानसंनिवेशं विदधे।

ततः स्थितेषु रङ्गप्राश्निकेषु कुमारचन्द्रकेतुसमां प्रतिपत्तिं लम्भितयोश्च कुशलवयोर्दाशरथिरुपविश्य प्रयोगं प्रस्तोतुं समादिदेश।

अथ सूत्रधारः प्रविश्य व्यजिज्ञपत्—'भगवान्भूतार्थवादी प्राचेतसः स्थावरजङ्गमं जगदाज्ञापयति "यदिदमस्माभिरार्षेण चक्षुषा समुद्वीक्ष्य पावनं वचनामृतं करुणाद्भुतरसं च किंचिदुपनिबद्धम्। तत्र काव्यगौरवादवधातव्यम्" इति।'

तस्मिन्नेव क्षणान्तरे 'हा आर्यपुत्र ! कुमार लक्ष्मण ! एकाकिनीमशरणामासन्नप्रसववेदनामरण्ये हताशां श्वापदा अभिलषन्ति । हा ! इदानीं मन्दभाग्या भागीरथ्यामात्मानं निक्षिपामि' इति वाचः समभवन् । ता निशम्य सूत्रधारोऽभ्यधात्—

'विश्वम्भराऽऽत्मजा देवी राज्ञा त्यक्ता महावने ।
प्राप्तप्रसवमात्मानं गङ्गादेव्यां विमुञ्चति ॥' ७५ ॥

इत्युक्त्वा स निष्क्रान्तः ।

ततः प्रविवेशोत्सङ्गितैककदारकाभ्यां पृथिवीगङ्गाभ्यामवलम्बिता प्रमुग्धा सीता । देव्यावूचतुः—

'समाश्वसिहि कल्याणि ! दिष्ट्या वैदेहि ! वर्धसे ।
अन्तर्जले प्रसूताऽसि रघुवंशधरौ सुतौ ॥' ७६ ॥

सीता समाश्वस्य शशंस—'भगवति ! का त्वमियं च ।'
पृथिवी प्रोवाच—'इयं ते श्वशुरकुलदेवता भागीरथी ।'
सीतयोक्तम्—'भगवति ! नमस्ते ।'
'चारित्रोचितां कल्याणसंपदमधिगच्छ' इत्याशिषं प्रयुज्य भागीरथी जगाद—'इयं ते जननी विश्वम्भरा ।'

अथ 'हा अम्ब ! ईदृश्यहं त्वया दृष्टा' इति सीतया कथिता पृथिवी तामालिङ्ग्य मुमूर्च्छ । देवापगया समाश्वस्तुमभिहिताभूतधात्री संज्ञां प्रतिपद्योदाजहार—'देवि ! सीतां प्रसूय कथमाश्वसिमि ?
सोढश्चिरं राक्षसमध्यवासस्त्यागो द्वितीयस्तु सुदुःसहोऽस्याः ।'

त्रिपथगया प्रतिगदितम्—
'को नाम पाकाभिमुखस्य जन्तोर्द्वाराणि दैवस्य पिधातुमीष्टे ? ॥' ७७ ॥

अचला ललाप—'भगवति भागीरथि ! सदृशमुक्तम् । युक्तमेतद्वो रामभद्रस्य,

न प्रमाणीकृतः पाणिर्बाल्ये बालेन पीडितः ।
नाहं न जनको नाग्निर्नानुवृत्तिर्न संततिः ॥' ७८ ॥

जाह्नवी प्रत्यब्रवीत्—'भगवति वसुन्धरे ! शरीरमसि संसारस्य । तत्किमसंविदानेव जामात्रे कुप्यसि ?

घोरं लोके विततमयशो या च वह्नौ विशुद्धि-
लङ्काद्वीपे कथमिव जनस्तामिह श्रद्दधातु ।
इक्ष्वाकूणां कुलधनमिदं यत्समाराधनीयः
कृत्स्नो लोकस्तदिह विषमे किं स वत्सः करोतु ? ७९ ॥

तथाऽप्येष तेऽञ्जलिः ।'

मेदिनी निजगाद—'देवि ! नित्यं प्रसन्नाऽस्मि वः । किं त्वापातदुःसहस्नेहसंवेगेनैवं ब्रवीमि । न पुनर्न जानामि सीतास्नेहं रामभद्रस्य ।'

अथ रुदती रामदयिता कृताञ्जलिर्जजल्प—'नयतु मामात्मनोऽङ्केषु विलयमम्बा !'

मन्दाकिन्या निजगदे—'शान्तम् ! अविलीना संवत्सरसहस्राणि भूयाः ।'

उर्वी वदति स्म—'वत्से ! अवेक्षणीयौ ते पुत्रकौ ।'

पुत्रिकया मन्त्रितम्—'अनाथाऽस्मि । किमेताभ्याम् ।'

अभिनयं वीक्ष्य व्यथाविक्लवो राघवोऽवदत्—'हृदय ! वज्रमयमसि ।'

अत्र भागीरथी कथयामास—'कथं त्वं सनाथाऽप्यनाथा ?'

अथ समभवन्नेपथ्ये कलकलः । प्रज्वलितमिवाजायता-

न्तरिक्षम्। ततोऽश्रूयत—

'देवि सीते! नमस्तेऽस्तु गतिर्नः पुत्रकाविमौ।
आलेख्यदर्शने देवो यथाऽऽह रघुनन्दनः॥' ८०॥

देव्यावूचतुः—'मोदस्व वत्से! मोदस्व। जृम्भकास्त्रोपस्थानाद्रामभद्रतुल्यौ ते पुत्रकाविदानीं संवृत्तौ।'

अत्रावनिनन्दिनी न्यगदत्—'भगवत्यौ! क एतयोः क्षत्रियोचितं कर्म करिष्यति?'

भागीरथी बभाषे—'पुत्रि! किं तवानया चिन्तया। एतौ हि वत्सौ स्तन्यत्यागात्परेण भगवतो वाल्मीकेरर्पयिष्यामि। स एतयोः क्षत्रकृत्यं करिष्यति।

यथा वसिष्ठाङ्गिरसावृषिः प्राचेतसस्तथा।
जनकानां रघूणां च वंशयोरुभयोर्गुरुः॥' ८१॥

रामोऽमन्त्रयत—सुविचिन्तितं भगवत्या।'

लक्ष्मणेन भणितम्—'आर्य! सत्यं विज्ञापयामि तैस्तैरुपायैर्वत्सौ कुशलवावुत्प्रेक्षे।'

काकुत्स्थोऽचकथत्—वत्स! इत्येवाहं परिप्लवमानहृदयः प्रमुग्धोऽस्मि।'

भूम्याऽभिहितम्—'एहि वत्से! पवित्रीकुरु रसातलम्।'

एवं निष्क्रान्तयोः ससीतयोर्देव्योः करुणरसाश्रयः क्षितिपती रामभद्रः 'हा प्रिये! लोकान्तरं गताऽसि। हा देवि दण्डकारण्यवासप्रियसखि! हा चारित्रदेवते! कथं विलय एव तव संपन्नः।' इत्येवं विलप्य विसंज्ञः संजातः। समनन्तरमेव नेपथ्य उदचरद्ध्वनिर्यथा 'अपनीयतामातोद्यम्। भो भोः सजङ्गमस्थावराः प्राणभृतो मर्त्यामर्त्याः! पश्यतेदानीं मह-

र्षिणा भगवता वाल्मीकिनाऽभ्यनुज्ञातं पवित्रमाश्चर्यम् ।'

ततो विलोकयंल्लक्ष्मणो ललाप—

'मन्थादिव क्षुभ्यति गाङ्गमम्भो व्याप्तं च देवर्षिभिरन्तरिक्षम् ।
आश्चर्यमार्या सह देवताभ्यां गङ्गामहीभ्यां सलिलादुदेति ॥' ८२ ॥

अथ नेपथ्ये पुनरुत्थितो निनादः—

'अरुन्धति ! जगद्वन्द्ये ! गङ्गापृथ्व्यौ जुषस्व नौ ।
अर्पितेयं तवाऽऽवाभ्यां सीता पुण्यव्रता वधूः ॥' ८३ ॥

ततः प्रविष्टा ससीता वसिष्ठपत्नी । सोवाच—

'त्वरस्व वत्से ! वैदेहि ! मुञ्च शालीनशीलताम् ।
एहि जीवय मे वत्सं प्रियस्पर्शेन पाणिना ॥' ८४ ॥

ततो भर्तारं ससंभ्रमं स्पृशन्ती सीतोदैरयत्—"समाश्वसित्वार्यपुत्रः !'

अथ प्रकृतिमापन्नो जानकीजानिः सानन्दमुवाच—'भोः, किमेतत् ।' ततो दयितां दृष्ट्वा सहर्षाद्भुतमभाषत—'कथं देवी !' अनन्तरं सलज्जं ललाप—'अये, अम्बा मेऽरुन्धती ! कथं सर्वे च प्रहृष्यन्त ऋष्यश्रृङ्गशान्तादयोऽस्मद्गुरवः !!'

अरुन्धत्याऽभिदधे—'वत्स ! एषा भगीरथगृहदेवता सुप्रसन्ना गङ्गा ।'

ततोऽभून्नेपथ्यनिस्वनः—'जगत्पते रामचन्द्र ! स्मर्यतामालेख्यदर्शने मां प्रत्यात्मनो वचनं यथा "सा त्वमम्ब ! स्नुषायामरुन्धतीव सीतायां शिवानुध्यानपरा भव" इति । तत्रानृणाऽस्मि जाता ।'

वसिष्ठभार्या पुनरभाषत–'इयं ते श्वश्रूर्भगवती वसुन्धरा ।'

अथ पुनरपि नेपथ्येऽभवच्छब्दः—'उक्तमासीदायुष्मता

वत्साया: परित्यागे यथा "भगवति वसुन्धरे ! श्लाघ्यां दुहितरमवेक्षस्व जानकीम्" इति तदधुना कृतवचनाऽसि प्रभोर्वत्सस्येति ।'

'कथं कृतमहापराधो भगवतीभ्यामनुकम्पितः' इत्यभिधाय जगतीदयितो देव्यावभ्यवादयत ।

अथ मैत्रावरुणिसहधर्मचारिणी धरणिकन्यकापरिग्रहमधिकृत्य पौरजानपदाननुमतिं ययाचे । सहर्षं तदनुमन्यमानास्ते कृत्स्नश्च भूतग्रामो जनकतनयामभ्यवादयन्त । लोकपालाः सप्तर्षयश्च तां पुष्पवृष्टिभिरुपतस्थिरे । तथा वृत्तेऽरुन्धती भूयोऽपि कौसल्यानन्दनं भणितवती—'जगत्पते रामचन्द्र !

नियोजय यथाधर्मं प्रियां त्वं धर्मचारिणीम् ।
हिरण्मय्याः प्रतिकृतेः पुण्यां प्रकृतिमध्वरे ॥' ८१ ॥

रामभद्रो गुरुपत्न्या आदेशं मूर्ध्नि कृतवान् ।

ततो सौमित्रिः सीतायै न्यवेदयत्—'आर्ये ! एष निर्लज्जो लक्ष्मणः प्रणमति ।'

सा प्रतिजगाद—'वत्स ईदृशस्त्वं चिरं जीव ।'

अनन्तरं प्राचेतसो मुनिः कुशलवौ पुरस्कृत्याब्रवीत्—'वत्सौ कुशलवौ ! एष वां रघुपतिः पिता, एष लक्ष्मणः कनिष्ठतातः, एषा सीता जननी, एष राजर्षिर्जनको मातामहः।'

अथ रामलक्ष्मणौ वत्सावालिलिङ्गतुः । ततः सीताऽपि तौ चिरस्य पर्यष्वजत । तदैव संप्राप्तस्तत्रोत्खातलवणो मधुरेश्वरः । युगपत्सर्वेषामभ्युदयानामुदयमुदीक्ष्य सर्वे सान्द्रानन्दनिर्भरा बभूवुः ।

———o———

# वेणीसंहारम्

[ १ ]

परिरक्षितः पाण्डुपुत्रैर्द्वादशवार्षिकारण्यवासस्यैकवर्षाज्ञातवसतेश्च समयः । यथासंविन्निवर्तनीयायां राज्यश्रियां ज्येष्ठकौरवेणानिवर्तितायामासन्नोऽदृश्यत संप्रहारः । प्रलयभूतं विग्रहाग्निं प्रशमयितुं कंसारिणा संधिं कारयितुं दौत्यं स्वत एव प्रतिपन्नम्, अङ्गीकृतनिर्वाहाय च पाण्डवेभ्यः प्रति स कौरवशिविरसंनिवेशं प्रति प्रास्थितः ।

अग्रजं संधित्सुं विज्ञाय भृशं चुकुपे वृकोदरेण । निमन्त्र्याभ्यवहारणविधौ, विषदानम्, लाक्षागृहे भस्मसात्करणोद्योगः, द्यूते प्रवञ्चनाचयः, नृपसदसि पाञ्चालतनयाकेशानां दुःशासनामर्षः परिधानापहरणप्रयत्नश्च सर्वोऽपि निकारस्तस्य नव इवाभवत् । विहितोपसान्त्वनप्रयत्नेऽपि सहदेवे प्रज्वलितं तस्य क्रोधार्चिः । सोऽभिदधौ—

'प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभि-
र्न तत्राऽऽर्यो हेतुर्न भवति किरीटी न च युवाम् ।
जरासंधस्योरःस्थलमिव विरूढं पुनरपि
क्रुधा संधिं भीमो विघटयति यूयं घटयत ॥' १ ॥

तस्य सामर्षं वचः श्रुत्वा सहदेवोऽनुनिनाय—'आर्य ! एवमतिसंभृतक्रोधेषु युष्मासु कदाचित्खिद्यते गुरुः ?'

द्वितीयपाण्डवेनोक्ते—'किं नाम कदाचित्खिद्यते गुरुः। गुरुः खेदमपि जानाति। पश्य,

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः।
विराटस्याऽऽवासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥ २ ॥

तत्सहदेव! निवर्तस्व। एवं चापि चिरप्रवृद्धामर्षोद्दीपितस्य भीमस्य वचनाद्विज्ञापय राजानम्—

युष्मच्छासनलङ्घनांहसि मया मग्नेन नाम स्थितं
प्राप्ता नाम विगर्हणा स्थितिमतां मध्येऽनुजानामपि।
क्रोधोल्लासितशोणितारुणगदस्योच्छिन्दतः कौरवा-
नद्यैकं दिवसं ममासि न गुरुर्नाहं विधेयस्तव ॥ ३ ॥

गच्छ त्वं गुरुमनुवर्तस्व। अहमप्यायुधागारं प्रविश्याऽऽयुधसहायो भवामि।'

रोषपरवशो बकारिरायुधागारं जिगमिषुः पाञ्चाल्याश्चतुःशालकं प्रविष्टः। सहदेवेन तद्विज्ञापितः स प्रीतः सन्, अनुजं सप्रणयं हस्ते गृहीत्वा तत्र प्रविवेश। तत्र पाञ्चालीमपश्यन् स भूमावुपविवेश। तद्वीक्ष्य सहदेवः ससंभ्रममुवाच—'आर्य! इदमासनमास्तीर्णम्। अत्रोपविश्याऽऽर्यः पालयतु कृष्णाऽऽगमनम्।'

तथा भणितः सोऽन्यदेव सारितोऽचकथत्—'अथ भगवान्कृष्णः केन पणेन संधिं कर्तुं सुयोधनं प्रति प्रहितः?'

अनुजेन प्रत्यभिहितम्—'आर्य! पञ्चभिर्ग्रामैः।'

हिडिम्बशत्रुः कर्णौ पिधायाभ्यधात्—'अहह! देवस्या-

जातशत्रोरप्ययमीदृशस्तेजोऽपकर्षं इति यत्सत्यं कम्पितमिव मे हृदयम्।'

ततः परिवृत्य स्थित्वा स भूयो जगाद—

'यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः।
दीव्यताऽक्षैस्तदाऽनेन नूनं तदपि हारितम्॥' ४॥

अथ तत्रोपससर्प मुहुरुपचीयमानबाष्पपटलस्थगितनयना याज्ञसेनी। तां तथा वीक्ष्य लघुपाण्डवः समभावयत्—

'यद्वैद्युतमिव ज्योतिरार्ये क्रुद्धेऽद्य संभृतम्।
तत्प्रावृडिव कृष्णेयं नूनं संवर्धयिष्यति॥' ५॥

कुरुवैरी तु तथाऽमर्षोद्वेगपरोऽवर्तिष्ट यथा न द्रौपदी-विहितं प्रणामं शुश्राव। स तु "यत्तदूर्जितमत्युग्रम्" (४) इत्याद्याम्रेडयामास।

तं तथा विवृद्धमन्युं विलोक्य प्रससाद याज्ञसेनी। सैकान्त उपविश्य स्वनाथस्य व्यवसितं श्रोतुं प्रचक्रमे। कुरुनिधनस्तु भ्रातरमधिकृत्य ब्रवीति स्म—'किं नाम पञ्चभिर्ग्रामैः सन्धिः?

मथ्नामि कौरवशतं समरे न कोपाद्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः।
संचूर्णयामि गदया न सुयोधनोरू
संधिं करोतु भवतां नृपतिः पणेन॥' ६॥

भीमस्य तथा दीप्तं वच आकर्ण्य पाञ्चाली तूर्णमेव निकार-प्रतिकारमाशंसमाना प्रीततरा बभूव।

अग्रज-प्रशमन-परेण लघुपाण्डवेनाभिहितम्—'आर्य! किं महाराजस्य संदेशोऽयमार्येणाव्युत्पन्न इति गृहीतः।'

स प्रत्युवाच—'का पुनरत्र व्युत्पत्तिः ?'

सहदेवेनोचे—'आर्य ! एवं गुरुणा सुयोधनस्य संदिष्टम्—

इन्द्रप्रस्थं वृकप्रस्थं जयन्तं वारणावतम् ।
प्रयच्छ चतुरो ग्रामान्कंचिदेकं च पञ्चमम् ॥' ७ ॥

ततोऽग्रजेन संदर्भाभिप्रायमनुयुक्तस्तदनुजः प्रत्यवदत्—'तदेवमनया प्रतिनामग्रामप्रार्थनया पञ्चमस्य चाकीर्तनाद् विषभोजन-जतुगृहदाह-द्यूतसभाद्यपकारस्थानोद्घाटनमेव। एवं कृते लोके तावत्स्वगोत्रक्षयाशङ्कि हृदयमाविष्कृतं भवति, कुरुराजस्य तावदसंधेयता तदैव प्रतिपादिता भवति।'

तत्सर्वमनर्थकं मन्यमानो वृकोदर उवाच—'कुरुराजस्य तावदसंधेयता तदैव प्रतिपादिता यदैवास्माभिरितो वनं गच्छद्भिः सर्वैरेव कुरुकुलस्य निधनं प्रतिज्ञातम्। लोकेऽपि च धार्तराष्ट्रकुलक्षयः किं लज्जाकरो भवताम्। अपि च,

युष्मान्ह्रेपयति क्रोधाल्लोके शत्रुकुलक्षयः ।
न लज्जयति दाराणां सभायां केशकर्षणम् ॥' ८ ॥

अत्रैवं समजायत पाञ्चालीचेतसि—'नाथ ! न लज्जन्त एते। त्वमपि तावन्मा विस्मार्षीः।'

तदानीमपि याज्ञसेनीमनागतां मन्यमानः स सविग्रहो विग्रहो विग्रहभूमिं सत्वरं यातुकामोऽभाषत—'वत्स ! कथं चिरयति पाञ्चाली।'

अनुजेनोक्तम्—'आर्य ! का खलु वेलाऽत्र भवत्याः प्राप्तायाः किं त्वार्येण नोपलक्षिता।'

अथ तां विलोक्य मूर्तिमान्वीररसः सादरमवोचत्—'देवि ! वर्धितामर्षैरस्माभिरागताऽपि भवती नोपलक्षिता।

अतो न मन्युं कर्तुमर्हसि ।'

तया प्रत्यवादि—'नाथ ! उदासीनेषु युष्मासु मम मन्युः, न पुनः कुपितेषु ।'

सोऽपि 'यद्येवमपगतपरिभवमात्मानं समर्थयस्व' इत्याचक्षाणस्तां हस्ते गृहीत्वा, पार्श्वे समुपवेश्य, मुखमवलोक्यानुयुयुजे—'किं पुनरत्र भवतीमुद्विग्नामिवोपलक्षयामि ।'

अथ पाञ्चालराजतनयया नूत्नतरं परिभवं निवेदयितुं नियोजिता बुद्धिमतिका नाम चेटी बभाण—'शृणोतु कुमारः । इतोऽप्याधिकतरमद्योद्वेगकारणमासीद्देव्याः । अद्य खलु देव्यम्बासहिता सुभद्राप्रमुखेन सपत्नीवर्गेण परिवृता आर्याया गान्धार्याः पादवन्दनं कर्तुं गता । ततः प्रतिनिवर्तमाना भानुमत्या देवी दृष्टा । ततस्तया देवीं प्रेक्ष्य सखीजनदत्तदृष्ट्या सगर्वमीषद्विहस्य भणितम् । "अयि याज्ञसेनि ! पाण्डवेषु किल ग्रामपञ्चकं प्रार्थयमानेषु कस्माद्युष्माकमद्यापि केशा न संयम्यन्ते ।"'

तदाकर्ण्य ज्वलितोऽमर्षेण द्वितीयपाण्डवः । स पप्रच्छ—'बुद्धिमतिके ! ततो देव्या किमभिहितम् ?'

साऽवदत्—'कुमार ! यदि परिहीनं मम वचनं भवेत्तदा देवी भणति । मया परिकुप्य भणितम्—"अयि भानुमति ! युष्माकममुक्तेषु केशहस्तेषु कथमस्माकं देव्याः केशाः संयम्यन्ते" इति ।'

तं प्रतिव्याहारं समर्थं समर्थयमानः किर्मीरहन्ता दासीमभिनन्द्य, अधीरमासनादुत्तिष्ठन् जगाद—'भवति ! पाञ्चालराजतनये ! श्रूयताम् । अचिरेणैव कालेन,

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि ! भीमः ॥' ९ ॥

अत्रोत्तेजिता धृष्टद्युम्नस्वसाऽचकथत्—'किं नाथ ! दुष्करं त्वया परिकुपितेन। सर्वथाऽनुगृह्णन्त्वेतद् व्यवसितं ते भ्रातरः।'

प्रज्वलितकोपज्वलनो लघुपाण्डुतनयोऽप्युवाच—'अनुगृहीतमेतदस्माभिः।'

अथ ज्येष्ठपाण्डवकाञ्चुकीयो जयन्धर उपेत्य व्यजिज्ञपत्—'कुमार ! एष खलु भगवान्वासुदेवः पाण्डवपक्षपातामर्षितेन सुयोधनेन संयमितुमारब्धः। ततः स महात्मा दर्शितविश्वरूपतेजःसंपातमूर्च्छितमवधूय कुरुकुलमस्माच्छिविरसंनिवेशमनुप्राप्तः कुमारमविलम्बितं द्रष्टुमिच्छति।'

नितान्तमतिक्रान्ताऽधुना संधानप्रत्याशा। प्रक्रान्तः समरोद्योगः। धर्मराजसुतेनाप्यनुमतः संगरः। प्रलयजलधरस्तनितमांसलोद्घोषं क्षणे क्षणे ताड्यमानं समरदुन्दुभिं श्रुत्वा हृष्टः कीचकनिहन्ता व्याजहार—'अहो प्रवर्तते रणयज्ञः। तथाहि,

चत्वारो वयमृत्विजः स भगवान्कर्मोपदेष्टा हरिः
संग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता ।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः ॥' १० ॥

[ २ ]

प्रक्रान्तो जगदन्तकः संगरः। वीरगतिं प्राप्ताः पक्ष-युगलस्य सहस्रशः योद्धारः। आश्रितो विशिखशय्यां भीष्मः। ततः कुरुराजसैन्याधिपत्याभिषिक्तेन द्रोणेन निरमायि दुष्प्रवेशश्चक्रव्यूहः। सौभद्रस्तु कौरवदलं निपातयंस्तत्र प्रविवेशैव। जयद्रथादिभिः सप्तभिर्महारथैरभियुक्तः सोऽसहायोऽपि चिरं तान् दृढं पीडयित्वाऽरिगणैर्युगपदेव प्रहृतो विगतायुधो रणे निपपात। अवाप्तापारहर्षः कुरुपतिर्निहताभिमन्यून् राधेयजयद्रथप्रभृतीन् स्वसेनापतीन् सभाजयितुं द्रुततरं समरभूमिं गन्तुमनाः, ततोऽपि प्रागेव स्वभार्यां भानुमतीं द्रष्टुकामस्तामन्वेष्टुं स्वकञ्चुकिनं विनयंधरं समादिदेश।

सोऽपि देवीं निर्वर्तित गुरु-देव-पादवन्दनां बालोद्याने स्थितां विज्ञाय तां महाराजस्य निवेदयितुं निवृत्तः। गच्छन् स दुर्योधननियतिगतमशङ्कत। सोऽचिन्तयत्—'इदमप्ययपरमयथातथं स्वामिनश्चेष्टितम्। कुतः,

आ शस्त्रग्रहणादकुण्ठपरशोस्तस्यापि जेता मुने-
स्तापायास्य न पाण्डुसूनुभिरयं भीष्मः शरैः शायितः।
प्रौढानेकधनुर्धरारिविजयश्रान्तस्य चैकाकिनो
बालस्यायमरातिलूनधनुषः प्रीतोऽभिमन्योर्वधात्॥ ११॥

अथ प्रियास्थानसूचनामुपलभ्य प्रयातः समं कञ्चुकिना दुर्योधनः। मार्गेऽभिमन्युवधप्रसङ्गे कञ्चुकिनोक्तम्—'देव! नैवमतिदुष्करमाचार्यस्य शस्त्रप्रभावात्। कर्णजयद्रथयोर्वा का नामात्र श्लाघा?'

दुर्योधनः प्रत्युवाच—'विनयंधर! किमाह भवान्

"एको बहुभिर्बालो लूनशरासनश्च निहत इत्यत्र का श्लाघा कुरुपुंगवानाम् ?" तदत्र न खलु कश्चिद्दोषः। मूढ! पश्य,

हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम्।
या श्लाघा पाण्डुपुत्राणां सैवास्माकं भविष्यति ॥' १२ ॥

वैलक्ष्यमुपगतो विनयंधरः सविनयमुवाच—'देव! न ममायमभिप्रायः। किं तु वः पौरुषप्रतीघातोऽस्माभिरनालोचितपूर्व इत्यत एवं विज्ञापयामि।'

दैवहतो दुर्योधनो व्याजहार—'एवमिदम्,

सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम्।
स्वबलेन निहन्ति संयुगे न चिरात्पाण्डुसुतः सुयोधनम् ॥' १३ ॥

तच्छ्रुत्वा कञ्चुकी कर्णौ पिधाय सभयमुवाच—'शान्तं पापम्! प्रतिहतममङ्गलम्! "न चिरात्पाण्डुसुतं सुयोधनः" इत्येतद्विपरीतमभिहितं दैवेन।'

ततो यत्र भानुमती स्थिता तमुद्देशमवाप्य दुर्योधन उवाच—'आर्य विनयंधर! गच्छ त्वं साङ्ग्रामिकं मे रथमुपकल्पयितुम्। अहमप्येष देवीं दृष्ट्वाऽनुपदमागत एव।'

भानुमत्यपि बालोद्याने स्थिता स्वसखीचेटीभ्यां सुवदनातरलिकाभ्यां समं स्वप्नगतमचिन्तयत्। सुवदनोवाच—'सखि भानुमति! कस्मादिदानीं त्वं स्वप्नदर्शनमात्रस्य कृतेऽभिमानिनो महाराजदुर्योधनस्य महिषी भूत्वैवं विगलितधीरभावाऽतिमात्रं संतप्यसे?'

सा प्रत्यवादीत्—'हञ्जे! एवमेतत्। किन्त्वयं स्वप्नोऽतिमात्रमकुशलदर्शनो मे प्रतिभाति।'

सुवदना न्यवेदयत्—'यद्येवं तत्कथयतु प्रियसखी। येना-

वामपि प्रतिष्ठापयन्त्यौ प्रशंसया देवतासंकीर्तनेन च परिहरिष्यावः।'

देवी प्रत्यवदत्—'मुहूर्तं तिष्ठ यावत्सर्वं स्मरिष्यामि।' ततः सा विमृश्य भूयोऽभ्यधात्—'सखि ! स्मृतम्। अद्य किल प्रमदवन आसीनाया ममाग्रत एव दिव्यरूपिणा नकुलेनाहिशतं व्यापादितम्।'

अथ दुर्योधनस्तत्र संप्राप्य भानुमतीं सुवदना-तरलिकाभ्यां किमपि मन्त्रयमाणामुत्प्रेक्ष्य लताजालान्तरितस्तासां विश्रब्धालापमाकर्णयितुं प्रवृत्तः।

देव्योदितम्—'ततोऽहं तस्यातिशयितदिव्यरूपिणो नकुलस्य दर्शनोत्सुका जाता। तत उज्झित्वा तदासनं लतामण्डपं प्रवेष्टुमारब्धा।'

तच्छ्रुत्वैवमभूत्सवैलक्ष्यस्य ज्येष्ठकौरवस्य मनसि—'किं नामातिशयितदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जाता। तत्किमनया पापया माद्रीसुतानुरक्तया वयमेवं विप्रलब्धाः। मूढ दुर्योधन ! कुलटाविप्रलभ्यमात्मानं बहुमन्यमानोऽधुना किं वक्ष्यसि ? अहो एतदर्थमेवास्याः प्रातरेव विविक्तस्थानाभिलाषः सखीजनसंकथासु च पक्षपातः।'

सख्याऽनुयुक्तम्—'ततस्ततः ?'

तयोदितम्—'तत उज्झित्वा तदासनस्थानं लतामण्डपं प्रवेष्टुमारब्धा ? ततः सोऽपि मामनुसरन्नेव लतामण्डपं प्रविष्टः।'

कौरवो व्यचारयत्-'अहो ! कुलटोचितमस्याः पापाया अशालीनत्वम्।'

राज्ञ्याऽग्र उक्तम्—'ततस्तेन सप्रगल्भप्रसारितकरेणापहृतं मे स्तनांशुकम् ।'

कुपितेन राज्ञा व्यभावि—'अलमिदानीमतः परमाकर्णनेन। भवतु तावत्तस्य परवनितावस्कन्दनप्रगल्भस्य माद्रीसुतहतकस्य जीवितमपहरामि। अथवेयमेव तावत्पापशीला प्रथममनुशासनीया ।'

भानुमत्या भणितम्—'तत आर्यपुत्रस्य प्रभातमङ्गलतूर्यरवमिश्रेण वारविलासिनीजनसंगीतरवेण प्रतिबोधिताऽस्मि।'

दुर्योधनोऽतर्कयत्—'अहो स्वप्नदर्शनमनया वर्णितम् । मया पुनर्मन्दधियाऽन्यथैव संभावितम् ।

दिष्ट्याऽर्धश्रुतविप्रलम्भजनितक्रोधादहं नो गतो
दिष्ट्या नो परुषं रुषार्धकथने किंचिन्मया व्याहृतम् ।
मां प्रत्याययितुं विमूढहृदयं दिष्ट्या कथाऽन्तं गता
मिथ्या दूषितयाऽनया विरहितं दिष्ट्या न जातं जगत् ॥' १४ ॥

अथ स्वप्नगतं पृष्टे सखीचेट्यौ 'सखि ! सर्वमेवैतदशुभनिवेदनम् ।' इत्यूचतुः। राजाऽपि तमनिष्टोदर्कं तर्कयामास। तदैव पस्पन्दे च तस्य वामाक्षि । तथापि स्वप्नान् काकतालीयं फलतो मन्यमानो भानुमत्याः स्त्रीस्वभावसुलभां शङ्कामपनेतुमना अग्रतो यातुं व्यवास्यत् ।

'उदित आसीद्भगवान् दिवसनाथः। समयस्ते कुसुमचन्दनगर्भेणार्घेण पर्युपस्थातुम् ।' इति सख्या चोदिता सा 'उपनय मेऽर्घभाजनम्, यावद्भगवतः सहस्ररश्मेः सपर्यां निर्वर्तयामि' इति तरलिकां समादिदेश ।

अथ निष्क्रान्ता तरलिका निदेशपालनाय । यावत्सा-

ऽर्घभाजनं देव्या उपहरति तावन्नृपतिः 'अयमेव साधुतरोऽवसरः समीपमुपगन्तुं देव्याः।' इत्याकलयन्, उपसृत्य संज्ञया परिजनमुत्सार्य स्वयमेवार्घ्यपात्रं गृहीत्वा ददाति स्म। देव्यपि भगवते सकलभुवनाङ्गनदीपकाय दिननाथायार्घ्यं दत्त्वा अपरासां देवतानां सपर्यां निर्वर्तयितुं कुसुमानि ययाचे।

उपनिनाय पुष्पाणि कुरुपुंगवः। स्पर्शसुखमनुभवंश्च तानि भूमावपातयत्। 'अहो परिजनस्य प्रमादः' इति भर्त्सनां विदधती भानुमती परिवृत्य भूपतिं वीक्ष्य ससंभ्रमा समजायत।

राजा प्रतिव्याजहार—'देवि ! अनिपुणः परिजनोऽयमेवंविधे सेवावकाशे।'

व्रीडिता महिषी बभाषे—'आर्यपुत्र ! अभ्यनुज्ञातायास्त्वयाऽस्ति मे कस्मिन्नपि नियमेऽभिलाषः।'

स उवाच—'श्रुतविस्तर एवास्मि भवत्याः स्वप्नवृत्तान्तं प्रति। तदलमेवं प्रकृतिसुकुमारमात्मानं खेदयितुम्।'

निर्बन्धपरया तयोचे—'आर्यपुत्र ! मां शङ्का बाधते। तदनुमन्यतां मामार्यपुत्रः।'

गर्वितः पृथ्वीपतिर्भूयो जगाद—'देवि ! अलमनया शङ्कया। पश्य,

किं नो व्याप्तदिशां प्रकम्पितभुवामक्षौहिणीनां फलं
किं द्रोणेन किमङ्गराजविशिखैरेवं यदि क्लाम्यसि ?
भीरु ! भ्रातृशतस्य या भुजवनच्छायासुखोपस्थिता
त्वं दुर्योधनकेसरीन्द्रगृहिणी शङ्कास्पदं किं तव ?'१५॥

एवमनेकविधं तां समाश्वासयति कुरुराजे झाङ्कारिणा

शर्करालेन चण्डारम्भसमीरणेन बाधिता राज्ञी भर्तारं परिषस्वजे । उत्थितपरुषरजःकलुषीकृतनयनावुभौ दारुपर्वतप्रासादं प्रविष्टौ । तत्र स्वप्रियां कठिनाशिलातलमध्यासमानां विलोक्येलापतिरलपत्—

'लोलांशुकस्य पवनाकुलितांशुकान्तं
त्वद्दृष्टिहारि मम लोचनबान्धवस्य ।
अध्यासितुं तव चिरं जघनस्थलस्य
पर्याप्तमेव करभोरु ! ममोरुयुग्मम् ॥' १६ ॥

तदैव प्रविष्टेन संभ्रान्तेन विनयंधरेणाभिदधे—'देव ! भग्नम्, भग्नम् ।'

ज्येष्ठकौरवेण भणितम्—'केन ?'

स उवाच—'भीमेन !'

राजाऽचकथत्—'आः, किं प्रलपसि ?'

सेवकेनावादि—

'भग्नं भीमेन भवतो मरुता रथकेतनम् ।
पतितं किङ्किणीक्वाणबद्धाक्रन्दमिव क्षितौ ॥' १७ ॥

भुवो भर्त्राऽभिहितम्—'बलवत्समीरणवेगात्कम्पिते भुवने भग्नः स्यन्दनकेतुः । तत्किमित्युद्धतं प्रलपसि भग्नं भग्नमिति ?'

कञ्चुकिना न्यवेदि—'देव ! न किंचित् । किंतु शमनार्थमस्यानिमित्तस्य विज्ञापयितव्यो देव इति स्वामिभक्तिर्मां मुखरयति ।'

'अन्तरीयतामेतत्प्रसन्नब्राह्मणवेदघोषेण' इति भानुमत्या प्रेरितो दुर्योधनः सावज्ञमुवाच—'ननु गच्छ पुरोहितसुमित्राय निवेदय ।'

अथ जयद्रथमाता दुःशला च तत्र समुपेत्य जयद्रथं परित्रिन्रास्नू उभे सास्रं दुर्योधनपादयोः पतिते।

जयद्रथजनन्युवाच—'परित्रायतां परित्रायतां कुमारः। अद्य खलु पुत्रवधामर्षोद्दीपितेन गाण्डीविनाऽनस्तामिते दिवसनाथे तस्य वधः प्रतिज्ञातः।'

दर्पमूर्तिः कौरवः सस्मितमभ्यधात्—'इदं तदस्रकारणमम्बाया दुःशलायाश्च। पुत्रशोकादुन्मत्तस्य किरीटिनः प्रलापैरेवमवस्था। अहो मुग्धत्वमबलानां नाम। अम्ब! कृतं विषादेन। वत्से दुःशले! अलमश्रुपातेन। कुतश्चायं धनंजयस्य प्रभावो दुर्योधनबाहुपरिघरक्षितस्य महाराजजयद्रथस्य विपत्तिमुत्पादयितुम्?'

सुतविपच्छङ्किता माताऽभिदधे—'जात जात! ते हि पुत्रबन्धुवधामर्षोद्दीपितकोपानला अनपेक्षितशरीरा वीराः परिक्रामन्ति।'

राजा सोपहासमचकथत्—'सर्वमेतत्। सर्वजनप्रसिद्धैवामर्षिता पाण्डवानाम्। पश्य,

हस्ताकृष्टविलोलकेशवसना दुःशासनेनाऽऽज्ञया
पाञ्चाली मम राजचक्रपुरतो गौर्गौरिति व्याहृता।
तस्मिन्नेव ततज्यगाण्डिवधरो नाऽसीत्पृथानन्दनो
यूनः क्षत्रियवंशजस्य कृतिनः क्रोधास्पदं किं न तत्?'१८॥

माता व्याजहार—'असमाप्तप्रतिज्ञाभारस्याऽऽत्मवधोऽस्य प्रतिज्ञातः।'

कुरुराजेन निजगदे—'यद्येवमलमानन्दस्थानेऽपि ते विषादेन। ननु वक्तव्यमुत्सन्नः सानुजो युधिष्ठिर इति। अन्यच्च

मातः ! का शक्तिरस्ति धनंजयस्यान्यस्य वा कुरुशतपरिवारवर्धितमहिम्नः कृप-कर्ण-द्रोणाश्वत्थामादिमहारथपराक्रमद्विगुणीकृतनिरावरणविक्रमस्य नामापि ग्रहीतुं ते तनयस्य ? अयि सुतपराक्रमानभिज्ञे !

धर्मात्मजं प्रति यमौ च कथैव नास्ति
मध्ये वृकोदरकिरीटभृतोर्बलेन ।
एकोऽपि विस्फुरितमण्डलचापचक्रं
कः सिन्धुराजमभिषेणयितुं समर्थः ? १६ ॥

अपि च,

दुःशासनस्य हृदयक्षतजाम्बुपाने
दुर्योधनस्य च तथा गदयोरुभङ्गे ।
तेजस्विनां समरमूर्धनि पाण्डवानां
ज्ञेया जयद्रथवधेऽपि तथा प्रतिज्ञा ॥ २० ॥

देवि ! प्रविश त्वमभ्यन्तरमेव ।'

एवमभिधाय दुर्योधनः 'यावदहमपि तस्य प्रगल्भपाण्डवस्य जयद्रथपरिरक्षणेनैव मिथ्याप्रतिज्ञावैलक्ष्यसंपादितमशस्त्रपूतं मरणमुपदिशामि ।' इति मनसि कुर्वन्प्रधनक्षेत्रं प्रयातः ।

[ ३ ]

प्रादर्शि विस्मयकारिविक्रमो मध्यमपाण्डवेन । अनवसित एवदिवसे स जयद्रथं तरसा निजघान । धृष्टद्युम्नोऽपि द्रोणं केशेष्वाकृष्यासिपत्रेण व्यापादितवान् ।

अत्रान्तरे समायातः कुतश्चिदाकृष्टासिपत्रोऽश्वत्थामा । कलकलमाकर्णयन्स उत्प्रेक्षितवान्—'ध्रुवं गाण्डीविना

सात्यकिना वृकोदरेण वा यौवनदर्पादतिक्रान्तमर्यादेन परिकोपितस्तातः । यतः समुल्लङ्घ्य शिष्यप्रियतामात्मप्रभावसदृशं चेष्टते ।'

तथाभिदधानः सोऽपि तत एव समरस्थलीं प्रस्थितः । रणभूमेः समन्तादपक्रामतो बलान्संस्तम्भयितुमुपदिदेश—

' यदि समरमपास्य नास्ति मृत्यो-
भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः कुरुध्वे ॥' २१ ॥

अत्रान्तरे संभ्रान्तः सप्रहारो द्रोणसारथिरश्वसेन आगत्याऽश्वत्थामपादयोर्निपत्याऽऽचार्यस्यास्तमयं न्यवेदयत् । तच्छ्रुण्वन्नेव मुमोह द्रौणिः । संज्ञामुपलभ्य विलपन्, सूतेन समाश्वासितस्तमन्वयुङ्क्त—'आर्य ! कथय कथय । कथं तादृग्भुजवीर्यसागरस्तातोऽपि नामास्तमुपगतः ।

किंशिष्याद्गुरुदक्षिणां गुरुगदां भीमप्रियः प्राप्तवा-
नन्तेवासिदयालुरुज्झितनयेनासादितो जिष्णुना ?
गोविन्देन सुदर्शनस्य निशितं धारापथं प्रापितः,
शङ्के नापदमन्यतः खलु गुरोरेभ्यश्चतुर्थादहम् ?' २२ ॥

सूतेन प्रत्यवोचि—'कुमार !
एतेऽपि तस्य कुपितस्य महास्त्रपाणेः
किं धूर्जटेरिव तुलामुपयान्ति संख्ये ?
शोकोपरुद्धहृदयेन यदा तु शस्त्रं
त्यक्तं तदाऽस्य विहितं रिपुणाऽतिघोरम् ॥' २३ ॥

अश्वत्थाम्ना स्वपितृशोककारणं पृष्टः सारथिरश्रूणि विमुञ्चन्नाचष्ट—'श्रूयताम्,

अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा
स्वैरं शेषे गज इति किल व्याहृतं सत्यवाचा ।
तच्छ्रुत्वाऽसौ दयिततनयः प्रत्ययात्तस्य राज्ञः
शस्त्राण्याजौ नयनसलिलं चापि तुल्यं मुमोच ॥' २४ ॥

तच्छ्रुत्वा द्रौणिरपि,

'श्रुत्वा वधं मम मृषा सुतवत्सलेन
तात ! त्वया सह शरैरसवो विमुक्ताः ।
जीवाम्यहं पुनरहो भवता विनाऽपि
क्रूरेऽपि तन्मयि मुधा तव पक्षपातः ॥' २५ ॥

इति वदन्मोहमुपगतः ।

अथ समुपेतस्तत्र भागिनेयमन्विष्यन्नाचार्यः कृपः । अश्वत्थामा तु संज्ञामुपलभ्याऽऽकाशे बद्धलक्ष्यः सास्रमुवाच—'युधिष्ठिर ! युधिष्ठिर !

आजन्मनो न वितथं भवता किलोक्तं
न द्वेक्षि यज्जनमतस्त्वमजातशत्रुः ।
ताते गुरौ द्विजवरे मम भाग्यदोषात्
सर्वं तदेकपद एव कथं निरस्तम् ?' २६ ॥

ततः शारद्वतं पार्श्वतो विलोक्य विवृतद्वारमिवाजायत तस्य दुःखम् । न स तातविरहितः क्षणमपि प्राणान् धारयितुमात्मक्षमतामपश्यत् । तदानीमेव कलकलोऽश्रूयत । स च यथा—

'आचार्यस्य त्रिभुवनगुरोर्न्यस्तशस्त्रस्य शोकाद्
द्रोणस्याऽऽजौ नयनसलिलक्षालितार्द्राननस्य ।
मौलौ पाणिं पलितधवले न्यस्य कृत्वा नृशंसं
धृष्टद्युम्नः स्वशिबिरमयं याति सर्वे सहध्वम् ॥' २७ ॥

अतिदुर्वहशोकभारेण द्रौणिना भणितम्—'हा तात! हा पुत्रप्रिय! मन्दभागधेयस्य कृते शस्त्रपरित्यागात्तथाविधेन क्षुद्रेणाऽऽत्मा परिभावितः। अथवा,

परित्यक्ते देहे रणशिरसि शोकान्धमनसा
शिरः श्वा काको वा द्रुपदतनयो वा परिमृशेत्।
असंख्यातास्त्रौघद्रविणमदमत्तस्य च रिपो-
र्ममैवायं पादः शिरसि निहतस्तस्य न करः ॥' २८ ॥

आः, दुरात्मन् पाञ्चालापसद !

तातं शस्त्रग्रहणविमुखं निश्चयेनोपलभ्य
त्यक्त्वा शङ्कां खलु विदधतः पाणिमस्योत्तमाङ्गे ।
अश्वत्थामा करधृतधनुः पाण्डुपाञ्चालसेना-
तूलोत्क्षेपप्रलयपवनः किं न यातः स्मृतिं ते ? २९ ॥

युधिष्ठिर युधिष्ठिर! अजातशत्रो! अमिथ्यावादिन्! धर्मपुत्र! सानुजस्य ते किमनेनापकृतम्। अथवा किमनेनालीकप्रकृतिजिह्मचेतसा। अर्जुन! सात्यके! बाहुशालिन् वृकोदर! माधव! युक्तं नाम भवतां सुरासुरमनुजलोकैकधनुर्धरस्य द्विजन्मनः परिणतवयसः सर्वाचार्यस्य विशेषतो मम पितुरमुना द्रुपदकुलकलङ्केन मनुजपशुना स्पृश्यमानमुत्तमाङ्गमुपेक्षितुम्। अथवा सर्व एवैते पातकिनः। किमेतैः,

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ ३० ॥

तत्संरम्भं विवर्धयिषुः कृपोऽवदत्—'वत्स ! किं न संभाव्यते भारद्वाजतुल्ये बाहुशालिनि दिव्यास्त्रग्रामकोविदे भवति?'

अश्वत्थाम्ना जगदे—'भो भोः पाण्डव-मत्स्य-सोमक-मागधेयाः क्षत्रियापसदाः !

पितुर्मूर्ध्नि स्पृष्टे ज्वलदनलभास्वत्परशुना
कृतं यद्रामेण श्रुतिमुपगतं तन्न भवताम् ।
किमद्याश्वत्थामा तदरिरुधिरासारविघसं
न कर्म क्रोधान्धः प्रभवति विधातुं रणमुखे ॥ ३१ ॥

लब्धाचार्यो ललाप—'वत्स ! अवश्यप्रतिकर्तव्येऽस्मिन्दारुणे निकाराग्नौ सर्वेषामस्माकं कोऽन्यस्त्वामन्तरेण शक्तः प्रतिकर्तुम् । सैनापत्येऽभिषिक्तं भवन्तमिच्छामि समरभुवमवतारयितुम् ।'

अश्वत्थामोवाच—'मातुल ! परतन्त्रमिदमकिंचित्करं च ।'

ततः स्वमातुलप्रेरणयोररीकृतः सैनापत्याभिषेकप्रस्तावोऽश्वत्थाम्ना । अथोभौ दुर्योधनस्य सविधे जग्मतुः ।

अन्यत्र दुर्योधनः कर्णेन समं संकथाप्रवृत्तोऽभूत् । आहवे वृद्धाचार्यस्यास्त्रपरित्यागो दुर्योधनस्यातिमात्रामरतिमकरोत् । सोऽचकथत्—'अङ्गराज !

तेजस्वी रिपुहतबन्धुदुःखपारं
बाहुभ्यां व्रजति धृतायुधप्लवाभ्याम् ।

आचार्यः सुतनिधनं निशम्य संख्ये
किं शस्त्रग्रहसमये विशस्त्र आसीत् ॥ ३२ ॥

अथवा सूक्तमिदमभियुक्तैः 'प्रकृतिर्दुस्त्यजा' इति । यतः शोकान्धमनसा तेन विमुच्य क्षत्रधर्मकार्कश्यं द्विजातिधर्मसुलभो दैन्यपरिग्रहः कृतः ।'

कर्णस्तु घटनां तामन्यथैवन्यरूपयत् । स उवाच–'राजन् ! न खल्विदमेवम् । एवं किलास्याभिप्रायो यथा "अश्वत्थामा मया पृथिवीराज्येऽभिषेक्तव्यः" इति । तस्याभावाद् "वृद्धस्य मे ब्राह्मणस्य वृथा शस्त्रग्रहणम्" इति तथा कृतवान् ।'

दुर्योधनः सशिरःकम्पममन्त्रयत—'एवमिदम् ।'

स्वोक्तिसमर्थनपरः कर्णः पुनरभाषत—'एतदर्थं च कौरवपाण्डवपक्षपातप्रवृत्तमहासङ्ग्रामस्य राजकस्य परस्परक्षयमपेक्षमाणेन तेन प्रधानपुरुषवध उपेक्षा कृता । अन्यच्च राजन् ! द्रुपदेनाप्यस्य बाल्यात्प्रभृत्यभिप्रायवेदिना न स्वराष्ट्रे वासो दत्तः ।

प्राप्तौ तत्रात्रान्तरे कृपाश्वत्थामानौ । तौ वीक्ष्य दुर्योधन आसनादवतीर्य गुरुमभिवाद्य, द्रौणायनिं च परिष्वज्य, पार्श्वे उपवेश्य च, सान्त्वनापरोऽब्रवीत्–'आचार्यपुत्र ! को विशेष आवयोरस्मिन्व्यसनमहार्णवे । पश्य,

तातः स तव प्रणयवान्स पितुः सखा मे
शस्त्रे यथा तव गुरुः स तथा ममापि ।
किं तस्य देहनिधने कथयामि दुःखं
जानीहि तद्गुरुशुचा मनसा त्वमेव ॥ ३३ ॥

तत आचार्यः कुरुपतिमशंसत्—' राजन् ! सुमहान्खलु

द्रोणपुत्रेण वोढुमध्यवसितः समभरः। तदहमेवं मन्ये भवता कृतपरिकरोऽयमुच्छेत्तुं लोकत्रयमपि समर्थः, किं पुनर्यौधिष्ठिरबलम्। अतोऽभिषिच्यतां सैनापत्ये।'

दुर्योधनः प्रत्युवाच—'सुष्ठु युज्यमानमभिहितं युष्माभिः, किंतु प्राक्प्रतिपन्नोऽयमर्थोऽङ्गराजस्य।'

कृपेण भणितम्—'राजन्! असदृशपरिभवशोकसागरे निमज्जन्तमेनमङ्गराजस्यार्थे नैवोपेक्षितुं युक्तम्। अस्यापि तदेवारिकुलमनुशासनीयम्। अतः किमस्य पीडा न भविष्यति?'

द्रोणात्मजेन निजगदे—'राजन्! किमद्यापि युक्तायुक्तविचारणया?

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-
मकेशवमपाण्डवं भुवनमद्य निःसोमकम्।
इयं परिसमाप्यते रणकथाऽद्य दोःशालिना-
मपैतु नृपकाननातिगुरुरद्य भारो भुवः॥' ३४॥

कर्णो विहस्य व्याजहार—'वक्तुं सुकरमिदं दुष्करमध्यवसितुम्। बहवः कौरवबलेऽस्य कर्मणः शक्ताः।'

अश्वत्थामा प्रतिव्याहार्षीत्—'अङ्गराज! एवमिदम्। बहवः कौरवबलेऽत्र शक्ताः। किंतु दुःखोपहतः शोकावेगाद्ब्रवीमि न पुनर्वीरजनाधिक्षेपेण।'

कर्णोऽभाणीत्—'मूढ! दुःखितस्याश्रुपातः, कुपितस्य चायुधद्वितीयस्य सङ्ग्रामावतरणमुचितम्। नैवंविधाः प्रलापाः।'

संजातक्रोधोऽधुना द्रौणायनः। सोऽब्रवीत्—'अरे रे राधा-

गर्भभारभूत ! सूतापसद ! ममापि नामाश्वत्थाम्नो दुःखितस्याश्रुभिः प्रतिक्रियामुपदिशसि न शस्त्रेण। पश्य,

निर्वीर्यं गुरुशापभाषितवशात्किं मे तवेवायुधं
सम्प्रत्येव भयाद्विहाय समरं प्राप्तोऽस्मि किं त्वं यथा ?
जातोऽहं स्तुतिवंशकीर्तनविदां किं सारथीनां कुले
क्षुद्रारातिकृताप्रियं प्रतिकरोम्यस्रेण नास्त्रेण यत् ? ३५ ॥

ततो राधेयः सक्रोधमभ्यधात्—' अरे रे वाचाट ! वृथा शस्त्रग्रहणदुर्विदग्ध। वटो !

निर्वीर्यं वा सवीर्यं वा मया नोत्सृष्टमायुधम्।
यथा पाञ्चालभीतेन पित्रा ते बाहुशालिना ॥ ३६ ॥

अपि च,

सूतो वा सूतपुत्रो वा यो वा को वा भवाम्यहम्।
दैवायत्तं कुले जन्म मदायत्तं तु पौरुषम् ॥' ३७ ॥

अश्वत्थाम्ना सक्रोधमभिहितम्—' अरे रे रथकारकुलकलङ्क ! अरे राधागर्भभारभूत ! आयुधानभिज्ञ ! तातमप्यधिक्षिपसि। अथवा,

सः भीरुः शूरो वा प्रथितभुजसारस्त्रिभुवने
कृतं यत्तेनाजौ प्रतिदिनमियं वेत्ति वसुधा।
परित्यक्तं शस्त्रं कथमिति स सत्यव्रतधरः
पृथासूनुः साक्षी त्वमसि रणभीरो क्व नु तदा ? ३८ ॥

कर्णो विहस्योवाच—'एवं भीरुरहम्। रे मूढ !

यदि शस्त्रमुज्झितमशस्त्रपाणयो
न निवारयन्ति किमरीनुदायुधान् ?

यदनेन मौलिदलनेऽप्युदासितं

सुचिरं स्त्रियेव नृपचक्रसंनिधौ ॥' ३९ ॥

संक्रुद्धो द्रौणिः सकम्पममन्त्रयत—'दुरात्मन् ! राजवल्लभ ! प्रगल्भ ! सूतापसद ! असंबद्धप्रलापिन् !

कथमपि न निषिद्धो दुःखिना भीरुणा वा

द्रुपदतनयपाणिस्तेन पित्रा ममाद्य ।

तव भुजबलदर्पाध्मायमानस्य वामः

शिरसि चरण एष न्यस्यते वारयैनम् ॥' ४० ॥

एवमभिधाय स तथैव कर्तुमुत्थितः । कृपदुर्योधनौ तं मर्षयितुमाख्यातवन्तौ । अथ कर्णोऽपि सक्रोधमुत्थाय खड्गमाकृष्याभाषत—'अरे दुरात्मन् ! ब्रह्मबन्धो ! आत्मश्लाघ !

जात्या काममवध्योऽसि चरणं त्विदमुद्धृतम् ।

अनेन लूनं खड्गेन पतितं द्रक्ष्यसि क्षितौ ॥' ४१ ॥

अश्वत्थामा तदा 'अरे मूढ ! जात्या काममवध्योहम्, इयं सा जातिः परित्यक्ता' इत्युक्त्वा यज्ञोपवीतं छित्त्वा, निस्त्रिंशमाचकर्ष । उभावप्यन्योन्यं प्रहर्तुमुद्यतौ । कृपः सप्रयासं स्वभागिनेयं सान्त्वयामास । दुर्योधनकृपौ महता प्रयत्नेन तौ निवारयामासतुः । ततो दुर्योधनोऽभिदधौ—'कर्ण ! गुरुपुत्र ! कोऽयमद्य युवयोर्व्यामोहः ।'

अथो कृपेण 'वत्स ! अकालः खलु स्वबलप्रधानविरोधस्य' इत्युक्तः कृपीपुत्रो मन्त्रितवान्—'मातुल ! यद्येवम्,

अयं पापो यावन्न निधनमुपेयादरिशरैः

परित्यक्तं तावत्प्रियमपि मयाऽस्त्रं रणमुखे ।

बलानां नाथेऽस्मिन्परिकुपितभीमार्जुनभये
समुत्पन्ने राजा प्रियसखबलं वेत्तु समरे ॥' ४२ ॥

एवमभिधाय स कौन्तेयकमुत्ससर्ज ।

एवं गतेऽपि न विरराम राधेयः । स विहस्योदैरयत्—'कुलक्रमागतमेवैतद्भवादृशां यदस्त्रपरित्यागो नाम ।'

एवं प्रवृत्तेष्वधिक्षेपप्रत्यधिक्षेपेषूदात्तो ध्वनिरश्रूयत । यथा—'आः दुरात्मन् ! द्रौपदीकेशाम्बराकर्षणमहापातकिन् ! धार्तराष्ट्रापसद ! चिरस्य खलु कालस्य मत्संमुखीनमागतोऽसि क्षुद्रपशो ! क्वेदानीं गम्यते । भो भो राधेय-दुर्योधन-सौबल-प्रभृतयः पाण्डवविद्वेषिणश्चापपाणयो मानधनाः । शृण्वन्तु भवन्तः—

स्पृष्टा येन शिरोरुहे नृपशुना पाञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां पुरः ।
यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवान्
सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः ॥ ४३ ॥

तच्छ्रुत्वा द्रौणायनिः सोत्प्रासमुवाच—'अङ्गराज ! सेनापते ! जामदग्न्यशिष्य ! भुजबलपरिरक्षितसकललोक !

"हतायुधो यावदहं तावदन्यैः किमायुधैः ?
यद्वा न सिद्धमस्त्रेण मम तत्केन सेत्स्यति ?" ४४ ॥

इति वरीवर्ति तवात्मश्लाघा । इदं तदासन्नतरमेव संवृत्तम् । रक्षैनं साम्प्रतं भीमाद् दुःशासनम् ।'

कर्णः सगर्वमगदत्—'आः ! का शक्तिर्वृकोदरस्य मयि जीवति दुःशासनस्य छायामप्याक्रमितुम् ? युवराज ! न भेतव्यम् । न भेतव्यम् । अयमहमागतोऽस्मि ।'

कुरुराजोऽपि तथैवाऽऽत्मनं शश्लाघे । ततश्च स कर्णश्च दुश्शासनं परित्रातुं प्रयातौ । न च प्रतिविधातुं पारितं ताभ्याम् । भ्रातुः प्रतिज्ञाभङ्गभीरुः किरीटी समं दुर्योधनराधेयौ शरवर्षैरभिद्रुतवान् । दुर्योधनप्रियाचरणाय स्वां प्रतिज्ञां विहन्तुकामोऽपि भारद्वाजसूनुरशरीरिण्या भारत्या शस्त्रग्रहणान्निवारितः ।

[ ४ ]

दुःशासनशोणितं पीत्वा तीर्णां प्रतिज्ञैकदेशसरिद्वृकोदरेण निहतदुःशासनपीतावशेषशोणितस्नपितवीभत्सवेषः स्तोकावशिष्टप्रतिज्ञामहोत्सवोऽसाववशिष्टकुरूनायोधनार्थं मुहुः साधिक्षेपमाकारयामास । तस्य क्ष्वेडितमाकर्ण्य वित्रस्तः सूतः 'कथमासन्न एव दुरात्मा कौरवराजपुत्रमहावनोत्पातमारुतो मारुतिः । अनुपलब्धसंज्ञश्च महाराजः । कदाचिद्दुःशासन इवास्मिन्नप्ययमनार्योऽनार्थमाचरिष्यति ।' इति मनसि कृत्वा स्यन्दनं दूरमपजहार । स सरसीतटीस्थितस्य सान्द्रकिसलयस्य न्यग्रोधपादपस्याधस्ताद्रथमस्थापयत् । तत्र सरसीसरोजविलोलनसुरभिः हरिचन्दनच्छटाशीतलो मातरिश्वा ववौ । लूनकेतुं रथं तत्र स्थापयित्वा स कुरुकुलविमुखं दैवमधिक्षप्तुमारब्धः ।

दुर्योधनः शनकैः संज्ञां प्रतिपद्योदचारयत्—'आः ! शक्तिरस्ति दुरात्मनो वृकोदरहतकस्य मयि जीवति दुर्योधने प्रतिज्ञां पूरयितुम् ? वत्स दुःशासन ! न भेतव्यम्, न भेतव्यम् । अयमहमागतोऽस्मि ननु । सूत ! प्रापय रथं तमेवोद्देशं यत्र वत्सो मे दुःशासनः ।'

सूतः सकरुणं पादयोर्निपत्याब्रवीत्—'एतद्विज्ञापयामि। आयुष्मन् ! संपूर्णप्रतिज्ञेन निवृत्तेन भवितव्यमिदानीं दुरात्मना वृकोदरहतकेन।'

एतच्छ्रुत्वा कुरुपतिः सहसा भूमौ पतन् विलपंश्च, निःश्वस्य मोहमुपगतः।

ततस्तत्र समागतः शरप्रहारव्रणबद्धपट्टिकाऽलङ्कृतकायः-सुन्दरको नाम कश्चित्सैनिकः। तं वीक्ष्य कौरवोऽनुयुयुजे —'अये सुन्दरक ! कच्चित्कुशलमङ्गराजस्य ?'

सुन्दरकोऽचकथत्—'कुशलं शरीरमात्रकेण। भग्नोऽस्य मनोरथः।'

दुर्योधनेन कथितम्—'किं पर्याकुलयसि मे हृदयम् ? विस्पष्टं कथ्यताम्।'

सुन्दरकोऽकथयत्—'हा ! हतः कुमारवृषसेनः।'

तदाकर्ण्य मोहमुपयातो दुर्योधनः। पुनः संज्ञां लब्ध्वा पप्रच्छ—'भद्र सुन्दरक ! ततो वयस्येन किं प्रतिपन्नमङ्गराजेन ?'

सुन्दरको न्यवेदयत्—'ततश्च देव ! तथाविधस्य पुत्रस्य दर्शनेन संगलितमश्रुजातमुज्झित्वाऽनवेक्षितपरप्रहरणाभियोगेन स्वामिनाऽभियुक्तो धनंजयः। ततः शल्येन भणितम्— "अङ्गराज ! हततुरङ्गमो भग्नकूबरस्ते रथो न योग्यो भीमार्जुनाभ्यां सहायोद्धुम्।" ततश्च तेन परिवर्तितो रथोऽवतारितः स्वामी स्यन्दनात्, बहुप्रकारं च समाश्वासितः। स्वामिनापि सुचिरं विलप्य, अपनीयशीर्षस्थानात्पट्टिकां शरीर-

संगलितैः शोणितविन्दुभिर्लिप्तमुखं बाणं कृत्वाऽभिलिख्य प्रेषितो देवस्य संदेशः।'

दुर्योधनेन गृहीतः स्वसेनापते रुधिरपट्टिकासन्देशः। तत्राङ्कितमभूत्—

'स्वस्ति। महाराजदुर्योधनं समराङ्गणात्कर्ण एतदन्तं कण्ठे गाढमालिङ्ग्य विज्ञापयति—

"अस्त्रग्रामविधौ कृती न समरेष्वस्यास्ति तुल्यः पुमान्
भ्रातृभ्योऽपि ममाधिकोऽयममुना जेयाः पृथासूनवः।
यत्सम्भावित इत्यहं न च हतो दुःशासनारिर्मया
तं दुःखप्रतिकारमेहि भुजयोर्वीर्येण बाष्पेण वा॥'४१॥

वाचिकपत्रं वाचयित्वा सुमहद् दुःखमवाप कुरुपतिः, पृष्टवांश्च 'भद्र सुन्दरक! अथेदानीं किमारम्भोऽङ्गराजः?'

स व्यजिज्ञपत्—'अपनीतशरीरावरण आत्मवधकृतनिश्चयः पुनरपि पार्थेन सह समरं मार्गयते।'

तच्छ्रुत्वा दुर्योधन आवेगादासनादुत्तिष्ठन्नुवाच—'सूत! रथमुपनय। सुन्दरक! त्वमपि मद्वचनात्त्वरिततरं गत्वा वयस्यमङ्गराजं प्रतिबोधय "अलमतिसाहसेन। अभिन्न एवायमावयोः सङ्कल्पः।"

यावत्प्रतिष्ठते कुरुपतिस्तावदुपयातौ तत्र संजयाधिष्ठितं रथमारुह्य गान्धारीधृतराष्ट्रौ। तेन हि दुर्योधनोऽप्रतिपत्तिरजायत। स तदानीं विचारयति स्म। यथा,

'अद्यैवावां रणमुपगतौ तातमम्बां च दृष्ट्वा
घ्रातस्ताभ्यां शिरसि विनतोऽहं च दुःशासनश्च।

तस्मिन्बाले प्रसभमरिणा प्रापिते तामवस्थां
पार्श्वं पित्रोरपगतघृणः किं नु वक्ष्यामि गत्वा ॥'४६ ॥

[ ५ ]

प्राप्तो व्रीडाऽवनतमस्तको दुर्योधनो गान्धारी-धृतराष्ट्राभ्याम् । उभावपि स्पर्शेनोपेत्य तमालिङ्गितवन्तौ । शोकपरीतं सुतं संप्रहारव्यापारान्निवारयितुमुपादिशन्ती गान्धारकन्याऽभिदधे—जात ! अलं परिदेवितेन । त्वमपि तावदेकोऽस्यान्धयुगलस्य मार्गोपदेशकः । तच्चिरं जीव । किं मे राज्येन जयेन वा ?'

जनन्यनुनयमप्रतिपद्यमानेन राज्ञा प्रत्यूचे—

'मातः ! किमप्यसदृशं कृपणं वचस्ते
सुक्षत्रिया क्व भवती क्व च दीनतैषा ?
निर्वत्सले ! सुतशतस्य विपत्तिमेतां
त्वं नानुचिन्तयासि रक्षसि मामयोग्यम् ॥ ४७ ॥

नूनं विचेष्टितमिदं सुतशोकस्य ।'

संजयो योजयामास—'महाराज ! किं वाऽयं लोकवादो वितथः "न घटस्य कूपपतने रज्जुस्तत्रैव प्रक्षेप्तव्या" इति ?'

दुर्योधनोऽभ्यधात्—'अपुष्कलमिदम् । उपक्रियमाणाभावे किमुपकरणेन ?' एवमुक्त्वा स रोदितुमुपक्रान्तः ।

वृद्धकुरुरपि स्वसुतं समरान्निवर्तयन्नुपादिदेश—'वत्स ! संधत्तां भवानिदानीमपि युधिष्ठिरमीप्सितपणबन्धेन ।'

स उवाच—'तात ! तनयस्नेहवैक्लव्यादम्बा बालिशत्वेन संजयश्च काममेवं ब्रवीतु । युष्माकमप्येवं व्यामोहः । अथवा प्रभवति पुत्रनाशजन्मा हृदयज्वरः । अन्यच्च, तात !

अस्खलितभ्रातृशतोऽहं यदा तदाऽनवधीरितवासुदेवसामोपन्यासः। संप्रति हि दृष्टपितामहाचार्यानुजराजचक्रविपत्तिः स्वशरीरमात्रस्नेहादुदात्तपुरुषव्रीडावहमसुखावसानं च कथमिव करिष्यति दुर्योधनः सह पाण्डवैः संधिम्। अन्यच्च, नयवेदिन्संजय !

हीयमानाः किल रिपोर्नृपाः संदधते परान्।
दुःशासने हतेऽहीनाः सानुजाः पाण्डवाः कथम् ॥ ४८ ॥

वृद्धकौरवोऽब्रवीत्—'वत्स ! एवं गतेऽपि मत्प्रार्थनया न किंचिन्न करोति युधिष्ठिरः। अन्यच्च तेन प्रतिज्ञातमस्ति। यथा "नाहमेकस्यापि भ्रातुर्विपत्तौ प्राणान्धारयामि" इति। बहुच्छलत्वात्संग्रामस्यानुजनाशमाशङ्कमानो यदेव भवते रोचते तदेवासौ सज्जः संधातुम्।'

प्रस्तावोऽयं समर्थितः संजयेन, तदनु गान्धार्या च। परं न पारितं केनापि दुर्योधनं निर्बन्धान्निवर्तयितुम्। स व्याजहार—

'एकेनापि विनाऽनुजेन मरणं पार्थः प्रतिज्ञातवान्
भ्रातॄणां निहते शते विषहते दुर्योधनो जीवितुम्।
तं दुःशासनशोणिताशनमरिं भित्त्वा गदाकोटिना
भीमं दिक्षु न विक्षिपामि कृपणः संधिं विदध्यामहम् ॥४९॥

दुःशासनं स्मारिता मन्युपरीतमानसा गान्धारी विललाप—'हा जात दुःशासन ! हा मदङ्कदुर्ललित ! हा युवराज ! अश्रुतपूर्वा खलु कस्यापि लोक ईदृशी विपत्तिः। हा शतप्रसविनि हन्त गान्धारि ! दुःखशतं प्रसूताऽसि न, पुनः सुतशतम्।'

वृद्धकुरुणा भणितम्—'वत्स दुर्योधन! एवं विमुखेषु भागधेयेषु त्वयि चामुञ्चति सहजं मानमरिषु, त्वदेकशेष-जीविताल‌म्बनेयं तपस्विनी गान्धारी कमवलम्बतां शरणम्, अहं च ?'

इदानीं महान्कलकलोऽश्रूयत। दुर्योधन उवाच—'तात! प्रसीद। पराङ्मुखं खलु दैवमस्माकम्। यावदपरमपि किंचिदत्याहितम् न श्रावयति तावदेवाऽऽज्ञापय मां संग्रामावतरणाय।'

धृतराष्ट्रोऽभाषत—'वत्स! यद्यपि भवान्समराय कृतनिश्चयस्तथापि रहः परप्रतीघातोपायश्चिन्त्यताम्।'

कुरुपतिना प्रत्युक्तम्—

'पाण्डवैर्निहता युद्धे प्रत्यक्षं मम बान्धवाः।
ते न योग्या रहो हन्तुं यशसो नाशकश्छलः॥'५०॥

उदचरदिदानीं सुमहान्कोलाहलः। कुरूञ्शल्ययन्तं शल्यं शून्येनैव रथेन शिविरं यान्तमुपश्रुत्य दुर्योधनेन पृष्टस्तत्सूतः संभ्रान्तः कर्णनिधनं व्यजिज्ञपत्। तच्छ्रुत्वा मोहमुपागतः कुरुपतिः। गान्धार्या, संजयेन, धृतराष्ट्रेन च पर्यावस्थापितः स प्रकृतिमापद्योदैरयत्—

'मम प्राणाधिके तस्मिन्नङ्गनामाधिपे हते।
उच्छ्वसन्नपि लज्जेऽहमाश्वासे तात! का कथा? ५१॥

शोचामि शोच्यमपि शत्रुहतं न वत्सं
दुःशासनं तमधुना न च बन्धुवर्गम्।
येनातिदुःश्रवमसाधु कृतं तु कर्णे
कर्ताऽस्मि तस्य निधनं समरे कुलस्य॥' ५२॥

कुरुमाताऽवदत्—'जात ! शिथिलय तावत्क्षणं बाष्पमोक्षम् ।'

धृतराष्ट्रोऽभणत्—'वत्स ! क्षणमात्रं परिमार्जयाश्रूणि ।'

दुर्योधन उवाच—

'मामुद्दिश्य त्यजन्प्राणान्केनचिन्न निवारितः ।
तत्कृते त्यजतो बाष्पं किं मे दीनस्य वार्यते ? ५३ ॥

सूत ! केनैतदसंभावनीयमस्मत्कुलान्तकरणं कर्म कृतं स्यात् ?'

सूतेन निवेदितम्—'आयुष्मन् ! एवं किल जनः कथयति-

'भूमौ निमग्नचक्रश्चक्रायुधसारथेः शरैस्तस्य ।
निहतः किलेन्द्रसूनोरस्मत्सेनाकृतान्तस्य ॥' ५४ ॥

तच्छ्रुत्वा ववृधाते शोककोपानलौ दुर्योधनस्य । शोकजन्मा दुःसहो ज्वलनस्तमतिमात्रं दहति स्म । युद्धत्यागाङ्गीकारोभयपक्षयोः समानां विपत्तिं समर्थयमानः सोऽममन्त्रत- 'वरं संशयितो रणः ।'

धृतराष्ट्रस्तं परिष्वज्य रुदन्नवोचत्—

'भवति तनय ! सत्यं संशयः साहसेषु
द्रवति हृदयमेतद्भीममुत्प्रेक्ष्य भीमम् ।
अनिकृतिनिपुणं ते चेष्टितं मानशौण्ड !
छलबहुलमरीणां संगरं हा हतोऽस्मि ॥' ५५ ॥

गान्धार्या परिपृष्टम्—'जात ! तेनैव सुतशतकृतान्तेन वृकोदरेण समं समरं मार्गयसे ?'

'भवतु, कर्णनिहन्त्रा सममेव समरम्' इति प्रतिवदन्

दुर्योधनः सूतं रथमुपाहर्तुमादिदेश। आत्मानं चानिवारित-संपातैरश्रुवारिभिः सैनापत्येऽभिषिक्तमुदघोषयत्।

इदानीं सहसोदचारीत्सुमहान्कोलाहलः। एकरथारूढौ दुर्योधनं पृच्छन्तौ मध्यमकनिष्ठपार्थौ तत्र समापतितौ। वृकोदर उच्चैः पृच्छति स्म—'भो भोः सुयोधनानुजीविनः!

कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी

कृष्णाकेशोत्तरीयव्यपनयनमरुत्पाण्डवा यस्य दासाः।

राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं

क्वाऽऽस्ते दुर्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः?'२६॥

भीतो वृद्धकौरव उवाद—'संजय! दारुणः खलूपक्षेपः पापस्य।'

ततो कुरुराजेन समादिष्टः सूतः पाण्डवावुपसृत्य व्याहार्षीत्—'ननु भो वृकोदरार्जुनौ! एष महाराजस्तातेनाम्बया च सह न्यग्रोधच्छायायामुपविष्टस्तिष्ठति।'

अथासंमतमभूत्तत्र गमनं 'पितरौ तत्र स्तः' इति विज्ञाय पितुरुद्वेगपरिहारार्थिनो गाण्डीविनः। परं 'न युक्तमनभिवाद्य गुरून्गन्तुम्' इति मध्यमपार्थेन प्रतियोजितम्। तत्रोपगतयोस्तयोरर्जुन एवमभ्यवादयत्—

'तात! अम्ब!

सकलरिपुजयाशा यत्र बद्धा सुतैस्ते

तृणमिव परिभूतो यस्य गर्वेण लोकः।

रणशिरसि निहन्ता तस्य राधासुतस्य

प्रणमति पितरौ वां मध्यमः पाण्डवोऽयम्॥' २७॥

ततो भीमोऽपि प्रणनाम । तद्यथा—

'चूर्णिताशेषकौरव्यः क्षीबो दुःशासनासृजा ।
भङ्क्ता सुयोधनस्योर्वोर्भीमोऽयं शिरसा नतः ॥' ५८ ॥

वचोभिरेभिरुद्वेगं गतो दुःशासनजनको जगाद—'दुरात्मन् वृकोदर ! न खल्विदं भवतैव केवलं सपत्नानामपकृतम् । यावत्क्षत्रं तावत्समरविजयिनो जिता हताश्च वीराः । तत्किमेवं विकत्थनाभिरस्मानुद्वेजयसि ।'

ततो भीमेन सविनयं न्यवेदि—'तात ! अलं मन्युना ।

कृष्णा केशेषु कृष्टा तव सदसि पुरः पाण्डवानां नृपैर्यैः
सर्वे ते क्रोधवह्नौ कृत-शलभ-कुलावज्ञया येन दग्धाः ।
एतस्माच्छ्रावयेऽहं न खलु भुजबलश्लाघया नापि दर्पात्
पुत्रैः पौत्रैश्च कर्मण्यतिगुरुणि कृते तात ! साक्षी त्वमेव ॥'५९॥

संजातक्रोधो दुर्योधनोऽभ्यधात्—'अरे रे मरुत्तनय ! किमेवं वृद्धस्य राज्ञः पुरतो निन्दितव्यमात्मकर्म श्लाघसे ? अपि च,

कृष्टा केशेषु भार्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा
प्रत्यक्षं भूपतीनां मम भुवनपतेराज्ञया द्यूतदासी ।
अस्मिन्वैरानुबन्धे वद किमपकृतं तैर्हता ये नरेन्द्रा
बाह्वोर्वीर्यातिरेकद्रविणगुरुमदं मामजित्वैव दर्पः ॥'६०॥

एवमभिधाय स सक्रोधमुत्थाय हन्तुमियेष । परं धृतराष्ट्रेण धृत्वोपवेशितः । भीमोऽपि सक्रोधं प्रत्युक्तवान् । एवं प्रवृत्तयोस्तयोः कठोरवचःप्रतिवचसोः, सूर्यास्तमयात्तद्दिवसायोधनावसानघोषणा युधिष्ठिरस्य श्रुता सती भीमार्जुनौ स्वशिविरं प्रति समानिनाय ।

अथ कर्णवधं श्रुत्वाऽश्वत्थामा समुपेत्य बभाषे—राजन्दुर्योधन! कर्णेन यत् कर्णसुभगं तद्वद्धक्त्वा सङ्गरेषु यद्विहितं, तत्त्वया विदितम्। हे नृप! एषोऽधिज्यधनुर्द्रौणिरभ्यामित्रमापतितः। अधुना प्रतिकारचिन्तां त्यज।

तच्छ्रुत्वा सुयोधनः साभ्यसूयमवोचत्—'आचार्यपुत्र! भवता किलाङ्गराजस्यावसाने योद्धव्यमासीत्। सम्प्रति ममाप्यन्तं प्रतीक्षस्व। कः कर्णः, कः सुयोधनः?

एवं च विदितकर्णपक्षपातो द्रौणायनस्ततः प्रस्थितः।

द्रौणिसाहाय्यं ग्रहीतुं धृतराष्ट्रेण प्रेरितो कुरुपतिर्न कर्णमदात्। ततः स वृद्धकौरवः भारद्वाजमुपसान्त्वयितुं संजयं प्रेषितवान्। दुर्योधनः स्वसूतं सांग्रामिकं रथमुपकल्पयितुमाज्ञापयत्।

धृतराष्ट्र उवाच—'गान्धारि! इतो वयं मद्राधिपतेः शल्यस्य शिबिरमेव गच्छावः। वत्स! त्वमप्येवं कुरु।'

एवं सर्वे प्रस्थिताः।

[ ६ ]

स्थितावभूतां चिन्तितौ द्रौपदीयुधिष्ठिरौ। युधिष्ठिरो निःश्वस्योवाच—

'तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवम्।
भीमेन प्रियसाहसेन रभसात्स्वल्पावशेषे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिताः॥' ६१॥

ततः स क्रुद्धस्य वृकोदरस्यापर्युषितां प्रतिज्ञामुपलभ्य प्रनष्टस्य मानिनः कौरवराजस्य पदवीमन्वेष्टुमतिनिपुणमतीन्पर-

मार्थाभिज्ञांश्चरांस्तत्र तत्र समन्तात्समन्तपञ्चकेषु प्रेषयितुमादिष्टवान् । तत्क्षणमेव पाञ्चालकस्तत्र समागतः । स न्यवेदयत्-'प्रियमावेदयामि महाराजाय देव्यै च । स दुरात्मा देवीकेशपाशस्पर्शपातकप्रधानहेतुरुपलब्धः । प्रवर्तते भीमेन समं तज्जन्यम् ।'

विशेषं जिज्ञासुर्धर्मराजोऽवदत्—'पाञ्चालक ! कथय कथय, कथमुपलब्धः स दुरात्मा कस्मिन्नुदेशे किं वाऽधुना प्रवृत्तमिति ?' पाञ्चाल्यपि तं तत्सर्वं वर्णयितुमनुदत् ।

सोऽचकथत्—'अस्तीह देवेन हते मद्राधिपतौ शल्ये, गान्धारराजकुलशलभे सहदेवशस्त्रानलप्रविष्टे, सेनापतिनिधननिराक्रन्दविरलयोधोज्झितासु समरभूमिषु, रिपुबलपराजयोद्धतवल्गितविचित्रपराक्रमासादितविमुखारातिचक्रासु धृष्टद्युम्नाधिष्ठितासु च युष्मत्सेनासु, प्रनष्टेषु कृपकृतवर्माश्वत्थामसु, तथा दारुणामपर्युषितां प्रतिज्ञामुपलभ्य कुमारवृकोदरस्य न ज्ञायते क्वापि प्रलीनः स दुरात्मा कौरवाधमः ।

ततश्च भगवता वासुदेवेनाधिष्ठितमेकरथमारूढौ कुमारभीमार्जुनौ समन्तात्समन्तकपञ्चकं पर्यटितुमारब्धौ, तमनासादितवन्तौ च । अनन्तरं दैवमनुशोचत्सु सर्वेषु सनारायणेषु कश्चित्संविदितः कुमारस्य मारुतेराखेटकोऽन्तिकमुपेत्य कथितवान्, "अस्मिन्महतोऽस्य सरस्तीरे द्वे पदपद्धती समवतीर्णप्रतिबिम्बे । तयोरेका स्थलमुत्तीर्णा, न द्वितीया । परत्र कुमारः प्रमाणम् " इति ।

ततः ससंभ्रमं प्रस्थिताः सर्वे तमेव पुरस्कृत्य गत्वा च सरस्तीरं परिज्ञायमानसुयोधनपदलाञ्छनां पदवीमासाद्य भगवता

वासुदेवेनोक्तम्, "भो वीर वृकोदर ! जानाति किल सुयोधनः सलिलस्तम्भनीं विद्याम्। तन्नूनं तेन त्वद्भयात्सरसीमेनामधिशयितेन भवितव्यम्।"

"एतच्च वचनमुपश्रुत्य रामानुजस्य, आलोड्य सरःसलिलं भैरवं च गर्जित्वा कुमारवृकोदरेणाभिहितम्, "अरे रे ! वृथाप्रख्यापितालोकपौरुषाभिमानिन् ! पाञ्चालराजतनयाकेशाम्बराकर्षणमहापातकिन् !

जन्मेन्दोरमले कुले व्यपदिशस्यद्यापि धत्से गदां
मां दुःशासनकोष्णशोणितसुराक्षीबं रिपुं मन्यसे।
दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे
मत्त्रासान्नृपशो ! विहाय समरं पङ्केऽधुना लीयसे॥"६२॥

ततश्चैवं भाषमाणेन वृकोदरेणावतीर्य गदापरिघपाणिना तत्सरः समन्तादालोडितम्। ततः उत्थाय तस्मात्सलिलाशयात्कथयति स्म सुयोधनः—"अरे रे मारुते ! किं भयेन प्रलीनं दुर्योधनं मन्यते भवान्? मूढ ! अनिहतपाण्डुपुत्रः प्रकाशं लज्जमानो विश्रमितुमध्यवसितवानस्मि पातालम्।"

एवं चोक्ते वासुदेवकिरीटिभ्यां द्वावपि स्थलमुत्तारितौ। आसीनश्च कौरवराजः क्षितितले गदां निक्षिप्य विशीर्णरथसहस्रं निहत-कुरु-सहस्र-गज-वाजि-नर-सहस्र-कलेवर-संमर्द-संपतद्-गृध्र-कङ्क-जम्बुकमकौरवं रणस्थानमवलोक्यायतमुष्णं च निःश्वसितवान्।

ततश्च वृकोदरेणाभिहितम्—"अयि भोः कौरवराज ! कृतं बन्धुनाशदर्शनमन्युना। मैवं विषादं कृथाः—पर्याप्ताः पाण्डवाः समरायाहमसहायः—इति। सुयोधन ! पञ्चानामस्माकं यं सुयोधं मन्यसे, तेन तेऽस्तु रणोत्सवः।

एवमभिहितः सुयोधनः कुमारवृकोदरेण सममायोधनं स्वीचकार। ततश्च मण्डलैर्विचरितुमारब्धौ भीम-दुर्योधनौ, अहं च देवेन चक्रपाणिना देवसकाशमनुप्रेषितः। आह च देवो देवकीनन्दनः, "सम्प्रति निष्कण्टकीभूतं भुवनतलं परिकलयतु भवान्। अभ्युदयोचिताश्च प्रवर्त्यन्तां समारम्भाः।"'

कृष्णाऽभाणीत्—'यद्देवस्त्रिभुवननाथो भणति तत्कथमन्यथा भविष्यति!'

अथ बृहत्पार्थः जयन्धरमाकार्य समादिशत्—'देवस्य देवकीनन्दनस्य बहुमानाद्वत्सस्य मे विजयमङ्गलाय प्रवर्त्यन्तां तदुचिताः समारम्भाः। प्रियख्यापकं च पाञ्चालकं पारितोषिकेण परितोषय।'

ततो निर्गतयोर्जयन्धर-पाञ्चालकयोः पाञ्चालपुत्र्यवोचत्–'महाराज! किंनिमित्तं पुनर्नाथभीमसेनेन स दुराचारो भणितः, "पञ्चानामप्यस्माकं मध्ये येन ते रोचते तेन सह ते सङ्ग्रामो भवतु" इति। यदि माद्रीसुतयोरेकतरेण सह सङ्ग्रामस्तेन प्रार्थितो भवेत्ततोऽत्याहितं भवेत्।'

युधिष्ठिरः प्रत्यभाषत—'कृष्णे! एवं मन्यते जरासन्धघाती। हतसकलसुहृद्बन्धुवीरानुजराजन्यासु कृपकृतवर्माश्वत्थामशेषास्वेकादशस्वक्षौहिणीष्वबान्धवः शरीरमात्रविभवः कदाचिदुत्सृष्टनिजाभिमानो धार्तराष्ट्रः परित्यजेदायुधम्, तपोवनं वा व्रजेत्, सन्धिं वा पितृमुखेन याचेत। एवं सति सुदूरमतिक्रान्तः प्रतिज्ञाभारो भवेत्सकलारिपुजयस्येति। समरं प्रतिपत्तुं पञ्चानामपि पाण्डवानामेकस्यापि नैव क्षमः सुयोधनः। शङ्के चाहं गदायुद्धं वृकोदरस्यैवानेन।

सत्यं क्रोधोद्गूर्णगदस्य मारुतेः रणे सदृशो नास्ति, इयं कृतहस्तता पुनर्यथा देवे सीरिणि, तथैव कौरव्ये। उद्धतधार्तराष्ट्रनलिनीनागाय मे वत्साय स्वस्त्यस्तु। अहं तस्य सुयोधनस्य समरं शङ्के, नैवेतरेषाम्।"

अथाश्रूयत कुतश्चिच्छब्दः—'तृषितोऽस्मि भोस्तृषितोऽस्मि। संभावयतु कश्चित्सलिलच्छायाप्रदानेन माम्।'

युधिष्ठिरस्तं प्रवेशयितुमादिक्षत्। मुनिवेषधारी सोऽविद्यत चार्वाको नाम राक्षसः, सुयोधनस्य मित्रम्, पाण्डवान् वञ्चयितुकामः। युधिष्ठिरस्तमभिवाद्य, उपवेश्य जलमुपहारितवान्। तस्मिन्पादौ प्रक्षाल्योपस्पृशत्युदकं सत्यमूर्तिरन्वयुङ्क्त—'मुने! कथय, कथमेवं भवान्परिश्रान्तः?'

राक्षसोऽभाषिष्ट—'मुनिजनसुलभेन कौतूहलेन तत्र भवतां महाक्षत्रियाणां द्वन्द्वयुद्धमवलोकयितुं पर्यटामि समन्तकपञ्चकम्। अद्य तु बलवत्तया शरदातपस्यापर्याप्तमेवावलोक्य गदायुद्धमर्जुनसुयोधनयोरागतोऽस्मि।'

तच्छ्रुत्वा जयन्धरोऽभ्यधात्—'मुने! न खल्वेवम्। भीमसुयोधनयोरिति कथय।'

कपटमुनिना मन्त्रितम्—'आः! अविदितवृत्तान्त एव कथं मामाक्षिपसि?'

युधिष्ठिरेणाप्युक्तम्—'कथय, किमर्जुनसुयोधनयोरिति?'

राक्षसेन प्रत्यवादि—'वृत्तं भीमसुयोधनयोः।'

एतच्छ्रुत्वा युधिष्ठिरो द्रौपदी च मोहमुपगतौ। जयन्धरः सलिलेनासिच्य तौ समाश्वासयत्। राक्षसेन पृष्टश्च देवीं

देवं च नामतो निर्दिदेश। तदाकर्ण्य मुनिर्जगाद—'आः! दारुणमुपक्रान्तं मया नृशंसेन।'

तच्छ्रुत्वा पाञ्चाली पुनरपि विसंज्ञा समजायत। युधिष्ठिरोऽपि सास्रं सविस्तरमुदन्तजातमपृच्छत्।

कपटवेषेण भणितम्—'कौरवभीमयोर्गुरुगदाघोरध्वनौ तस्मिन् संयुगे......'

इदानीं द्रौपदी सहसोत्थायानुयुयुजे—'ततस्ततः?'

राक्षसो भूयोऽपि प्राक्रमत—'सीरी सत्वरमागतः; तस्याग्रतः संगरश्चिरमभूत्। हलिना तु प्रियशिष्यतामालम्ब्य रहसि संज्ञाऽऽहिता, यामासाद्य कुरूत्तमः दुःशासनारौ प्रतिकूलतां गतः।'

इदमाकर्ण्य भूयोऽपि मूर्च्छितौ द्रौपदीयुधिष्ठिरौ। तौ पुनरपि प्रकृतिमापद्य कथाशेषमनुयुक्तवन्तौ।

राक्षसोऽशंसत्—'ततश्च हते तस्मिन्सुक्षत्रिये वीरसुलभां गतिमुपगते समग्रसंगलितं भ्रातृवधशोकजं बाष्पं प्रमृज्य प्रत्यग्रक्षतजच्छटाचर्चितां तामेव गदां भ्रातृहस्तादाकृष्य निवार्यमाणोऽपि संधित्सुना वासुदेवेन, "आगच्छाऽऽगच्छ" इत्याहूयमानः कौरवराजेन तृतीयोऽनुजस्ते योद्धुमारब्धः। अकृतिनस्तस्य गदाघातान्निधनमुत्प्रेक्षमाणेन कामपालेनार्जुनपक्षपाती देवकीसूनुरतिप्रयत्नात्स्वरथमारोप्य द्वारकां नीतः। ततश्चाहं......'

अथ निवारयामास राक्षसं परतः श्रोतुमशक्नुवानो भीमाग्रजः। प्रेमविद्रुतमानसः सोऽनुजस्य विक्रान्तानि स्मारं स्मारं रोदितुमारब्धः। पाञ्चाल्यपि स्वनाथस्य केशसंयमन-

प्रतिज्ञां कीर्तयन्ती व्युपरतं स्वभर्तारमनुगन्तुं मनो बद्ध्वाऽभिदधे—'महाराज ! आदीपय चिताम्। त्वमपि क्षात्रधर्ममनुबध्नन्नेव नाथस्य जीवितहरस्याभिमुखो भव। अथवा यत्ते रोचते।'

दीप्तमन्युर्धर्मराजोऽमन्त्रयत—'अहमपि सम्प्रति गदामादाय यदद्य भ्रातृप्रियेणार्जुनेन कृतं तदेव विधास्ये। कृतं जयेन।'

अत्र छद्ममुनिरममन्त्रत—'राजन्! रिपुजयविमुखं ते यदि चेतस्तदा यत्र तत्र वा प्राणत्यागं कुरु। वृथा तत्र गमनम्।'

एतदसहमानो जयन्धरो व्याजहार—'धिङ् मुने! राक्षससदृशं हृदयं भवतः।'

अथ भीतश्चार्वाकश्चेतासि व्यकल्पयत् 'किं ज्ञातोऽहमनेन' इति। ततस्तेनोदीरितम्—'भो जयन्धर! तयोर्गदया खलु युद्धं प्रवृत्तमर्जुनदुर्योधनयोः। जानामि च तयोर्गदायां भुजसारम्। दुःखितस्य पुनरस्य राजर्षेरपरमनिष्टश्रवणं परिहरन्नेवं ब्रवीमि।'

ज्येष्ठपार्थेन व्याहृतम्—'साधु महर्षे! साधु। सुस्निग्धमभिहितम्।' एवमभिधाय स द्रौपदीमवदत्—'अयि पाञ्चालराजतनये! मद्दुर्नयप्राप्तशोच्यदशे ! यथा संदीप्यते पावकस्तथा सहितावेव बन्धुजनं संभावयावः।'

बहुश उक्तोऽपि परिजनो नेन्धनसंग्रहं व्यदधात्, अतो युधिष्ठिरः स्वयमेव दारुसंचयं विधाय चितामादीपितुं प्रवृत्तः। चार्वाकस्त्वात्मानं पूर्णमनोरथं समर्थ्य ततोऽपससार।

अथोदचरदेकतो दिशः कोलाहलः सशङ्खध्वनिः। अपरं-

मप्रियं परिहर्तुकामौ याज्ञसेनीयुधिष्ठिरौ चितां प्रति प्रस्थितौ। तदा युधिष्ठिर उवाच--'अयि पाञ्चालि ! अम्बायाः सपत्नीजनस्य च किंचित्संदिश्य निवर्तय परिजनम् ।'

याज्ञसेन्युदैरयत्—'महाराज ! अम्बाया एवं संदेक्ष्यामि—"यः स बक-हिडिम्ब-किर्मीर-जटासुर-जरासन्ध-विजयमल्लस्ते मध्यमपुत्रः स मम हताशायाः पक्षपातेन परलोकं गतः" इति। हला बुद्धिमतिके ! भण मम वचनेन प्रियसखीं सुभद्राम् "अद्य वत्साया उत्तरायाश्चतुर्थो मासः प्रतिपन्नस्य गर्भस्य। त्वमेवैतं कुलप्रतिष्ठापकं सावधानं रक्ष। कदापीतः परलोकगतस्य श्वशुरकुलस्यास्माकमपि सलिलबिन्दुदो भविष्यति" इति।'

युधिष्ठिरोऽप्याचष्ट—'भद्रे बुद्धिमतिके ! उच्यतामस्मद्वचनादम्बा, जतुवेश्मनि दीप्यमाने येन सुतैः सह निर्वाहिता, स लोके नास्ति। आर्य जयन्धर ! त्वया वक्तव्यौ तत्र भवन्तौ माद्रेयौ "नानुगन्तव्याऽस्मत्पदवी। पाण्डोः पिण्डान्प्रदातुं रक्षणीयं शरीरम्" इति। जयन्धर ! जयन्धर ! यदि च कदाचिद्विजयी स्यात्सोऽर्जुनस्तद्वक्तव्योऽसद्वचनाद्भवता,

"हली हेतुः सत्यं भवति मम वत्सस्य निधने
तथाऽप्येष भ्राता सहजसुहृदस्ते मधुरिपोः।
अतः क्रोधः कार्यो न खलु यदि च प्राणिषि ततो
वनं गच्छेर्मा गाः पुनरकरुणां क्षात्त्रपदवीम् ॥" ६३ ॥

अथ समिद्धो भगवान्हुताशनः। युधिष्ठिरः प्राक् पूर्वजेभ्यस्ततश्च वृकोदराय सलिलाञ्जलिमदात्। पाञ्चाल्यपि स्वभर्त्रे जलमयच्छत्।

इदानीमस्पन्दत युधिष्ठिरस्य दक्षिणाक्षि। स आसन्नतरं वृकोदरसमागमं संभावयामास।

अथाकर्णितः कुतोऽपि कोलाहलरवः। जयन्धरः समुपेत्य व्याजिज्ञपत्—'एष खलु दुरात्मा कौरवापसदः क्षतजाभिषेकपाटलिताम्बरशरीरोऽत्र भवतीं पाञ्चालराजतनयामितस्ततः परिमार्गमाण इत एवाभिवर्तते।'

गृहीतापरगदायोधनोदर्कों धर्मसुतो गाण्डीविशोकाकुलः सन् मुमूर्च्छ। याज्ञसेन्यपि स्वयंवरस्वयंग्राहदुर्ललितमवसितं विज्ञाय मोहमुपगता। संज्ञां लब्ध्वाऽपि ज्येष्ठपार्थः भूयो विलपितुमुपक्रान्तः।

कौरवाधममुपयान्तं मन्यमानो जयन्धरो पाञ्चालराजतनयां चितासमीपमुपनेतुं आत्मनाऽपि तमेवानुगन्तुं निश्चिकाय।

ततः कृष्णामन्विष्यन्तं जनं विलोक्य युधिष्ठिरः सहसोत्थाय निजगाद—'दुरात्मन्दुर्योधनहतक! आगच्छागच्छ। अपनयामि ते गदाकौशलसंभृतं भुजदर्पं शिलीमुखासारेण।

इदानीं प्राप्तस्तत्र गदापाणिः क्षतजसिक्तसर्वाङ्गो भीमसेनः। तं सुयोधनं गृह्णन्युधिष्ठिरः सनिषङ्गं धनुरुपहर्तुमाज्ञापितवान्। द्रौपदी चितामारोढुं प्रवृत्ता। वृकोदरस्तां केशेषु ग्रहीतुमियेष, परमपसृता सा। सुयोधनं ज्वलनमभिपातयितुमना युधिष्ठिरस्तं गाढमालिङ्ग्याधिक्षेप्तुं प्रवृत्तः। एवं गते भीमोऽग्रजायाऽऽत्मानमबोधयत्। प्रत्यभिज्ञातः स सर्वैरधुना। सोऽप्यग्रजस्य पादयोः पतितः।

अग्रजेन गदितम्—'वत्स! बाष्पजलान्तरितनयनत्वा-

न पश्यामि ते मुखचन्द्रम्। कथय कच्चिज्जीवति भवान्समं किरीटिना ?'

तेन प्रतिन्यगादि—'निहतसकलरिपुपक्षे त्वयि नराधिपे, जीवति भीमसेनोऽर्जुनश्च। मुञ्चतु मामार्यः क्षणमेकम्। संयमयामि तावदनेन सुयोधनशोणितोक्षितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तम्।'

युधिष्ठिरोऽनुमेने—'गच्छतु भवान्। अनुभवतु तपस्विनी वेणीसंहारम्।'

अथ मध्यमपार्थेनावधूय बद्धा वेणी। इदानीं प्राप्तौ तत्र कृष्णार्जुनौ। युधिष्ठिरेणाभिनन्दितो बलानुजो जगाद—'महाराज युधिष्ठिर!

व्यासोऽयं भगवानमी च मुनयो वाल्मीकिरामादयो
　　धृष्टद्युम्नमुखाश्च सैन्यपतयो माद्रीसुताधिष्ठिताः।
प्राप्ता मागधमत्स्ययादवकुलैराज्ञाविधेयैः समं
　　स्कन्धोत्तम्भिततीर्थवारिकलशा राज्याभिषेकाय ते॥' ६४॥

अहं पुनश्चार्वाकेण रक्षसा व्याकुलीकृतं भवन्तमुपलभ्यार्जुनेन सह त्वरिततरमायातः। निगृहीतः स दुरात्मा नकुलेन।'

व्यधायि ज्येष्ठपाण्डवस्य ससमारोहो राज्याभिषेकः समक्षं भगवतः कृष्णस्य। पूर्णाः विश्वेषामपि पाण्डुतनयानां प्रतिज्ञाः।



# रत्नावली

[१]

अभूत्पुराकल्प उदयनो नाम विश्रुतश्रवा वत्सानामधिपतिः। स कौशाम्ब्यां वसति स्म। बभूव च वासवदत्ता नाम प्रख्यातनृपतेः प्रद्योतस्य तनया तस्य पट्टरमणी। दृढमनुरक्तो यौगन्धरायणोऽवर्तिष्ट तस्य प्रधानामात्यः। अस्त्येव सर्वथैवावितथा सर्वलोकप्रत्ययं गताऽभियुक्तोक्तिर्यथा,

"द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः॥" १॥

अन्यथा क्व सिद्धादेशप्रत्ययप्रार्थितायाः सिंहलेश्वरदुहितू रत्नावल्याः समुद्रे प्रवहणभङ्गनिमग्नायाः फलकासादनम्; क्व च कौशाम्बीयेन वणिजा सिंहलेभ्यः प्रत्यागच्छता तदवस्थायाः संभावनम्; रत्नमालाचिह्नायाः प्रत्यभिज्ञानात्तत्रानयनं च। सर्वकार्यधुरंधरेण यौगन्धरायणेनाऽपि रत्नावली देवीहस्ते सगौरवं निक्षिप्ता। 'बाभ्रव्योऽपि कञ्चुकी सिंहलेश्वरामात्येन वसुमतिना सह कथं कथमपि समुद्रादुत्तीर्य कोसलोच्छित्तये गतवता रुमण्वता मिलितः' इति तेन श्रुतमभूत्।

अथ कदाचिन्मदनमहमहीयांसं पुरजनप्रमोदमवलोकयितुं प्रासादाभिमुखं प्रस्थितो प्रियवयस्यवसन्तकानुयातो मही-

पतिरुदयनः । तदानीं मधुरमभिहन्यमानमृदुमृदङ्गानुगत-संगीतमधुरः पुरः पौराणां समुदचरच्चर्चरीध्वनिः । परां कोटिमध्यरोहत्प्रमोदः पौराणाम् कौशाम्बी तदा कुङ्कुम-क्षोदगौरैः कीर्णैः पिष्टातकौघैः कृतदिवसमुखेवावाभासत। सर्वतो धारायन्त्रविमुक्तसंततपयःपूरस्नुते प्राङ्गणे क्षणं सान्द्रविमर्दकर्दमकृतक्रीडे अजायेताम् । जनैः कुट्टिम-मुद्दामप्रमदाकपोलनिपतत्सिन्दूररागारुणैश्चरणन्यासैः सैन्दूरी-क्रियते स्म ।

दृश्योऽसौ प्रमोदमतनोदुदयनवसन्तकयोः । तदा मदनिका-चूतलतिके आगत्य विशांपतेर्निवेदितवत्यौ—'भर्तः ! देवी विज्ञापयति, "अद्य खलु मया मकरन्दोद्यानं गत्वा रक्ताशोक-पादपतले संस्थापितस्य भगवतः कुसुमायुधस्य पूजा निर्वर्त-यितव्या । तत्राऽऽर्यपुत्रेण संनिहितेन भवितव्यम् ।" '

हर्षभरमनुप्राप्तो मेदिनीदयितो निजगाद—'मदनिके ! गम्यतां देव्यै निवेदयितुम् "अयमहमागत एव मकरन्दो-द्यानम्" इति ।'

प्राप्तः सवयस्यो जगतीदयितो मकरन्दोद्यानम् । क्षणा-देव तत्र समागता काञ्चनमालया पूजोपकरणहस्तया साग-रिकया चानुगम्यमानोज्ज्वलवेषा वासवदत्ता । पथि व्रतर्ति कामपि निर्दिशन्ती काञ्चनमाला ललाप—'पश्यतु भर्त्री । इयं खलु सा निरन्तरोद्भिन्नकुसुमशोभिनी भर्त्र्या परिगृहीता माधवी लता । एषाऽपरा नवमालिका लता यस्या अकाल-कुसुमसमुद्गमश्रद्धालुना भर्त्राऽनुदिनमायास्यत आत्मा ।'

परिक्रम्य राज्याऽऽज्ञापितम्—'अयं स रक्ताशोकपादपो

यत्राहं पूजां निर्वर्तयिष्ये। तत्पूजानिमित्तान्युपकरणानि मे उपानय।'

उपसृत्य सागरिकया गदितम्—'भर्त्रि! एतत्सर्वं सज्जम्।'

सागरिकां निरूप्यैवं समजायत महिष्या मनसि "अहो प्रमादो परिजनस्य! यस्यैव दर्शनपथात्प्रयत्नेन रक्ष्यते तस्यैव दृष्टिगोचरपतिता भवेत्। भवतु। एवं तावद्भणिष्यामि—'सागरिके! कस्मात्त्वमद्य मदनमहोत्सवपराधीने परिजने सारिकामुज्झित्वेहाऽऽगता। तत्तत्रैव लघु गच्छ। एतदपि सर्वं पूजोपकरणं काञ्चनमालाया हस्ते समर्पय।'

सागरिकैवं समादिष्टा ततः प्रस्थिता। परं कतिचित्पदानि गत्वा तया व्यचारि—'सारिका मया पुनः सुसंगताया हस्ते समर्पिता। एतदप्यस्ति मे प्रेक्षितुं कौतूहलम्। "किं यथा तातस्यान्तःपुरे भगवाननङ्गोऽर्च्यते, अत्रापि तथैव किमन्यथा" इति।' एवं विमृश्यालक्षिता भूत्वा प्रेक्षितुमध्यवसिता सा यावत्पूजासमयो भवेत्तावत्कुसुमान्यवचेतुं प्रारब्धा।

अशोकमूले प्रतिष्ठापिते काञ्चनमालया भगवति प्रद्युम्ने विश्रान्तेन नूपुरशब्देन देवीं समागतां तर्कयित्वोदयनोऽपि तत्र समेतः। वासवदत्ताऽपि तमुपवेश्य काञ्चनमालोपनीतैः पूजोपकरणैर्भगवन्तं मकरकेतनमर्चयित्वा स्वभर्तारमपि कुसुमैर्विलेपनेन च सत्कृतवती।

गृहीतकुसुमा सागरिका सिन्धुवारविटपेनापवारितशरीरा भूत्वा पार्थिवं पश्यन्ती तमेव प्रत्यक्षीभूतं कुसुमायुधं मन्यमाना निजगाद—'कथं प्रत्यक्ष एवापूर्वः कुसुमायुधः?

अस्माकं तातस्यान्तःपुरे चित्रगतोऽर्च्यते। इह प्रत्यक्षीकृतः। तदहमप्येभिः कुसुमैरिह स्थितैव भगवन्तं कुसुमायुधं पूजयिष्ये।' एवं च विचार्य कुसुमानि प्रक्षिप्य सा प्रार्थयत—'नमस्ते भगवन् कुसुमायुध! शुभदर्शनो मे भविष्यसि। दृष्टं यद् द्रष्टव्यम्। अमोघदर्शनो मे भविष्यासि।' इति प्रणम्य साऽपरजनदृष्टिं वारयन्ती प्रासादं प्रस्थिताऽपि वैतालिकस्तवेन तं राजानं विज्ञाय परिवृत्य तं विलोक्य सस्पृहमशंसीत्—'कथमयं स राजोदयनो यस्याहं तातेन दत्ता। तत्परप्रेषणकृशमपि मे शरीरमेतस्य दर्शनेनेदानीं बहुमतं संवृत्तम्।'

अथ संध्यातिक्रममुपलक्ष्य प्रस्थिताः सर्वे आवासाभ्यन्तरम्। सागरिकाऽपि भवनं प्रति त्वरायिता। एवं च भवति स्म तदा तच्चेतासि 'हा धिक्! मन्दभागिन्या मया प्रेक्षितुमपि चिरं न पारितोऽयं जनः।'

[ २ ]

वासवदत्ताया अन्यतमा सखी सुसंगता सागरिकायां दृढमनुररञ्जे। तस्या हस्ते सारिकां निक्षिप्य गता सागरिका नातिचिरं निवृत्ता। तेन सा चिन्ताव्यापृता तामन्वेष्टुमारब्धा पथिसमापतिताया निपुणिकायाः श्रुतवती—'दृष्टा मया ते प्रियसखी सागरिका गृहीतसमुद्गकचित्रफलकवर्तिका समुद्विग्नैव कदलीगृहं प्रविशन्ती।

सुसंगताऽपि कदलीगृहं प्रविश्य गुर्वनुरागोत्क्षिप्तहृदयायाः किमप्यालिखन्त्याः स्वसख्या दृष्टिपथं परिहृत्य निरूपयन्ती महीपालमालिखितं दृष्ट्वा विस्मयमुपगता परितुष्टैवमकरोच्चेतासि

"साधु सागरिके साधु ! अथवा न कमलाकरमुज्झित्वा राजहंस्यन्यस्मिन्नभिरमते ।"

सागरिका मन्दमगदत्—'आलिखितो मयैषः । किं पुनरनवरतनिपतद्बाष्पसलिलेन मे दृष्टिः प्रेक्षितुं न प्रभवति ।'

अथ सुसंगता तस्या अश्रूणि प्रममार्ज । सागरिकाऽपि मुखमुत्तानीकृत्य सुसंगतां वीदयोत्तरीयेण फलकं प्रच्छादयन्ती स्मितं विधाय 'कथं प्रियसखी सुसंगता' इत्यभिदधत्युत्थाय हस्ते गृहीत्वा तामुपवेशयामास ।

सुसंगतोपविश्य बलात्फलकमाकृष्य पृष्टवती—'सखि ! क एष त्वयाऽत्र चित्रफलक आलिखितः ?'

व्रीडिता सागरिका प्रत्यब्रवीत्—'प्रवृत्तमदनमहोत्सवे भगवाननङ्गः ।'

प्रत्युत्तरपद्वी सुसंगता सस्मितं शशंस—'अहो ते निपुणत्वम् ! किं पुनः शून्यमिव चित्रं प्रतिभाति ? तदहमप्यालिख्य रतिसनाथं करिष्ये ।'

एवमभिधाय सा वर्तिकां गृहीत्वा रतिव्यपदेशेन सागरिकामालिलेख । तद्वीक्ष्य तत्सखी सासूयमवोचत्—'सुसंगते ! कुतस्त्वयाऽत्राहमालिखिता ।'

सागरिकया विहस्योक्तम्—'सखि ! किमकारणे कुप्यासि ? यादृशस्त्वया कामदेव आलिखितस्तादृशी मया रतिरालिखिता ।'

सागरिकाऽपि 'ननु ज्ञातास्मि प्रियसख्या' इति विभावयन्ती व्याजहार—'प्रियसखि ! महती खलु मे लज्जा । तत्तथा कुरु यथा न कोऽप्यपर एतद्वृत्तान्तं जानातीति ।'

सखीमाश्वासयन्ती सुसंगताऽगदत्–'सखि ! मा लज्जस्व। ईदृशस्य कन्यारत्नस्यावश्यमेवेदृशे वर अभिलाषेण भवितव्यम्। तथापि यथा न कोऽप्यपर एतद्वृत्तान्तं ज्ञास्यति तथा करोमि। एतस्याः पुनर्मेधाविन्या सारिकाया अत्र सावधानया भवितव्यम्। कदाचिदेषाऽऽलापस्य गृहीताक्षरा कस्यापि पुरतो मन्त्रयिष्यते।'

ततः सागरिका स्वसखीं मदनेनातिमात्रं बाधितां लक्षयन्ती हृदये हस्तं दत्त्वा तां पर्यवस्थापयामास। अत्रान्तरे प्रभ्रष्टः सवङ्गोऽङ्गनानां दत्तातङ्कोऽश्वपालैः सम्भ्रमादनुसृतसरणिस्तत आपतितः। तमतिवाहयितुं प्रविष्टे तमालविटपान्धकारे ते सख्यौ। चित्रफलकस्तु सम्भ्रमे तत्रैवोज्झितः।

दधिभक्तलम्पटो वानरस्तत्रागत्य पञ्जरमुद्घाट्यातिक्रान्तः। मेधाविन्यप्युड्डीनाऽन्यतो जगाम। 'अस्यालापस्य गृहीताक्षरा कस्यापि पुरतो मन्त्रयिष्यते' इति सभये सागरिकासुसंगते तां लघ्वनुसस्रतुः। परं यावदेते तत्र प्राप्नुतस्तावदायात्तत्र वसन्तकः। स नवमालिकां पश्यन्विस्मितो व्याजहार—'ही ही भोः! आश्चर्यम्! आश्चर्यम्! साधु रे श्रीखण्डदास धार्मिक साधु! येन दत्तमात्रेणैव तेन दोहदेनेदृशी नवमालिका संवृत्ता येन निरन्तरोद्भिन्नकुसुमगुच्छशोभितविटपोपहसन्तीव लक्ष्यते देवीपरिगृहीतां माधवीलताम्। तद्यावद्गत्वा प्रियवयस्यं निवेदयामि।'

एवं प्रस्थितो वसन्तकः। सोऽल्पेनैव कालेन दोहदस्य लब्धप्रत्ययतया परोक्षामपि तां नवमालिका प्रत्यक्षामिव कुसुमितां [illegible] हर्षोत्फुल्ललोचनमुदयनं तत्राऽऽयान्तमात-

वान्। राजा प्रियनिवेदकं वसन्तकं सममादाय नवमालिकां प्रति प्रयातः। उद्याने विटपिविटपमधिष्ठिता सारिका किमपि रमणीयं व्याहरति स्म। तदवधानेन श्रुत्वा वसन्तकोऽवदत्—'भो वयस्य! श्रुतं त्वया यदेतया मन्त्रितम्। एषा भणति "सखि! क एष त्वयाऽऽलिखितः? सखि! प्रवृत्तमदनमहोत्सवे भगवाननङ्गः" इति। पुनरपि भणति "सखि! कस्मात्त्वयाऽहमत्रालिखिता? सखि! किमकारणे कुप्यसि? यादृशस्त्वया कामदेव आलिखितस्तादृशी मया रतिरालिखिता' इति।

तच्छ्रुत्वेलावल्लभः स्वोन्नयमुपन्यस्तवान्—'वयस्य! एवं तर्कयामि "कयाऽपि हृदयवल्लभोऽनुरागादभिलिख्य कामदेवव्यपदेशेन सखीपुरतोऽपह्नुतः। तत्सख्याऽपि प्रत्यभिज्ञाय वैदग्ध्यादसावपि तत्राऽऽलिख्य रतिव्यपदेशेन दर्शिता" इति।

छोटिकां ददन्वसन्तकोऽवदत्—'भो वयस्य! युज्यते खल्वेतत्।'

सारिका पुनरपि व्याहर्तुमुपक्रान्ता उभौ शुश्रुवतुः। 'सखि! मा लज्जस्व। ईदृशस्य कन्यारत्नस्यावश्यमेवेदृशे वरेऽभिलाषेण भवितव्यम्' इति श्रुत्वा वसन्तकेनावादि–'भो वयस्य! यैषाऽऽलिखिता सा खलु कन्या दर्शनीया। मा त्वं पाण्डित्यगर्वमुद्वह। अहं त एतस्या मुखाच्छ्रुत्वा सर्वं व्याख्यास्यामि।' तस्या लपितमाकर्ण्य स उवाच—'वयस्य! ध्रुवमत्र भवन्तमेव कुसुमचापव्यपदेशेन निह्नुतवती सा दुर्लभजनानुरागसंतप्ता परवशा मरणमेवैकं शरणं मन्यमाना कन्या।'

एवमभिधायोच्चैर्हस्ततालं दत्त्वा विजहास वसन्तकः। मेधाविनी सारिकैवं वित्रासितोड्डीय कदलीगृहं गता। एतावपि तामनुसरन्तौ तत्र जग्मतुः। तत्र वसन्तकस्य दृष्टिस्तस्मिंश्चित्रफलके पतिता। स राजानं तत्रालिखितं वीक्ष्य भृशमहृष्यत्। सोऽवदत्—'एतत्तद्यन्मया भणितं त्वमेवात्रालिखितः। अन्यथा कोऽन्यः कुसुमचापव्यपदेशेन निह्नूयत इति? साऽपि कन्यात्रैवालिखिता।'

महीपतिश्चित्रं बलाद् गृहीत्वा विलोक्य च विस्मयमुपगतोऽनेकविधं श्लाघमान उवाच—

'विधायापूर्वपूर्णेन्दुमस्या मुखमभूद् ध्रुवम्।
धाता निजासनाम्भोजविनिमीलनदुःस्थितः॥'२॥

अत्रान्तरा समागते तत्र प्रतिच्छन्दमादातुं सागरिकासुसंगते। राजवयस्ययोरालापं श्रुत्वा सुसंगता व्याहार्षीत्—'सखि! दिष्ट्या वर्धसे। एष ते हृदयवल्लभस्त्वामेव वर्णयति।'

सलज्जया सागरिकया गदितम्—'सखि! कस्मात्परिहासशीलतयेमं जनं लघुं करोषि?'

ततः क्ष्मापतिविदूषकयोरुत्तरमालापमाकर्ण्यातिभूमिं गतः सागरिकायां नृपानुराग इति कन्यकाभ्यां व्यज्ञायि। सुसंगता प्रतिकृतिमानेतुं तत्र गता।

तस्यां तत्रोपसृतायामुदयनः फलकं पटान्तेनाच्छाद्य तामभिनन्द्य पृष्टवान्—'कथमिहस्थोऽहं भवत्या ज्ञातः?'

तया विहसन्त्या व्याहृतम्—'न केवलं देवः। चित्रफलकेन सह सर्वो वृत्तान्तोऽपि मया विज्ञातः। तस्माद्देव्यै गत्वा निवेदयामि।'

एवमभिधाय सा प्रातिष्ठत। भीतो वसन्तको मुक्त्वा गर्भदासीं परितोषयितुं राजानं मन्त्रितवान्। सोऽपि तां हस्ते गृहीत्वाऽकथयत्—'सुसंगते! क्रीडामात्रमेतत्। अत्र-रणे त्वया देवी न व्यथयितव्या। इदं ते पारितोषिकम्।' इत्युक्त्वा स कर्णादवतार्याभरणं दातुमियेष।

तयोक्तम्—'अलं शङ्कया, एतेन च भर्तुः प्रसादेन कृतिन-मेव। एष पुनर्मे गुरुः प्रसादो यत् "कस्मात्त्वयाऽहमा-लिखिता" इति भणित्वा कुपिता मे प्रियसखी सागरिका। तद्गत्वा प्रसादयत्वेनां भर्ता।'

अनन्ताकान्तः ससम्भ्रममुत्थायान्वयुङ्क्त—'क्वासौ! क्वासौ?'

सुसंगता वसुधाधिपं तत्र निनाय। चमत्कृतौ सागरिका-लावण्यं वीक्ष्योदयनवसन्तकौ। सुसंगतोवाच—'भर्तः! अतिकोपना खल्वेषा। तद्धस्ते गृहीत्वा प्रसादयैनाम्।' स तथैव विहितवान्।

तदा वसन्तकेनाभिहितम्—'भोः! एषा खलु त्वयाऽपूर्वा श्रीः समासादिता।'

राज्ञा प्रत्यवादि—'वयस्य! सत्यम्!

श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः।
कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवः?' ३॥

सुसंगता स्वसखीमाचख्यौ—'अतिनिष्ठुरेदानीमसि त्वं यैवं भर्त्रा हस्ते गृहीताऽपि कोपं न मुञ्चसि।'

सागरिकया सभ्रूभङ्गं भणितम्—'अयि सुसंगते! अद्यापि न विरमसि?'

राजा जगाद—'अयि प्रसीद। न खलु युक्तः सखीजन एवंविधः कोपानुबन्धः।'

वसन्तकोऽशंसीत्—'एषा खल्वपरा देवी वासवदत्ता।'

राजा सचकितं सागरिकाया हस्तं मुमोच। सागरिका सुसंगतेऽपि ससम्भ्रमं निरक्रामताम्।

इलावल्लभः पार्श्वतोऽवलोक्य ललाप—'वयस्य! क्व सा देवी वासवदत्ता?'

तेनोक्तम्—'भोः! न जानामि क्व सा। मया "एषा खल्वपरा देवी वासवदत्ताऽतिदीर्घरोषतया" इति भणितम्।'

दुःखितो वसुधाधीशस्तमधिचिक्षेप—'धिङ् मूर्ख!

प्राप्ता कथमपि दैवात्कण्ठमनीतैव सा प्रकटरागा।

रत्नावलीव कान्ता मम हस्ताद् भ्रंशिता भवता॥'४॥

अथाऽयाता तत्र समापत्त्या स्वभर्त्रा परिगृहीतां नवमालिकामवलोकयितुमुत्सुका सकाञ्चनमाला वासवदत्ता। सा रसारमणस्य शब्दं श्रुत्वा तमुपससर्प प्रणनाम च। राज्ञाऽऽज्ञप्तो वसन्तकश्च चित्रफलकं कक्षायां प्रक्षिप्योत्तरीयेण प्रच्छादितवान्।

राज्ञी जगाद—'आर्यपुत्र! अथ कुसुमिता नवमालिका?'

तेनोक्तम्—'देवि! प्रथममिहागतैरप्यस्माभिस्त्वं चिरयसीति नैव दृष्टा। तदेहि। सहितावेव तां पश्यावः।'

तथोक्ता वासवदत्ता निर्वर्ण्याभणत्—'आर्यपुत्र! मुखरागादेव मया ज्ञातं "कुसुमिता नवमालिका" इति। तन्न गमिष्यामि।'

एतदाकर्ण्य 'ही ही भोः! जितमस्माभिः' इत्युच्चैरुच्चार्य

बाहू प्रसार्य भृशमनृत्यद्वसन्तकः। फलकस्तु नृत्यतस्तस्य कक्षान्तराद् भूमौ पपात। काञ्चनमाला तद् गृहीत्वा निरूप्यापवार्य भर्त्त्र्या अदर्शयत्। साऽपवार्य बभाषे—'काञ्चनमाले! अयमार्यपुत्रः। इयं पुनः सागरिका। किं न्वेतत्?' ततः सकोपहासं राजानं पर्यपृच्छत्—'आर्यपुत्र! केनेदमालिखितम्?'

वसन्तकोऽवदत्—'भवति! माऽन्यथा संभावय। "आत्मा किल दुःखेनाऽऽलिख्यते" इति मम वचनं श्रुत्वा प्रियवयस्येनैतदालेख्यविज्ञानं दर्शितम्।'

अर्थपतिरपि वसन्तकोक्तं समर्थयामास।

ततः फलकं निर्दिशन्ती वासवदत्ताऽवदत्—'आर्यपुत्र! एषाऽपि याऽपरा, तव समीप आलिखिता, तत्किमार्यवसन्तकस्य विज्ञानम्?'

वसुमतीपतिः सस्मितमशंसीत्—'देवि! अलमन्यथा शङ्कया। इयं हि काऽपि कन्यका स्वचेतसैव परिकल्प्यालिखिता। न तु दृष्टपूर्वा।'

वसन्तकोऽब्रवीत्—'भवति! सत्यम्, सत्यम्! शपे ब्रह्मसूत्रेण यदीदृशी कदाप्यस्माभिर्दृष्टपूर्वा।'

अत्र काञ्चनमालाऽपवार्यावोचत्—'भर्त्त्रि! घुणाक्षरमपि कदापि संभवत्येव?'

रसारमणरमणी तां बभाण—'अयि ऋजुके! वसन्तकः खल्वेषः। न जानासि त्वमेतस्य वक्रभणितानि।' ततः सा प्रकाशमवोचत्—'आर्यपुत्र! मम पुनरेतच्चित्रफलकं प्रेक्षमाणायाः शीर्षवेदना समुत्पन्ना। तद्गमिष्याम्यहम्।'

प्रस्थितां तामनुनयन्नरपतिः पटान्तेन गृहीत्वा जगाद—'देवि !

प्रसीदेति ब्रूयामिदमसति कोपे न घटते
करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः ।
न मे दोषोऽस्तीति त्वमिदमपि च ज्ञास्यसि मृषा
किमेतस्मिन्वक्तुं क्षममिति न वेद्मि प्रियतमे !' १ ॥

वासवदत्ता तु साविनयं पटान्तमाकर्षन्ती 'आर्यपुत्र ! माऽन्यथा संभावय । सत्यमेव मां शीर्षवेदना बाधते' इत्यभिधाय प्रस्थितैव । तां प्रसादनपरः पार्थिवोऽपि ततः प्रयातः ।

[ २ ]

कृत्यविद्वसन्तकश्चित्रशालिकाद्वारे सुसंगतां समेत्य स्वभर्तृविषमावस्थागतमालपँस्तामुवाद—'सुसंगते ! न खलु सागरिकां वर्जयित्वाऽन्यत्किमपि प्रियवयस्यस्यास्वस्थतायाः कारणम् । तच्चिन्तयात्र प्रतीकारम् ।'

साऽचकथत्—'अद्य खलु देव्या चित्रफलकवृत्तान्तशङ्कितया सागरिकां रक्षितुं मम हस्ते समर्पयन्त्या यन्नेपथ्यं मम प्रसादीकृतं तेनैव विरचितभक्तिनीवेषां सागरिकां गृहीत्वाऽहमपि काञ्चनमालावेषधारिणी भूत्वा प्रदोष इहागामिष्यामि । त्वमपीहैव चित्रशालिकाद्वारे मां प्रतिपालयिष्यसि । तदा माधवीलतामण्डपे तया सह भर्तुः समागमो भविष्यति ।'

आलापोऽयं श्रुतो राजकुलात्प्रतिनिवर्तमानया काञ्चनमालया । सा चोदन्तमिमं स्वभर्त्र्यै निवेदितवती ।

हृष्यन्वसन्तकोऽनन्ताकान्तमुपससर्प । तस्माद्वार्तामुपश्रुत्य प्रसीदन्नसेश्वरस्तस्मै हस्तादपनीय कटकं ददौ । तदानी-

मस्तगिरिशिखरकाननमनुसरन्नभूद्भगवान्सहस्ररश्मिः। प्रस्थितौ तौ माधवीलतामण्डपं गत्वा प्रियतमासंकेतावसरं प्रतिपालयितुम्। प्रासरत्तदा बहलीकृताविरलराजिसंनिवेशः पूर्वदिशं प्रच्छादयंस्तिमिरसंघातः। लतामण्डपं प्राप्य विहिताऽऽसतिः मसृणमरकतमणिशिलाकुट्टिमे महीपतिना। वसन्तकस्तु देवीवेषधारिणीं सागरिकामानेतुं प्रस्थितः। उदयन उत्कण्ठानिर्भरं तं प्रत्यपालयत्।

अत्रान्तरे प्राप्ते तत्र वासवदत्ता काञ्चनमाले काञ्चनमाला छोटिकां ददती वसन्तकस्य संज्ञामकरोत्।

वसन्तकोऽपि सहर्षं तामुपसृत्य सस्मितं बभाषे—'सुसंगते! सुष्ठु खलु कृतस्त्वयैष काञ्चनमालाया वेषः। अथ सागरिकेदानीं कुत्र ?'

काञ्चनमालाऽङ्गुल्या दर्शयन्ती निर्दिदेश—'नन्वेषा।' तां दृष्ट्वा वसन्तकः सविस्मयमुवाच—'एषा स्फुटमेव देवी वासवदत्ता।'

अथ 'कथं ज्ञातास्मि ?' इत्यभूच्छङ्किताया वासवदत्तायाश्चेतसि। परं वसन्तकश्छोटिकां दत्त्वोवाच—'भवति सागरिके! इत आगच्छ। त्वरताम्, त्वरताम्। एष खलु पूर्वदिश उद्गच्छति भगवान्मृगलाञ्छनः।'

प्रचलिते ते उभे वसन्तकेन समम्। नृपमुपेत्य आह स्म—'भो वयस्य! दिष्ट्या वर्धसे। एषा खलु मयानीता सागरिका।

राजा सहर्षं सहसोत्थायाकथयत्—'वयस्य! क्वासौ ? क्वासौ ?'

वसन्तकेनोक्तम्—'नन्वेषा।'

उदयनो वासवदत्तामुपेत्य प्रोवाच—'प्रिये सागरिके ! आह्लादकराखिलाङ्गि ! त्वं रभसान्निःशङ्कं मामालिङ्गयानङ्गतापविधुराणि मेऽङ्गानि निर्वापय । एह्येहि ।'

वासवदत्ता त्वश्रूणि मुञ्चन्ती स्थितैव ।

वसन्तकेनोदितम्—'भवति सागरिके ! विश्रब्धा भूत्वा प्रियवयस्यमालप । अद्यापि तावदस्य नित्यरुष्टाया देव्या वासवदत्ताया दुष्टवचनैः कटुकिते श्रोत्रे साम्प्रतं सुखयतु तव मधुरवचनोपन्यासः ।'

एतदाकर्ण्य वासवदत्ताऽपवार्य सरोषस्मितं बभाषे—'काञ्चनमाले ! अहमीदृशी कटुभाषिणी । आर्यवसन्तकः पुनः प्रियंवदः !'

वसन्तक उवाच—'भो वयस्य ! प्रेक्षस्व, प्रेक्षस्व । एष खलु कुपितकामिनीकपोलसंनिभः पूर्वदिशं प्रकाशयन्नुदितो भगवान्मृगलाञ्छनः ।'

धराधवोऽभिदधौ—'प्रिये सागरिके ! पश्य । त्वद्वदनापहृतकान्तिसर्वस्वो निशानाथः शैलशिखरमारुह्य प्रतिकर्तुमूर्ध्वंकर इव पुरस्तात्स्थितः ।'

अथ वासवदत्ता सरोषमवगुण्ठनमपनीयावदत्—'आर्यपुत्र ! सत्यमेवाहं सागरिका । त्वं पुनः सागरिकोत्कीर्णहृदयः सर्वमेव सागरिकामयं प्रेक्षसे ।'

राजा सवैलक्ष्यमपवार्यावदत्—'कथं देवी वासवदत्ता ! वयस्य ! किमेतत् ?'

वसन्तकः सविषादमुवाच—'भो वयस्य ! किमपरम् ! अस्माकं जीवितसंशयो जात एषः ।'

एवं गते क्षितीश्वर उपविश्याञ्जलिं बध्वाऽनुनेतुमारब्धः —'प्रिये वासवदत्ते ! प्रसीद प्रसीद ।'

वासवदत्ता तु तन्मुखाभिमुखं हस्तौ प्रसार्यांश्रूणि विचारयन्ती व्याहार्षीत्—'आर्यपुत्र ! मैवं भण। अन्यगतानीमान्यक्षराणि ।'

वसन्तको न्यवेदयत्—'भवति ! महानुभावा खलु त्वम् । तत्क्षम्यतां तावदेकोऽपराधः प्रियवयस्यस्य ।'

राज्ञ्या प्रत्युक्तम्—'आर्यवसन्तक ! ननु प्रथमसंगमे विघ्नं कुर्वत्या मयैवैतस्यापराद्धम् ।'

वसुधेश्वरो व्यजिज्ञपत्—'देवि ! एवं प्रत्यक्षव्यलीकः किं ब्रवीमि ? तथापि विज्ञापयामि ।' एवमभिदधदेव चरणयोः पतन्स उवाच—'देवि ! तव चरणयोर्लाक्षाकृतामाताम्रतां विलक्षोऽहमेषोऽपनयामि । परमयि मुखेन्दुबिम्बे ! कोपोपरागजनितां तां हर्तुं तु तदैव क्षमो यदि मयि करुणा स्यात् ।'

हस्तेन वारयन्ती वासवदत्ताऽऽवेदयामास—'आर्यपुत्र ! उत्तिष्ठोत्तिष्ठ । निर्लज्जः खलु स जनो य आर्यपुत्रस्येदृशं हृदयं ज्ञात्वा पुनरपि कुप्यति । तत्सुखं तिष्ठत्वार्यपुत्रः । गमिष्याम्यहम् ।'

एवमाभाष्य गन्तुमनसं महिषीं काञ्चनमाला लपाप—'भर्त्रि ! कुरु प्रसादम् । एवं चरणपतितं महाराजमुज्झित्वा गताया देव्याऽवश्यं पश्चात्तापेन भवितव्यम् ।'

देव्योदितम्—'अपेह्यपण्डिते ! कुतोऽत्र प्रसादस्य पश्चात्तापस्य वा कारणम् ? तदेहि । गच्छावः ।'

क्षमापतिः पुनरपि राज्ञीं क्षमां ययाचे, परं साऽप्रसन्नैव गता।

चिन्ताकुलोऽचलापालो ललाप—'अस्मत्प्रीतिरनुदिनं बहुमानात्समारूढा वरीवर्ति। अकृतपूर्वमिदं व्यलीकं मया कृतं वीक्ष्यासहनाऽप्रिया ध्रुवमद्य जीवं मुञ्चति। प्रकृष्टस्य प्रेम्णः स्खलितमविषह्यं भवति नाम।'

वसन्तकेनाप्युक्तम्—'भो रुष्टा देवी किं करिष्यतीति न जानामि। सागरिका पुनर्दुष्करं जीविष्यतीति तर्कयामि।'

वासवदत्तावेषधारिणी सागरिका तत्रायान्ती स्ववृत्तावगमनभिया सास्रमाचिन्तयत्—'वरमिदानीं स्वयमेवात्मानमुद्बध्यो परता न पुनर्ज्ञातसंकेतवृत्तान्तया देव्या परिभूताऽस्मि। तद्यावदहमशोकपादपं गत्वा यथासमीहितं करिष्यामि।'

उदयनवसन्तकावपि देवीप्रसादनपरौ तस्या भवनं गच्छन्तौ तत्रैव समायातौ। चरणस्वनमाकर्ण्य वसन्तकेन मन्त्रितम्—'तिष्ठ तावत्। तिष्ठ भोः! पदशब्दः श्रूयते। जानामि कदापि गृहीतपश्चात्तापा पुनरपि देव्यागता भवेत्।'

उदयनोऽपि तदेव संभावयन् विदूषकं तत्त्वं निरूपयितुं प्रेषयामास। सागरिका तु माधवीलतामुपसृत्य लतापाशं रचयित्वा तं कण्ठेऽर्पितवती। पृथ्वीपतिप्रेरितो वसन्तक उपेत्य विलोक्यालापीत्—'का पुनरेषा? कथं देवी वासवदत्ता!' ततः ससम्भ्रममुच्चैरुवाच—'भो वयस्य! परित्रायस्व, परित्रायस्व। एषा खलु देवी वासवदत्तोद्बध्यात्मानं व्यापादयति।'

वत्सेश्वरः सत्वरमभ्याशमेत्य कण्ठाल्लतापाशमपनयन्निजगाद

—'अयि साहसकारिणि ! किमिदमकार्यं क्रियते ? पाशे तव कण्ठगते मम प्राणाः कण्ठगताः । प्रिये ! साहसं त्यज्यताम् ।'

क्षितिपतिं वीक्ष्य सागरिका जगाद—'मुञ्चतु, मुञ्चतु मां भर्ता । पराधीनः खल्वयं जनः, न पुनरीदृशमवसरं मर्तुं प्राप्नोति ।'

सागरिका पुनरपि कण्ठे पाशं दातुमियेष । जगतीदयितोऽपि 'कथं प्रिया मे सागरिका' इति व्याहृत्य प्रियाकण्ठात्पाशमाक्षिप्य दयिताबाहुपाशं स्वकण्ठे चकार ।

अनुनयपरं भर्तारमवमत्य प्रयाता वासवदत्ताऽपि 'तथा चरणनिपतितमार्यपुत्रमवधीर्याऽऽगच्छन्त्या मयाऽतिनिष्ठुरं कृतम् । तदिदानीं स्वयमेव गत्वाऽऽर्यपुत्रमनुनेष्यामि' इति सकाञ्चनमाला निवृत्ता । यदा च साऽवनीशाभ्याशमुपगता तदा वसन्तकः कथयति स्म—'भवति सागरिके ! विश्वस्ता भूत्वा प्रियवयस्यमालप ।'

तदाकर्ण्य महिषी सविषादमभाषत—'काञ्चनमाले ! कथं सागरिकेत एवागता । तच्छ्रोष्यामि तावत् । पश्चादुपसर्प्स्यामि ।'

ततस्तया श्रुतम् । सागरिका जगतीदयितं जगाद—'भर्तः ! किमेतेनालीकदाक्षिण्येन जीवितादपि वल्लभतराया देव्या आत्मानमपराधिनं करोषि ?'

वत्सराजेन व्याजह्रे—'अयि मिथ्यावादिनी खल्वसि । देव्या नः सेवा सहजाभिजात्यजनितैव, परं या प्रेमबन्धविवर्धिताधिकरसा प्रीतिः सा तु त्वय्येव ।'

इदानीं वासवदत्ता सहसोपसृत्य सरोषमुवाच—'आर्यपुत्र ! युक्तमेतत् । सदृशमेतत् ।'

तां वीक्ष्य वैलक्ष्यमुपगत उर्वीश्वरः शशंस—'देवि ! न खल्वकारणे मामुपालब्धुमर्हसि । सत्यं त्वामेव मत्वा वेषसादृश्यविप्रलब्धा वयमिहागताः । तत्क्षम्यताम् ।' इत्यभिधाय धरित्रीधवस्तदङ्घ्र्योः पपात । रुष्टा साऽभाषत—'आर्यपुत्र ! उत्तिष्ठोत्तिष्ठ । किमद्यापि सहजाभिजातायाः सेवया दुःखमनुभूयते ?'

इदानीमर्थपतिनाऽवगतं यद्देव्या तदपि श्रुतम् । तेन देवीप्रसादनं प्रति सर्वथा निराशीभूतः सोऽधोमुखोऽस्थात् ।

एवं गते वसन्तकोऽब्रवीत्—'भवति ! त्वं किमुद्बध्याऽऽत्मानं व्यापादयसीति वेषसादृश्यमोहितेन मया प्रियवयस्योऽत्रानीतः । यदि मम वचनं न प्रत्येषि तत्प्रेक्षस्वैतं लतापाशम् ।' ततश्च स लतापाशं दर्शयामास ।

देव्या सकोपमुदितम्—'काञ्चनमाले ! एतेनैव लतापाशेन बध्वा गृहाणैनं ब्राह्मणम् । एतां च दुर्विनीतां कन्यकामग्रतः कुरु ।'

लतापाशेन वसन्तकं बध्नती काञ्चनमाला ललाप—'हताश । अनुभवेदानीमात्मनो दुर्नयस्य फलम् । सागरिके ! त्वमप्यग्रतो भव ।'

अथैवमभूत्सागरिकास्वान्ते 'हा धिक् ! कथमकृतपुण्यया मया मर्तुमप्यात्मन इच्छया न पारितम् ?'

अथ सर्वानादाय निर्गता वासवदत्ता नरनाथेन तत्सर्वं सखेदमवालोकि । किं मौनाश्रयणात्परं विदध्यात्स दैवहतत्-

दानीम्। इदं चिन्ताकुलः सोऽपि देवीं प्रसादयितुमभ्यन्तरमेव प्रविवेश।

[ ४ ]

करुणामवस्थां पस्पर्श प्रियसखीविप्रयुक्ता सुसंगता। रुदती सोर्ध्वमवलोक्य निःश्वस्य च पर्यालोचयत्—'आर्य दैवहतक! अकरुण! असामान्यरूपशोभा तादृशी त्वया यदि निर्मिता तत्कस्मात्पुनरीदृशमवस्थान्तरं प्रापिता?'

जीवितनिराशया सागरिकया स्वरत्नमालिका कस्यापि ब्राह्मणस्य हस्ते प्रतिपादयितुं सुसंगताया हस्ते समर्पिताऽभूत्। वसन्तकमावर्तमानं विलोक्य सा तस्मा एव तां प्रतिपादयितुमध्यवसितवती।

बन्धानान्मोचित आसीत्तदानीमेव वसन्तक उदयनेन प्रसादितया वासवदत्तया। स्ववयस्यं प्रति प्रस्थितमुपसृत्य रुदती सुसंगता तं मुहूर्तं स्थातुमकथयत्।

सास्रां तां वीक्ष्य वसन्तको जगाद—'कथं सुसंगता! सुसंगते किंनिमित्तं रुद्यते? न खलु सागरिकाया अत्याहितं किमपि संवृत्तम्?'

तया भणितम्—'सा खलु तपस्विनी देव्या "उज्जयिनीं नीयते" इति प्रवादं कृत्वोपस्थितेऽर्धरात्रे न ज्ञायते कुत्र नीता। इयं च रत्नमाला जीवितनिराशया "आर्यवसन्तकस्य हस्ते प्रतिपादय" इति भणित्वा मम हस्ते समर्पिता। तद्गृहाणत्विमामार्यः।'

एतच्छ्रुत्वा वसन्तकोऽपि सास्रमजायत। उवाच च—'भवति! न मे ईदृशे प्रस्तावे हस्तौ ग्रहीतुं प्रसरतः।'

अत्रोभावप्यश्रूणि मुमुचतुः । ततोऽञ्जलिं बध्वा सुसंगता निर्बन्ध—'तस्या एवानुग्रहं कुर्वन्नङ्गीकरोत्वेतामार्यः।'

वसन्तको विचिन्त्योदैरयत्—'अथवोपनय । येनानयैव सागरिकाविरहदुःखितं प्रियवयस्यं विनोदयिष्यामि ।'

अथ जग्राह वसन्तकः सुसंगतोपनतां तां रत्नावलीम्। तां निर्वर्ण्य च स सविस्मयमुदचारयत्—'सुसंगते ! कुतः पुनस्तस्या ईदृशस्यालंकारस्य समागमः।'

तया न्यगादि—'आर्य ! मयाऽपि सा कौतूहलेन पृष्टैवाऽऽसीत्। ततः सोर्ध्वं प्रेक्ष्य दीर्घं निःश्वस्य 'सुसंगते ! किमिदानीं तवैतया कथया' इति भणित्वा रोदितुं प्रवृत्ता।'

वसन्तकोऽब्रवीत्—'ननु कथितमेव सामान्यजनदुर्लभेनानेन परिच्छदेन "सर्वथा महाकुलप्रसूतया तया भवितव्यम्" इति ।

एवमाभाषमाणयोस्तयोः सुसंगता भूपतिं देवीभवनाभिमुखस्य स्फटिकमण्डपं गच्छन्तमपश्यत् । तेन सा वसन्तकमामन्त्र्य स्वयमपि देव्याः पार्श्ववर्तिनी भवितुं प्रस्थिता ।

विश्वासस्थानं वसन्तकं वीक्ष्य हर्षप्रकर्षमासादितवान्वत्सेश्वरस्तं परिषस्वजे, उक्तवांश्च—'वयस्य ! वेषेणैव निवेदितस्ते देव्याः प्रसादः । तत्कथ्यतामिदानीं सागरिकायाः का वार्तेति ।'

वसन्तकोऽप्रियं निवेदयितुमपारयन्मौनमास्थितः । परं वयस्येन बलवन्निर्बद्धोऽभ्यधात्—'सा खलु तपस्विनी देव्योज्जयिनीं प्रेषितेति श्रूयते। एतन्मम सुसंगतयाऽऽख्यातम्। अन्यच्च मम हस्ते तया किमपिनिमित्तमियं रत्नमाला प्रेषिता।'

इलावल्लभो ललाप—'किमपरम् ? मां समाश्वासयितुम्। तद्वयस्योपनय।'

अथो महीपतिर्वसन्तकोपनीतां रत्नमालां गृहीत्वा, निर्वर्ण्य, हृदये निधाय परां निर्वृतिमवाप। ततस्तां मित्रस्य ददन्नुवाच—'वयस्य त्वं परिधत्स्वैताम्। येन वयमेनां तावद् दृष्ट्वा धृतिं करिष्यामः।' वसन्तस्तां परिदधौ।

समागत इदानीं रुमण्वतो भागिनेयो विजयवर्मा। स उपसृत्य शशंस—'जयतु जयतु देवः। देव! दिष्ट्या वर्धसे रुमण्वतो विजयेन। जितः कोसलाधिपतिर्देवस्य प्रभावेण।'

हृष्टः क्षितीश्वर आचष्ट—'विजयवर्मन्! तत्कथय कथमिति। विस्तरतः श्रोतुमिच्छामि।'

विजयवर्मा व्यजिज्ञपत्—'देव! श्रूयताम्। वयमितो देवादेशात्कतिपयैरेवाहोभिरनेक-करि-तुरग-पत्ति-दुर्निवारेण महता बलसमूहेन गत्वा विन्ध्यदुर्गावस्थितस्य कोसलाधिपतेर्द्वारमवष्टभ्य सेनाः समावेशयितुमारब्धाः। ततः कोसलाधिपतिरपि दर्पात्परिभवमसहमानो हास्तिकप्रायमशेषमात्मसैन्यं सज्जीकृतवान्। प्रवृत्ते भयंकरे संगरे क्षणेनैव सहस्रश उत्तमाङ्गान्यस्त्रैर्व्यस्तशिरस्त्राणानि समजायन्त, शस्त्रकषणैश्च कृत्तानि यत्र तत्र भूमौ पतितानि। व्यूढा तत्रासृक्सरित्। तत्र स्वनत्प्रहरणे वर्मोद्वमद्वाहिन्याजिमुखे भङ्गप्रतीपीभवन् स मत्तद्विपस्थः कोसलपती रुमण्वताऽऽह्वयैकेनैव शरशतैर्हतः।'

अथ मनुजनाथो विजयवर्माणं प्रसादं ग्रहीतुं यौगन्धरायणस्य प्रेषितवान्।

इदानीं समागता तत्र काञ्चनमाला। सोवाच—'जयतु

जयतु भर्ता। देवी विज्ञापयति "एष खलूज्जयिनीतः सर्वसिद्धिर्नामैन्द्रजालिक आगतः। तत्प्रेक्षतामेनमार्यपुत्रः" इति।'

इन्द्रजाले कौतुकवान्मानवेन्द्रस्तस्य झटिति प्रवेशमादिदेश। देवीं च ततः कौतुकं द्रष्टुं न्यममन्त्रत। तस्यां समागतायां प्रजाधिपोऽभ्यदधात्—'भद्र ! प्रस्तूयतामिन्द्रजालम्।

ऐन्द्रजालिकोऽपि 'यद्देव आज्ञापयति' इत्यावेद्य बहुविधं नाट्यं कृत्वा पिच्छिकां भ्रमयन्नुवाच—

'हरि-हर-ब्रह्म-प्रमुखान्देवान्दर्शयामि देवराजं च।
गगने सिद्ध-चारण-सुरवधू-सार्थं च नृत्यन्तम् ॥ ६ ॥

तत्प्रेक्षतां देवः।'

एवमभिधाय स यथाप्रतिज्ञं सर्वमदर्शयत्। तत्प्रेक्षणं विश्वेषामपि परं विस्मयमतानीत्।

चमत्कृतोऽपि सततस्वामिकार्यपरो वसन्तकोऽपवार्याचकथत्—'आः दास्याःपुत्र ऐन्द्रजालिक ! किमेतैर्देवैरप्सरोभिश्च दर्शितैः। यदि तेऽनेन परितुष्टेन कार्यं तत्सागरिकां दर्शय।'

अथ समायाता तत्र वसुन्धरा। सा राजानमुपसृत्य न्यवेदयत्—'जयतु जयतु भर्ता। अमात्यो यौगन्धरायणो विज्ञापयति "एष खलु विक्रमबाहोः प्रधानामात्यो वसुभूतिर्बाभ्रव्येन कञ्चुकिना सहाऽऽगतः। तदर्हति देवोऽस्मिन्नेव सुन्दरमुहूर्ते प्रेक्षितम्। अहमपि कार्यशेषं समाप्याऽऽगत एव" इति।'

तच्छ्रुत्वा राज्ञी कथयामास—'आर्यपुत्र! तिष्ठतु तावदिन्द्रजालम्। मातुलगृहात्प्रधानामात्यो वसुभूतिरागतः। तं तावत्प्रेक्षतामार्यपुत्रः।'

उदयनोऽपि तत्प्रतिपद्यमान ऐन्द्रजालिकमादिदेश-'भद्र! विश्रम्यतामिदानीम्।' स तु 'एकः पुनर्मम खेलोऽवश्यं देवेन प्रेक्षितव्यः' इत्यभ्यर्थयमानो निश्चक्राम।

वसन्तको भूभर्त्रा समादिष्टो वसुभूतिं प्रत्युज्जगाम। सोऽग्रे भूत्वा वसुभूतिमुवाच—'एत्वेत्वमात्यः।'

इदानीं निपतिता वसुभूतेर्दृष्टिर्वसन्तकस्य रत्नमालायाम्। सोऽपवार्यावदत्—'बाभ्रव्य! जाने सैवेयं रत्नमाला या देवेन राजपुत्र्यै प्रस्थानकाले दत्ता।'

उदयनमुपसृत्य मिथोऽभिवादनाद्युत्तरं सर्वे यथास्थानमुपाविशन्। पृथिवीपतिः पर्यपृच्छत्—'आर्य वसुभूते! अपि कुशलं तत्र भवतः सिंहलेश्वरस्य?'

वसुभूतिस्तूर्ध्वमवलोक्य निःश्वस्य चाधोमुखं तस्थौ। राज्ञा भूयो सनिर्बन्धं पृष्टो बाभ्रव्येण च प्रेरितः स जगाद-'देव! न शक्यं निवेदयितुम्, तथाप्येष कथयामि मन्दभाग्यः। याऽसौ सिंहलेश्वरेण स्वदुहिता रत्नावली नाम, आयुष्मती वासवदत्तां दग्धामुपश्रुत्य देवाय पूर्वं प्रार्थिता सती दत्ता—'

अत्र राजाऽपवार्य महिषीमवदत्—'देवि! किमेतदलीकमेव त्वन्मातुलामात्यः कथयति?'

स्मितं विधाय देवी प्राब्रवीत्—'आर्यपुत्र! न ज्ञायते "कोऽलीकं मन्त्रयते" इति।'

वसुभूतिः प्रसङ्गानुप्रसङ्गमकीर्तयत्—'सा च युष्मदन्तिक-

मानीयमाना यानभङ्गात्सागरे निमग्ना ।' इति कथयित्वा च सोऽस्थादधोमुखः । वासवदत्ताऽप्यश्रुमुखी समजायत । सोदैरयत्—'हा हताऽस्मि मन्दभागिनी । हा भगिनि रत्नावलि ! कुत्रेदानीमसि ? देहि मे प्रतिवचनम् ।'

तां पर्यवस्थापयन्नृपोऽभाषिष्ट—'देवि ! समाश्वसिहि ! समाश्वसिहि ! दुरवगाह्या गतिर्दैवस्य । यानभङ्गपतितोत्थौ नन्वेतावेव ते निदर्शनम् ।' एवमभिदधानः स वसुभूति-बाभ्रव्यौ दर्शयामास ।

महिषी बभाषे—'आर्यपुत्र ! युज्यत एतत् । परं कुतो ममैतावद्भागधेयम् ?'

इदानीमुदचरत्सुमहान्कलकलः 'सहसैवोत्थितोऽन्तःपुरेऽग्निः' इति । सर्वेऽपि संभ्रान्तास्तस्यां दिशि ददृशुः ।

वासवदत्ता सहसाऽवदत्—'आर्यपुत्र ! परित्रायस्व परित्रायस्व । एषा खलु मया निर्घृणयेह निगडेन संयमिता सागरिका विपद्यते । तत्त्वां परित्रायतामार्यपुत्रः ।'

तच्छ्रुत्वा सर्वैर्वार्यमाणोऽपि भूभुक् 'सागरिका विपद्यते । किमद्यापि प्राणा धार्यन्ते' इति व्याहृत्याग्नौ झम्पामदात् । स तत्र हुतभुजि देव्याऽनुयातः । ततो वसन्तकोऽपि तस्याः पथ्युपदेशकोऽभूत् । वसुभूति-बाभ्रव्यावपि तदेवानुष्ठितवन्तौ ।

भूपतिरासन्नहुतवहां सागरिकामवलोक्य तां संभावयितुं त्वरितमुपसृत्य निगडसंयमितां च वीक्ष्य परिकरं बद्ध्वा तां कण्ठे गृहीत्वा निमीलिताक्षः स्पर्शसुखमनुभवन्क्षणादेव संतापापगमं पस्पर्श । ततः सोऽक्षिणी उन्मील्य दिशोऽवलोक्य

सागरिकां च मुक्त्वाऽऽचख्यौ—'अहो महदाश्चर्यम्! क्वासौ गतो हुतवहः! एतदन्तःपुरं तदवस्थमेव! कथमियमवन्तिनृपात्मजा! एष बाभ्रव्यः! अथ वसुभूतिः! अयं वसन्तकः! अये! किं मे मतिः स्वप्ने भ्रमति? उतेन्द्रजालमिदम्?'

वसन्तकः समाधत्त—'भोः! मा संदेहं कुरु। इन्द्रजालमेवेदम्। भणितं तेन दास्याः पुत्रेणैन्द्रजालिकेन यथा "एको मम पुनः खेलोऽवश्यं देवेन प्रेक्षितव्यः" इति। तच्च देवैतत्।'

दृष्टमात्रैव प्रत्यभिज्ञाता वसुभूतिबाभ्रव्याभ्यां सागरिका। वसुभूतिनाऽनुयुयुजे—'देव! कुत इयं कन्यका?'

उदयनेनोदितम्—'देवी जानाति।'

ततो वसुभूतिना पृष्टा सोपावर्णयत्—'अमात्य! एषा खलु सागरात्प्राप्तेति भणित्वाऽमात्ययौगन्धरायणेन मम हस्ते निक्षिप्ता। अत एव सागरिकेति शब्द्यते।'

एतच्छ्रुत्वैवमभूद्वसुमतीस्वामिस्वान्ते—'यौगन्धरायणेन न्यस्ता! कथमसौ मामनिवेद्य किंचित्करिष्यति?'

वसुभूतिरपवार्योज्जगार—'बाभ्रव्य! यथा सुसदृशी वसन्तकस्य कण्ठे रत्नमाला, अस्याश्च सागरात्प्राप्तिः, तथा व्यक्तं सिंहलेश्वरस्य दुहिता रत्नावलीयम्।' ततः स प्रकाशमुवाच—'आयुष्मति! न खलु राजपुत्री रत्नावली त्वमेनामवस्थामुपगता?'

सागरिकाऽपि वसुभूतिं विलोक्य सास्रा संजाता, उवाच च—'कथममात्यो वसुभूतिः!'

अथोभावपि मोहमुपगतौ । वासवदत्ता ससंभ्रमं बाभ्रव्यं पप्रच्छ—'आर्य ! इयं सा मम भगिनी रत्नावली ?'

स प्रत्यवोचत्—'देवि ! इयमेव सा ।'

वसुभूतिः प्रत्यागत्य रत्नावलीमपि समाश्वासितवान् ।

वासवदत्ता भगिनीं कण्ठे जग्राह, नरपतिं चापवार्यावोचत्—'आर्यपुत्र ! लज्जे खल्वनेनाऽऽत्मनो नृशंसत्वेन । तदपनयास्या बन्धनम् ।'

यावद्धराधवस्तथा विदधाति तावत्समागतस्तत्र यौगन्धरायणः । स न्यवेदयत्—'जयतु जयतु देवः । देव ! क्षम्यतां यन्मया देवस्यानिवेद्य कृतम् ।'

धरारमणेन भणितम्—'यौगन्धरायण ! कथय किमनिवेद्य कृतम् ?'

स व्यज्ञापयत्—'देव ! श्रूयताम् । इयं सिंहलेश्वरदुहिता सिद्धेनादिष्टा यथा "योऽस्याः पाणिं ग्रहीष्यति, स सार्वभौमो राजा भविष्यति । ततस्तत्प्रत्ययादस्माभिः स्वाम्यर्थं बहुशः प्रार्थ्यमानेनापि सिंहलेश्वरेण देव्या वासवदत्तायाश्चित्तखेदं परिहरता यदा न दत्ता, तदा "लावाणकेन वह्निना देवी दग्धा" इति प्रसिद्धिमुत्पाद्य तदन्तिकं बाभ्रव्यः प्रहितः ।'

अत्र प्रतिवध्य धरणीधरो बभाण—'ततः परं श्रुतं मया । अथेयं देव्या हस्ते किमनुचिन्त्य स्थापिता ?'

वसन्तकेनोक्तम्—'भोः ! अनाख्यातमप्येतज्ज्ञायत एव यथा "अन्तःपुरगता सुखेन ते नयनपथं गमिष्यति" इति ।'

मनुजेन्द्रो भूयोऽपि पर्यपृच्छत्—'ऐन्द्रजालिकवृत्तान्तोऽपि मन्ये त्वत्प्रयोग एव।'

यौगन्धरायणेन भणितम्—'देव! एवम्। अन्यथाऽन्तःपुरे बद्धाया अस्या कुतो देवेन दर्शनम्। अदृष्टायाश्च वसुभूतिना कुतः परिज्ञानम्?' ततः स विहस्य मन्त्रितवान्—'परिज्ञातायाश्च भगिन्याः सम्प्रति यथा करणीयं तत्र देवी प्रमाणम्।'

वासवदत्ता सस्मितमवोचत्—'आर्य! स्फुटमेव किं न न भणसि यथा "प्रतिपादयास्मै रत्नावलीम्" इति।'

कथमीदृगवसरे वसन्तको मौनमातिष्ठेत्। स व्याहरत्—'भवति! सुष्ठु त्वया ज्ञातोऽमात्यस्याभिप्रायः।'

अथ वासवदत्ता रत्नावलीं स्वैराभरणैरलंकृत्य सम्राजे समार्पयत्। सोऽपि तां हर्षनिर्भरं प्रतीष्टवान्।

—:o:—

# मुद्राराक्षसम्

[१]

नन्दं महापद्मं तस्य पुत्रांश्च व्यापाद्य मौर्यं चन्द्रगुप्तं च सिंहासनेऽभिषेच्यापि न निरुद्योगः समजायत कौटिल्यः। "अगृहीते राक्षसे किमुत्खातं नन्दवंशस्य किं वा स्थैर्यमुत्पादितं चन्द्रगुप्तलक्ष्म्याः" इत्यवर्तत तस्य धारणा। अमात्यराक्षसस्य नन्दवंशे निरतिशयो भक्तिगुणस्तस्य विस्मयमातनोति स्म। एवमभूत्तस्य चेतसि "स खलु कस्मिंश्चिदपि जीवति नन्दान्वयावयवे वृषलस्य साचिव्यं ग्राहयितुं न शक्यते। तदभियोगं प्रति निरुद्योगः शक्योऽवस्थापयितुमस्माभिः अनया बुद्ध्या तपोवनगतोऽपि घातितस्तपस्वी नन्दवंशीयः सर्वार्थसिद्धिः। राक्षसस्तु ततो मलयकेतुमङ्गीकृत्य मौर्यपक्षोच्छेदाय विपुलतरं प्रयत्नमुपदर्शितवान्। चाणक्योऽधुना भेदनीत्या राक्षसमवजित्य तं चन्द्रगुप्तस्य साचिव्ये स्थापयितुं स्वीकृतोद्योगोऽभूत्। तेन हि "वृषलपर्वतकयोरन्यतरविनाशेनापि चाणक्यस्यापकृतं भवति" इति "विषकन्यया राक्षसेनास्माकमत्यन्तोपकारी मित्रं घातितस्तपस्वी पर्वतकः" इति संचारितो जगति जनापवादः। अस्यैवार्थस्य लोकप्रत्ययार्थं "पिता ते चाणक्येन घातितः" इति रहसि

त्रासयित्वा भागुरायणेनापवाहितः पर्वतकपुत्रो मलयकेतुः। तस्य स्वान्तेऽभूद्यथा "शक्यः खल्वेष राक्षसमतिपरिगृहीतोऽपि व्युत्तिष्ठमानः प्रज्ञया निग्रहीतुम्। न पुनरस्य निग्रहात्पर्वतकवधोत्पन्नं राक्षसस्यायशः प्रकाशीभवत्प्रमार्ष्टुमिच्छामि" इति। प्रयुक्ताश्च तेन स्वपक्षपरपक्षयोरनुरक्तापरक्तजनजिज्ञासया बहुविधदेशवेषभाषाचारसंचारवेदिनो नानाव्यञ्जनाः प्रणिधयः। अन्वैष्यत च कुसुमपुरवासिनां नन्दामात्यसुहृदां निपुणं प्रचारगतम्। तत्तत्कारणमुत्पाद्य च स्वाधिकारात्प्रच्याव्य तत्तत्कृत्येषु प्रवर्तिताश्चन्द्रगुप्तसहोत्थायिनो भद्रभटप्रभृतयः प्रधानपुरुषाः। शत्रुप्रयुक्तानां च तीक्ष्णरसदायिनां प्रतिविधानं प्रत्यप्रमादिनः परीक्षितभक्तयः क्षितिपतिप्रत्यासन्नाः नियोजितास्तत्र तत्राऽऽप्तपुरुषाः। आसीच्च कश्चिच्चत्सहाध्यायि मित्रमिन्दुशर्मा नाम ब्राह्मणः। स चौशनस्यां दण्डनीत्यां चतुःषष्ट्यङ्गे ज्योतिःशास्त्रे च परं प्रावीण्यमुपगतोऽभूत्। स तेन क्षपणकलिङ्गधारी नन्दवंशवधप्रतिज्ञानन्तरमेव कुसुमपुरमुपनीय सर्वनन्दामात्यैः सह सख्यं ग्राहितः, विशेषतश्च तस्मिन् राक्षसः समुत्पन्नविश्रम्भः।

अथ कदाचित्स्वपरपरिस्थितिपर्यालोचनापरे कुटिलमतौ कौटिल्ये तत्कुटीरं समागतः कश्चिद्यमपटकरश्चरः। चाणक्यशिष्यस्तस्य गृहप्रवेशं प्रतिषिषेध। प्रवेशार्थं विवदमानश्चरोऽवदत्—'अहो ब्राह्मण! यदि तवोपाध्यायः सर्वं जानाति तर्हि जानातु तावत्कस्य चन्द्रोऽनभिप्रेतः" इति। तच्छ्रुत्वाऽन्तःस्थितश्चाणक्यो व्यभावयत्—"अये! चन्द्रगुप्तादपरक्तान्पुरुषान् जानामि" इत्युपक्षिप्तमनेन। एवं तमात्मनः

प्रणिधिमवधार्य कौटिल्यस्तस्य प्रवेशं समादिदेश। तं प्रविष्टमवलोक्य सः "कथमयं प्रकृतिचित्तपरिज्ञाने नियुक्तो निपुणकः" इति समीक्ष्योक्तवान्—'भद्र ! वर्णयेदानीं स्वनियोगवृत्तान्तम्। अपि वृषलमनुरक्ताः प्रकृतयः ?'

चरेणोक्तम्—'अथ किम् ? आर्येण खलु तेषु तेषु विरागकारणेषु परिहृतेषु सुगृहीतनामधेये देवे चन्द्रगुप्ते दृढमनुरक्ताः प्रकृतयः। किं तु पुनरस्त्यत्र नगरेऽमात्यराक्षसेन सह प्रथमं समुत्पन्नस्नेहबहुमानास्त्रयः पुरुषा देवस्य चन्द्रगुप्तस्य श्रियं न सहन्ते।'

क्रुद्धश्चाणक्योऽभणत्—'ननु वक्तव्यं "स्वजीवितं न सहन्ते" इति। भद्र ! अपि ज्ञायन्ते नामधेयतः ?'

चरोऽचकथत्—'प्रथमं तावदार्यस्य रिपुपक्षे बद्धपक्षपातः क्षपणको……'

तच्छ्रुत्वा हर्षपरीतमानसस्य कौटिल्यस्य मनसि समुत्थितम्—'अस्मद्रिपुपक्षे बद्धपक्षपातः क्षपणकः !'

चरस्तु प्रसक्तानुप्रसक्तमनुक्रान्तवान्—'जीवसिद्धिर्नाम स येन साऽमात्यराक्षसप्रयुक्ता विषकन्या देवे पर्वतेश्वरे समावेशिता।'

चाणक्येन चिन्तितम्—'जीवसिद्धिः ! एष तावदस्मत्प्रणिधिः।' ततः स परिपप्रच्छ—'भद्र ! अथापरः कः ?'

चरः प्रत्यवोचत्–'आर्य ! अपरः खल्वमात्यराक्षसस्य प्रियवयस्यः कायस्थः शकटदासो नाम।'

चाणक्यः 'तस्मिन्मया सुहृच्छद्मना सिद्धार्थकः प्रागेव

विनिक्षिप्तः' इति सपरितोषमनुचिन्त्य प्रपच्छ–'भद्र ! तृतीयमपि श्रोतुमिच्छामि ।'

प्रणिधिरभ्यधात्—'तृतीयोऽमात्यराक्षसस्य द्वितीयमिव हृदयं पुष्पपुरनिवासी मणिकारश्रेष्ठी चन्दनदासो नाम यस्य गेहे कलत्रं न्यासीकृत्यामात्यराक्षसो नगरादपक्रान्तः । इममर्थमियमङ्गुलिमुद्राऽऽर्यमवगमयिष्यति ।' इत्युक्त्वा स मुद्रामर्पितवान् ।

मुद्रां गृहीत्वा चाणक्यो राक्षसस्य नाम वाचितवान् । हृष्टस्य तस्य चेतसि समजायत—'ननु वक्तव्यं राक्षस एवास्मदङ्गुलिप्रणयी संवृत्तः' इति । ततः स पृष्टवान्—'भद्र ! अङ्गुलिमुद्राधिगमं विस्तरेण श्रोतुमिच्छामि ।'

गुप्तचरेणोदीरितम्—'अस्ति तावदहमार्येण पौरजनचरितान्वेषणे नियुक्तोऽनेन यमपटेन हिण्डमानो मणिकारश्रेष्ठिनश्चन्दनदासस्य गृहं प्रविष्टोऽस्मि । तत्र यमपटं प्रसार्य प्रवृत्तोऽस्मि गीतानि गातुम् । ततश्चैकस्मादपवरकात् पञ्चवर्षदेशीयः प्रियदर्शनीयशरीराकृतिः कुमारको बालत्वसुलभकौतूहलोत्फुल्लनयनो निष्क्रमितुं प्रवृत्तः । ततो "हा निर्गतः, हा निर्गतः" इति तस्यैवापवरकस्याभ्यन्तरे स्त्रीजनस्योत्थितो महान्कलकलः । तत ईषद्द्वारदेशदापितमुख्यैकया स्त्रिया स कुमारको निष्क्रामन्नेव निर्भर्त्स्यावलम्बितः कोमलया बाहुलतया । तस्याः कुमारसंरोधसंभ्रमप्रचलिताङ्गुलेः करात् पुरुषाङ्गुलिपरिणाहप्रमाणघटिता विगलितेयमङ्गुलिमुद्रिका देहलीबन्धे पतितोत्थिता तयाऽनवबुद्धैव मम चरणपार्श्वे

समागत्य निश्चला संवृत्ता। मयाऽप्यमात्यराक्षसस्य नामाङ्कितेत्यार्यस्य पादमूलं प्रापिता।'

विदितवृत्तान्तश्चाणक्यस्तं प्रस्थापयामास, आत्मानं च पत्रलेखने योजयामास। तदैवमभूत्तस्य चेतसि 'किमत्र लिखामि? अनेन खलु लेखेन राक्षसो जेतव्यः' इति।

अथ मौर्यस्य काचिद्दासी समेत्य व्यजिज्ञपत्–'जयत्वार्यः! आर्य! 'देवः श्रीचन्द्रः शीर्षे कमलमुकुलाकारमञ्जलिं निवेश्यार्यं विज्ञापयति "इच्छाम्यार्येणानुज्ञातो देवस्य पर्वतेश्वरस्य पारलौकिकं कर्तुम्, तेन च धारितपूर्वाण्याभरणानि ब्राह्मणेभ्यः प्रतिपादयितुम्" इति।'

कौटिल्येन भाषितम्—'शोणोत्तरे! उच्यतामस्मद्वचनाद् वृषलः "साधु वत्स! अभिज्ञः खल्वसि लोकव्यवहाराणाम्। तदनुष्ठीयतामात्मनोऽभिप्रायः। किं तु पर्वतेश्वरधृतपूर्वाणि गुणवन्ति भूषणानि गुणवद्भ्य एव प्रतिपादनीयानि। तदहं स्वयमेव परीक्षितगुणान्ब्राह्मणान्प्रेषयामि" इति।'

एवं निष्क्रान्तायां चेट्यां चाणक्यः स्वशिष्यं समाज्ञापयत्–'शार्ङ्गरव! उच्यन्तामस्मद्वचनाद्विश्वावसुप्रभृतयस्त्रयो भ्रातरः "वृषलात्प्रतिगृह्याभरणानि भवद्भिरहं द्रष्टव्यः" इति।'

अथ नयविशारदश्चाणक्यः पुनरपि लेख्यसंदर्भविचारपरः समजायत। यथा 'उत्तरोऽयमाभूषणविषयको लेखार्थः। पूर्वः कथमस्तु?' ततः किंचिद्विचारानन्तरं तस्य प्रत्यभात्–'आः! ज्ञातम्। उपलब्धवानस्मि प्रणिधिभ्यो यथा "तस्य म्लेच्छराजलोकस्य मध्यात्प्रधानतमाः पञ्च राजानः परया सुहृत्तया राक्षसमनुवर्तन्ते। प्रथमस्तावत्कौलूतश्चित्रवर्मा, द्वितीयस्तु

मलयनरपतिः सिंहनादः, तृतीयश्च काश्मीरः पुष्कराक्षः, ततः सैन्धवः सिन्धुषेणश्चतुर्थः, पञ्चमश्च पारसीकाधिराजो मेघाक्षः ।" '

ततो भूयोऽपि विमृश्य, किंचिल्लिखित्वा च स शार्ङ्गरवमाकार्योवाच--'वत्स ! श्रोत्रियाक्षराणि प्रयत्नलिखितान्यपि नियतमस्फुटानि भवन्ति । तदुच्यतामस्मद्वचनात्सिद्धार्थकः--"एभिरक्षरैः केनापि कस्यापि स्वयं वाच्यम्" इत्यदत्तबाह्यनामानं लेखं शकटदासेन लेखयित्वा मामुपतिष्ठस्व । न चाख्येयमस्मै "चाणक्यो लेखयति" इति ।'

अथ किंचित्कालोत्तरं समागतो लेखहस्तः सिद्धार्थकः । चाणक्यस्तं लेखं निपुणकप्राप्तया मुद्रया मुद्रापितवान् । ततः स उवाच—'भद्र ! कस्मिंश्चिदाप्तानुष्ठेये कर्मणि त्वां व्यापारयितुमिच्छामि । प्रथमं तावद्वध्यस्थानं गत्वा घातकाः सरोषं दक्षिणाक्षिसंकोचसंज्ञां ग्राहयितव्याः । ततस्तेषु गृहीतसंज्ञेषु भयव्यपदेशादितस्ततः प्रद्रुतेषु शकटदासो वध्यस्थानादपनीय राक्षसं प्रापयितव्यः । तस्माच्च सुहृत्प्राणपरितुष्टात्पारितोषिकं ग्राह्यम् । राक्षस एव कंचित्कालं सेवितव्यः । ततः प्रत्यासन्नेषु परेषु प्रयोजनमिदमनुष्ठेयम् ।' तदुत्तरं नन्दकुलकाननधूमकेतुः सिद्धार्थककर्णे किमपि कथितवान् ।

ततः स शिष्यमाहूय न्यगादीत्—'उच्यतामस्मद्वचनात् कालपाशिको दण्डपाशिकश्च यथा "वृषलः समाज्ञापयति—यः स क्षपणको जीवसिद्धिर्नाम राक्षसप्रयुक्तया विषकन्यया पर्वतकं घातितवान्स एनमेव दोषं प्रख्याप्य सनिकारं नगरान्निर्वास्यताम् । योऽयमपरः कायस्थः शकटदासो नाम

राक्षसप्रयुक्तो नित्यमस्मच्छरीरमभिद्रोग्धुमिह प्रयतते स चाप्येनं दोषं प्रख्याप्य शूलमारोप्यताम्, गृहजनश्चास्य बन्धनागारं प्रवेश्यताम्—इति ।" '

अथ चाणक्यः साङ्गुलिमुद्रं लेखमर्पयित्वा सिद्धार्थकं प्रस्थापयामास । इदानीं शिष्यः परावृत्य कालपाशिकदण्डपाशिकयोः शासनानुष्ठानोद्योगं वर्णयामास । चाणक्योऽप्यधुना मणिकारश्रेष्ठिनं चन्दनदासं समुपस्थापयितुमाज्ञप्तवान् ।

एवमाहूतश्चन्दनदासः पथि व्यचिन्तयत्—'अकरुणेन चाणक्येन सहसा आकारितस्य निर्दोषस्यापि जनस्य शङ्कोपजायते, किं पुनर्मम जातदोषस्य ? तस्माद्भणिता मया धनसेनप्रमुखाः निजनिवेशसंस्थिताः "कदापि चाणक्यहतको गेहं मे विचिनोति । तस्मादवहिता निर्वहत भर्तुरमात्यराक्षसस्य गृहजनम् । मम तावद्यद्भवति तद्भवतु" इति ।'

मौर्याचार्यः संव्यवहारवृद्धिलाभप्रचयादिगतं पृष्ट्वा स्वाभिमतमुपन्यस्तवान्—'भोः श्रेष्ठिन् ! प्रीताभ्यः प्रकृतिभ्यः प्रतिप्रियमिच्छन्ति राजानः। राजन्यविरुद्धाभिर्वृत्तिभिर्वर्तितव्यम्।'

चन्दनदासेनोक्तम्—'आर्य ! कः पुनरधन्यो राज्ञो विरुद्ध इत्यार्येणावगम्यते ?'

चाणक्येन प्रतिभणितम्—'भवानेव तावत्प्रथमः।'

कर्णौ पिहितवता चन्दनदासेनोदितम्—'शान्तं पापम् ! शान्तं पापम् ! कीदृशस्तृणानामग्निना सह विरोधः ?'

चाणक्येन प्रत्यभाणि—'अयमीदृशो विरोधो यत्त्वमद्यापि राजापथ्यकारिणोऽमात्यराक्षसस्य गृहजनं स्वगृहे रक्षसि ।'

मणिकारेण जगदे—'आर्य ! अलीकमेतत्केनाप्यनभिज्ञेनार्यस्य निवेदितम् ।'

नीतिचणश्चणकवंश्यो बभाण—'भोः श्रेष्ठिन् ! अलमाशङ्कया ! भीताः पूर्वराजपुरुषाः पौराणामनिच्छतामपि गृहेषु गृहजनं निक्षिप्य देशान्तरं व्रजन्ति । ततस्तत्प्रच्छादनं दोषमुत्पादयति ।'

श्रेष्ठिनोचे-'एवं न्विदम् । तस्मिन्समय आसीदस्मद्गृहेऽमात्यराक्षसस्य गृहजन इति ।'

मौर्यगुरुर्व्याजहार—'पूर्वमनृतमिदानीमासीदिति परस्परविरोधिनी वचने ।'

चन्दनदासोऽवदत्—'एतावदेवास्ति मे वाक्छलम् ।'

मौर्यमन्त्री प्रत्यममन्त्रत—'भोः श्रेष्ठिन् ! चन्द्रगुप्ते राजन्यपरिग्रहश्छलानाम् । तत्समर्पय राक्षसस्य गृहजनम् । तत्समर्पय राक्षसस्य गृहजनम् । अच्छलं भवतु भवतः ।'

श्रेष्ठी बभाषे—'आर्य ! ननु विज्ञापयामि "आसीदस्मद्गृहेऽमात्यराक्षसस्य गृहजनः" इति । इदानीं पुनर्न जानामि क्व गतः ?'

चाणक्यः स्मितं विधायाभ्यधात्—'कथं न ज्ञायते नाम ? भोः श्रेष्ठिन् ! हिमवति दिव्यौषधयः, शीर्षे च सर्पः । अन्यच्च "नन्दमिव विष्णुगुप्तः, चन्द्रगुप्तममात्यराक्षसः समुच्छेत्स्यति" इति मा मैवं मंस्थाः । अपथ्यकारिषु तीक्ष्णदण्डोऽयं राजा न मर्षयिष्यति राक्षसकलत्रप्रच्छादनं भवतः । तद्रक्ष परकलत्रेणाऽऽत्मनः कलत्रं जीवितं च ।'

चन्दनदास उदैरयत्—'आर्य ! किं मे भयं दर्शयसि ? सन्त-

मपि गेहेऽमात्यराक्षसस्य गृहजनं न समर्पयामि, किं पुनरसन्तम् ?'

चाणक्योऽन्वयुङ्क्त—'चन्दनदास ! एष ते निश्चयः ?'

तेनोक्तम्—'बाढम् । एष मे निश्चयः ।'

चेतसा तं श्लाघमानोऽपि चाणक्यः सक्रोधमभ्यधात्—'दुरात्मन् ! दुष्टवणिक् ! अनुभूयतां तर्हि नरपतिक्रोधः ।'

मित्रवत्सलेन श्रेष्ठिना धीरमुदीरितम्—'सज्जोऽस्मि । अनुतिष्ठत्वार्य आत्मनोऽधिकारसदृशम् ।'

उग्रेण मन्त्रिणा भणितम्—'शार्ङ्गरव ! उच्यतां दुर्गपालो विजयपालः "गृहीतसारमेनं सपुत्रकलत्रं संयम्य तावद्रक्ष यावन्मया वृषलाय कथ्यते ।" वृषल एवास्य प्राणहरं दण्डमाज्ञापयिष्यति ।'

निष्क्रान्तश्चन्दनेन समं शार्ङ्गरवः । हृष्टश्चाणक्योऽब्रवीत्—'हन्त ! लब्ध इदानीं राक्षसः । यथा तस्यापद्ययं प्राणानप्रियवत्त्यजति, नूनं तथैवास्यापदि तस्यापि प्राणाः प्रिया न भवन्ति ।'

ततः कलकलमाकर्ण्य चाणक्यः स्वशिष्यं तद्धेतुं विज्ञातुमादिशत् । स निष्क्रम्य विभाव्य प्रत्यागतो न्यगदत्—'उपाध्याय ! एष खलु शकटदासं वध्यमानं वध्यभूमेरादाय समपक्रान्तः सिद्धार्थकः ।'

'साधु सिद्धार्थक ! कृतः कार्यारम्भः' इति मनस्यालोचयञ्छार्ङ्गरवगुरुरुवाच—'प्रसह्य किमपक्रान्तः ?' ततस्तेन सक्रोधमभिहितम्—'वत्स ! उच्यतां भागुरायणो यथा "त्वरितं संभावय" इति ।'

निदेशपालनाय निर्गतः शिष्यः प्रत्यावृत्यावोचत्—'उपाध्याय! हा धिक्! कष्टम्! अपक्रान्तो भागुरायणोऽपि!'

'व्रजतु कार्यसिद्धये' इति स्वगतं गदंश्चाणक्यः प्रकाशं सक्रोधमिवावदत्—'वत्स! उच्यन्तामस्मद्वचनाद्भद्रभट-पुरुषदत्त-डिङ्गरात-बलगुप्त-राजसेन-रोहिताक्ष-विजयवर्माणः "शीघ्रमनुसृत्य गृह्येतां द्वावप्येतौ" इति।'

शिष्यो निष्क्रम्य पुनः प्रविश्य सविषादमभाषत—'हा धिक्! कष्टम्! सर्वमेव तन्त्रमाकुलीभूतम्। तेऽपि खलु भद्रभटप्रभृतयः प्रथमतरमुषस्येवापक्रान्ताः।'

'सर्वेषामेव शिवाः पन्थानः सन्तु' इति मनसि वदन् कौटिल्यो बभाषे—'वत्स! अलं विषादेन। एष दुरात्मनो भद्रभटप्रभृतीनाहरामि।' ततः स प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा व्यभावयत्—'दुरात्मन्राक्षस! क्वेदानीं गमिष्यसि? एषोऽहमचिराद्भवन्तमारण्यकं गजमिव बुद्ध्या निगृह्य वृषलस्य कृते क्रियायां प्रगुणीकरोमि।'

[२]

समधिकनीतिपटुना राक्षसेनाप्याहितोऽभूत्सुमहान्यत्नो चन्द्रगुप्तं विनाशयितुम्। नगरान्निर्गच्छता तेन ' "कुसुमपुराभियोगं प्रत्यनुदासीनो राक्षसः" इति कुसुमपुरस्थानां तेन सहैककार्याणां नन्दोपजीविनां नोद्यमः शिथिलीभविष्यति' इत्याकलय्य सुहृत्तमस्य चन्दनदासस्य गृहे गृहजनो निक्षिप्तः। चन्द्रगुप्तशरीरमभिद्रोग्धुमस्मत्प्रयुक्तानां तीक्ष्णरसदायिनामुपसंग्रहार्थं परकृत्योपजापार्थं च महता कोशसंचयेन स्थापितः शकटदासः। प्रतिक्षणमरातिवृत्तान्तोपलब्धये

तत्संहतिभेदनाय च व्यापारिताः सुहृदो जीवसिद्धिप्रभृतयः। एवं स्वर्गगतमपि स्वामिनं शात्रववधेनाऽऽराद्धुं स चिन्तावेशसमाकुलेन मनसा रात्रिंदिवं जागर्ति स्म।

अथैकदा स्वामिस्मृत्या सजलनयने नयरज्जुविविधपाशकल्पनापर्यालोचनपरेऽमात्यराक्षसे मलयकेतुकञ्चुकी जाजलिस्तत्र समागतो राक्षसेनोपवेशितो बभाषे—'कुमारो मलयकेतुरमात्यं विज्ञापयति "चिरात्प्रभृत्यार्यः परित्यक्तोचितशरीरसंस्कार इति पीड्यते मे हृदयम्। यद्यपि सहसा स्वामिगुणा न शक्यन्ते विस्मर्तुं तथापि मद्विज्ञापनं मानयितुमर्हत्यार्यः।" एवमभिधायाभरणानि कुमारेण स्वशरीरादवतार्य प्रेषितानि धारयितुमर्हत्यार्यः।'

राक्षसो रिपुचक्रक्षपणात्प्राक्प्रतनुमपि संस्काररचनां धारयितुमात्मनो बलवतीमनिच्छामाविरभावयत्। परं कुमारस्य प्रथमं प्रणयं प्रतिमानयितुं जाजलिना निर्बन्धोऽसौ तत्प्रतिपन्नवान्। जाजलिरपि तं तानि परिधाप्य निष्क्रान्तः।

अथो समागतो राक्षसद्वारि कश्चिज्जीर्णविषो नामाऽऽहितुण्डिकः। अमात्यः 'परितोष्य विसर्जयैनम्' इति स्वपुरुषमादिदेश। जीर्णविषस्तु ततः पद्यमेकममात्यस्य प्रहितवान्। तद्यथा—

'पीत्वा नु निरवशेषं कुसुमरसमात्मनः कुशलतया।
यदुद्गिरति भ्रमरोऽयमन्यस्य करोति तत्कार्यम्॥' १॥

तद्वाचितवत एवमभूद्राक्षसस्य चेतसि—'अये! कुसुमपुरवृत्तान्ताभिज्ञो भवत्प्रणिधिरिति पद्यार्थः। कार्यसमग्रत्वान्मनसः

प्रभूतत्वाच्च प्रणिधीनां विस्मृतम् । इदानीं स्मृतिरुपलब्धा । विराधगुप्तेनानेन भवितव्यम् ।'

अमात्यो विराधमाकार्य परिजनं बहिरेव स्थातुमादिदेश निर्मक्षिके जाते राक्षस आचष्ट—'सखे ! वर्णय कुसुमपुर-वृत्तान्तम् । चन्द्रगुप्तस्य नगरप्रवेशात् प्रभृत्यस्मत्प्रयुक्तैस्तीक्ष्ण-रसदायिभिः किमनुष्ठितमित्यादितः श्रोतुमिच्छामि ।'

विराधेनाभिहितम्—'एष कथयामि । पुनरपि नन्दराज्य-प्रत्यानयनाय सुरङ्गया बहिरपगतेषु युष्मासु, चन्द्रगुप्तनिध-नाय युष्मत्प्रयुक्तया विषकन्यया घातिते तपस्विनि पर्वते-श्वरे, पितृवधत्रासादपक्रान्ते कुमारे मलयकेतौ, विश्वासिते पर्वतकभ्रातरि वैरोचके, प्रकाशिते च चन्द्रगुप्तस्य नन्दभवन-प्रवेशे, चाणक्यहतकेनाहूयाभिहिताः सर्व एव कुसुमपुर-निवासिनः सूत्रधाराः यथा "सांवत्सरिकादेशादर्धरात्रसमये चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यति । ततः पूर्वद्वारात् प्रभृति संस्क्रियतां राजभवनम्" इति ततः सूत्रधारैरभिहितम् "आर्य ! प्रथममेव देवस्य चन्द्रगुप्तस्य नन्दभवनप्रवेशमुप-लभ्य सूत्रधारेण दारुवर्मणा कनकतोरणन्यासादिभिः संस्कारविशेषैः संस्कृतं प्रथमराजभवनद्वारम् । अस्माभिरि-दानीमभ्यन्तरे संस्कार आधेयः" इति । ततश्चाणक्यवटुना "अनादिष्टेनैव सूत्रधारेण दारुवर्मणा संस्कृतं राजभवनद्वारम्" इति परितुष्टेनेव सुचिरं दारुवर्मणो दाक्ष्यं प्रशस्याभिहितम् "अचिरादस्य दाक्ष्यस्यानुरूपं फलमधिगमिष्यसि दारुवर्मन् !" इति ।'

राक्षसः सोद्वेगमभाषिष्ट—'सखे ! कुतश्चाणक्यवटोः परितोषः ? अफलमनिष्टफलं वा दारुवर्मणः प्रयत्नमवगच्छामि ।'

विराधोऽभ्यधात्—'ततश्चाणक्यहतकेन "अनुकूललग्नवशादर्द्धरात्रसमये चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यति" इति शिल्पिनः पौरांश्च गृहीतार्थान् कृत्वा तस्मिन्नेव क्षणे पर्वतेश्वरभ्रातरं वैरोचकमेकासने चन्द्रगुप्तेन सहोपवेश्य कृतः पृथ्वीराज्यविभागः । ततः प्रथममेव प्रकाशिते रात्रौ चन्द्रगुप्तस्य नन्दभवनप्रवेशे, कृताभिषेके किल वैरोचके विमलमुक्तामणिकुसुमदामादिभिः प्रच्छादितसर्वावयवे परिचिततमैरप्यनभिज्ञायमानाकृतौ चाणक्यहतकादेशाच्चन्द्रगुप्तोपवाह्यां चन्द्रलेखां नाम गजवशामारुह्य चन्द्रगुप्तानुयायिना राजलोकेनानुगम्यमाने देवस्य नन्दस्य भवनं प्रविशति वैरोचके, युष्मत्प्रयुक्तेन दारुवर्मणा सूत्रधारेण "चन्द्रगुप्तोऽयम्" इति मत्वा तस्योपरि पातनाय सज्जीकृतं यन्त्रतोरणम् । तथा च युष्मत्प्रयुक्तेनैव चन्द्रगुप्तनिषादिना वर्वरकेण कनकदण्डान्तर्निहितामसिपुत्रिकामाक्रष्टुकामेनावलम्बिता करेण कनकशृङ्खलावलम्बिनी कनकदण्डिका ।

अथ जघनाभिघातमुत्प्रेक्षमाणा गजवधूरतिजवनतया गत्यन्तरमारूढवती । प्रथमगत्यनुरोधप्रत्याकलितमुक्तेन प्रभ्रष्टलक्ष्यं पतता यन्त्रतोरणेनाऽऽकृष्टकृपाणीव्यग्रपाणिरनासादयन्नेव चन्द्रगुप्ताशया वैरोचकं हतस्तपस्वी वर्वरकः । ततो दारुवर्मणा यन्त्रतोरणनिपातनादात्मवधमाकलय्य पूर्वमेवोत्तुङ्गतोरणस्थलमारूढेन यन्त्रघट्टनबीजं लोहकीलकमादाय

हस्तिनीगत एव हतस्तपस्वी वैरोचकः। ततो दारुवर्मा वैरोचकपुरःसरेण पदातिलोकेनैव लोष्टघातं हतः।'

एतच्छ्रुत्वा सजलनयनो राक्षसः पर्यपृच्छत्—'अथ तत्रत्येन भिषजाऽभयदत्तेन किमनुष्ठितम् ?'

विराधोऽभ्यधत्त—'अमात्य ! कल्पितमनेन योगचूर्णमिश्रितमौषधं चन्द्रगुप्ताय। तत्प्रत्यक्षीकुर्वता चाणक्यहतकेन कनकभाजने वर्णान्तरमुपलभ्याभिहितश्चन्द्रगुप्तः "वृषल ! सविषमिदमौषधं न पातव्यम्" इति। स वैद्यस्तु तदेवौषधं पायितो मृतश्च।'

अमात्येनोक्तम्—'अहो महान्विज्ञानराशिरुपरतः। अथ तस्य शयनाधिकृतस्य प्रमोदकस्य किं वृत्तम् ?'

चरेण भणितम्—'स खलु मूर्खस्तं युष्माभिरतिसृष्टं महान्तमर्थराशिमवाप्य महता व्ययेनोपभोक्तुमारब्धवान्। ततः कुतोऽयं भूयान्धनागमः?" इति पृच्छ्यमानो यदा वाक्यभेदान् बहूनगमत्तदा चाणक्यहतकेन विचित्रवधेन व्यापादितः।'

तच्छ्रुत्वोद्विग्नो राक्षस आचष्ट—'कथमत्रापि दैवेनोपहता वयम् ! अथ शयितस्य चन्द्रगुप्तशरीरे प्रहर्तुमस्मत्प्रयुक्तानां राजगृहस्यान्तर्भित्तिसुरङ्गामेत्य प्रथममेव निवसतां बीभत्सकादीनां को वृत्तान्तः ?'

विराधेनाभ्यधायि—'अमात्य ! दारुणो वृत्तान्तः। प्राक्चन्द्रगुप्तप्रवेशाच्छयनगृहं प्रविष्टमात्रेणैव निपुणमवलोकयता दुरात्मना चाणक्यहतकेन कस्माच्चिद्भित्तिच्छिद्राद् गृहीतभक्तावयवां निष्क्रामन्तीं पिपीलिकापङ्क्तिमवलोक्य

"पुरुषगर्भमेतद् गृहम्" इति गृहीतार्थेन दाहितं तच्छयनगृहम्। तस्मिंश्च दह्यमाने धूमावरुद्धदृष्टयः प्रथमविहितनिर्गमनमार्गमनाधिगम्य द्वारं सर्व एव बीभत्सकादयो ज्वलनमुपगम्य तत्रैव नष्टाः ।'

तच्छ्रुत्वा सास्रोऽमात्योऽममन्त्रत—'कष्टं, भोः कष्टम्! सखे! पश्य, दैवसम्पदं दुरात्मनश्चन्द्रगुप्तहतकस्य! मन्त्रीतयः मौर्य्यस्यैव विविधश्रेयांसि फलन्ति। ततस्ततः?'

चरोऽब्रवीत्—'ततः प्रभृति चन्द्रगुप्तशरीरे सहस्रगुणमप्रमत्तश्चाणक्यहतकः "एभ्य एतदीदृशं भवति" इत्यन्विष्य निगृहीतवान् पुरनिवासिनो युष्मदीयानाप्तपुरुषान्। प्रथमं तावत्क्षपणको जीवसिद्धिः सनिकारं नगरान्निर्वासितः ।'

राक्षसेन पृष्टम्-'वयस्य! कमपराधमुद्दिश्य निर्वासितः?'

विराधो भणति स्म—' "एष राक्षसप्रयुक्तया विषकन्यया पर्वतेश्वरं व्यापादितवान्" इति ।'

एतदाकर्ण्य राक्षसस्य चित्तेऽभूत् 'साधु, कौटिल्य! साधु! अयशः स्वस्मिन् परिहृतमस्मासु च पातितम्। अर्धराज्यहरश्च घातितः। तवैकमपि नीतिबीजं बहुफलतामेति' इति। ततस्तेनोक्तम्—'ततस्ततः?'

विराधेनाऽऽख्यातम्—'ततः "चन्द्रगुप्तशरीरमभिद्रोग्धुमनेन व्यापारिता दारुवर्मादयः" इति नगरे प्रख्याप्य शकटदासः शूलमारोपितः ।'

तच्छ्रुत्वाऽतीवदुःखितः सास्रश्च राक्षस आचख्यौ—'हा सखे शकटदास! अयुक्तरूपस्तवायमीदृशो मृत्युः। अथवा

स्वाम्यर्थमुपरतो न शोच्यस्त्वम्। वयमेवात्र शोच्या ये नन्दकुलविनाशेऽपि जीवितुमिच्छामः।'

चर आचख्यौ—'अमात्य! स्वाम्यर्थ एव साधयितव्य इति प्रयतस्व।'

अमात्येन कथितम्—'सखे! कथ्यताम्, अपरस्यापि सुहृद्व्यसनस्य श्रवणे सज्जोऽस्मि।'

चरेणाभाणि—एतदुपलभ्य चन्दनदासेनापवाहितममात्यकलत्रम्। ततो याचमानेनाप्यनेन न समर्पितममात्यकलत्रं यदा तदाऽतिकुपितेन चाणक्यवटुना गृहीतगृहसारः सपुत्रकलत्रो बन्धनागारे निक्षिप्तः।'

राक्षसेनावोचि—'ननु वक्तव्यं "संयमितः सपुत्रकलत्रो राक्षसः" इति।'

अथ समायातस्तत्र सिद्धार्थकेनानुगम्यमानः शकटदासः। राक्षसस्तं विलोक्य सहर्षं परिषस्वजे, पृष्टवांश्च—'सखे शकटदास! अथ कोऽयमीदृशस्य हृदयानन्दस्य हेतुः?'

सिद्धार्थकं निर्दिशञ्छकटदासो जगाद—'अनेन प्रियसुहृदा सिद्धार्थकेन घातकान् विद्राव्य वध्यस्थानादपहृतोऽस्मि।'

तदाकर्ण्य भृशं हृष्टोऽमात्यः स्वगात्रादवतार्य भूषणानि सिद्धार्थकाय पारितोषिकं ददौ।

सिद्धार्थकोऽपि तानि गृहीत्वाऽमात्यपादयोर्निपत्य 'अयं खल्वार्योपदेशः। भवतु तथा करिष्यामि' इत्याकलय्याऽऽललाप—'अमात्य! अत्र मे प्रथमप्रविष्टस्य नास्ति कोऽपि परिचितो यत्रेममात्यस्य प्रसादं निदर्श्य निर्वृतो भवामि।

तस्मादिच्छाम्यहमेतया मुद्रया मुद्रितममात्यस्यैव भाण्डागारे स्थापयितुम्। यदा मे प्रयोजनं तदा ग्रहीष्यामि।'

तत्र कमपि दोषमवीक्षमाणेन राक्षसेन तत्प्रत्यपादि। शकटदासं च स तथैव विधातुमादिदेश। शकटदासो मुद्रां जग्राह, विलोक्य च तां राक्षसं जनान्तिकमुवाच—'अमात्य! भवन्नामाङ्कितेयं मुद्रा!'

तां विलोक्य राक्षसः पप्रच्छ—'भद्र सिद्धार्थक! कुतस्त्वयेयमधिगता?'

सिद्धार्थको बभाषे—'अस्ति कुसुमपुरे मणिकारश्रेष्ठी चन्दनदासो नाम। तस्य गेहद्वारपरिसरे पतिता मयाऽऽसादिता।'

शकटदासो न्यगादीत्—'सखे सिद्धार्थक! अमात्यनामाङ्कितेयं मुद्रा। तदितो बहुतरेणार्थेन भवन्तममात्यस्तोषयिष्यति। दीयतामेषा।'

सिद्धार्थकोऽब्रवीत्—'आर्य! ननु प्रसाद एष यदस्या मुद्राया अमात्यः परिग्रहं करोति।'

एवमभिधाय स मुद्रां समर्पितवान्।

राक्षसेनोदीरितम्—'सखे शकटदास! अनयैव मुद्रया स्वाधिकारे व्यवहर्तव्यं भवता।'

अथ सिद्धार्थको न्यवेदयत्—'अमात्य! किमपि विज्ञापयामि। जानात्येवामात्यो यथा चाणक्यवटुकस्य विप्रियं कृत्वा नास्ति पुनः पाटलिपुत्रे प्रवेश इतीच्छाम्यहममात्यस्य चरणावेव शुश्रूषितुम्।'

अमात्योऽब्रवीत्—'भद्र ! प्रियं नः। किं तु त्वदभिप्रायापरिज्ञानादन्तरितोऽयमस्मदनुनयः । तदेवं क्रियताम्। सखे शकटदास ! विश्रामय सिद्धार्थकम्।'

अथैवं निष्क्रान्ते ससिद्धार्थके शकटदासे राक्षसो विराधमभ्यधात्—'सखे विराधगुप्त! वर्णय वृत्तशेषम्। अपि क्षमन्तेऽस्मदुपजापं चन्द्रगुप्तप्रकृतयः ?'

विराधेनोक्तम्—'अमात्य ! बाढं क्षमन्ते। यथाप्रकाशमनुगच्छन्त्येव। मलयकेतोरपक्रमणात् प्रभृति कुपितश्चन्द्रगुप्तश्चाणक्यस्योपरीति चाणक्योऽप्यतिजितकाशितयाऽसहमानश्चन्द्रगुप्तं तैस्तैराज्ञाभङ्गैश्चन्द्रगुप्तस्य चेतःपीडामुपचिनोति।

अमुनोदन्तेनातीवप्रसन्नो राक्षसः स्वचरमुवाच—'सखे विराधगुप्त ! गच्छ त्वमनेनैवाऽऽहितुण्डिकच्छद्मना पुनः कुसुमपुरम्। तत्र मे प्रियसुहृद्वैतालिकव्यञ्जनः स्तनकलशो नाम प्रतिवसति । स त्वया मद्वचनाद्वाच्यो यथा "चाणक्येन क्रियमाणेष्वाज्ञाभङ्गेषु चन्द्रगुप्तः समुत्तेजनसमर्थैः श्लोकैरुपश्लोकयितव्यः । कार्यं चातिनिभृतं करभकहस्तेन सन्देष्टव्यम्" इति।'

विराधः 'यदाज्ञापयत्यमात्यः' इति भर्तुराज्ञां मूर्ध्ना समादाय प्रतस्थे।

अथ पुरुषः शकटदासप्रेषितांस्त्रीनलंकारसंयोगान् विक्रीयमाणानमात्यस्य दर्शितवान्। स तानि महार्हाण्याभरणानि विलोक्य ललाप—'भद्र ! उच्यतामस्मद्वचनाच्छकटदासः "परितोष्य विक्रेतारं गृह्यन्ताम्" इति।

[ ३ ]

प्रवृत्तकौमुदीमहोत्सवरमणीयतरं कुसुमपुरमवलुलोकयिषु-श्चन्द्रगुप्तः सुगाङ्गप्रासादोपरिभूमीः संस्कर्तुमादिष्टवान्। नियते काले तत्र गच्छतस्तस्य चेतसि समुद्भूतम् ' "कृतककलहं कृत्वा स्वतन्त्रेण किंचित्कालान्तरं व्यवहर्तव्यम्" इत्यार्यादेशः। स च कथमपि मया पातकमिवाभ्युपगतः।'

अथ समन्तादवलोकितवांश्चन्द्रगुप्तो न्यगदत्—'अये! कथमप्रवृत्तकौमुदीमहोत्सवं कुसुमपुरम्!' ततः स पप्रच्छ—'आर्य वैहीनरे! अथास्मद्वचनादाघोषितः कुसुमपुरे कौमुदी-महोत्सवः?'

वैहीनरोऽचकथत्—'अथ किम्? ततः प्रतिषिद्धः कौमुदीमहोत्सवः।'

वसुधाधिपः सक्रोधमाह—'आः केन?'

वैहीनरिरुवाच—'देव! नातः परं विज्ञापयितुं शक्यम्।"

राज्ञाऽनुयुयुजे—'न खल्वार्यचाणक्येनापहृतः प्रेक्षकाणाम-तिशयरमणीयश्चक्षुषो विषयः?'

वैहीनरिणाऽवाचि—'देव! कोऽन्यः जीवितुकामो देवस्य शासनमातिवर्तेत?'

अथ महीपो वैहीनरिं प्रेष्य कौटिल्यमाकारयामास। तस्मिन्नायाते चन्द्रगुप्तः स्वासनादुत्थाय तं प्राणमत्, पादयो-श्चापतत्। चाणक्यस्तं पाणौ गृहीत्वोत्थाप्योपवेश्य स्वयं चोपविश्य पप्रच्छ—'वृषल! किमर्थं वयमाहूताः?'

राजा व्यजिज्ञपत्—'आर्यस्य दर्शनेनाऽऽत्मानमनुग्राह-यितुम्।'

चाणक्यः स्मितं विधायाभ्यधात्—'अलमनेन प्रश्रयेण। न निष्प्रयोजनमधिकारवन्तः प्रभुभिराहूयन्ते।'

मौर्येण मन्त्रितम्—'आर्य! कौमुदीमहोत्सवप्रतिषेधस्य किं फलमार्यः पश्यति?'

चाणक्यः स्मयमानोऽवोचत्–'उपालब्धुं तर्हि वयमाहूताः।'

चन्द्रेण जगदे—'शान्तं पापम्, शान्तं पापम्। न हि न हि, विज्ञापयितुम्।'

कौटिल्योऽब्रवीत्—'यद्येवं तर्हि विज्ञापनीयानामवश्यं शिष्येण रुचयोऽनुरोद्धव्याः।'

राजोवाच—'एवमेतत्। कः संदेहः? किं तु न कदाचिदार्यस्य निष्प्रयोजना प्रवृत्तिरित्यस्ति नः प्रश्नावकाशः।'

चाणक्योऽचकथत्—'वृषल! सम्यग्गृहीतवानसि। न प्रयोजनमन्तरा चाणक्यः स्वप्नेऽपि चेष्टत इति। इह खल्वर्थशास्त्रकारास्त्रिविधां सिद्धिमुपवर्णयन्ति—'राजायत्ताम्, सचिवायत्ताम्, उभयायत्तां चेति। ततः सचिवायत्तसिद्धेस्तव किं प्रयोजनान्वेषणेन? यतो वयमेवात्र नियुक्ता वर्त्स्यामः।'

एतदाकर्ण्य क्षोणीभृत्सकोपं मुखं परावर्तयामास। इदानीं बहिरवस्थितौ वैतालिकौ पद्यानि पेठतुः। प्रथमस्तावद्विशिष्टदेवतास्तुतिरूपेण प्रवृत्तशरद्गुणप्रख्यापनमाशीर्वचनमुवाच। ततोऽपरोऽब्रवीत्—

'सत्त्वोत्कर्षस्य धाम्ना निधय इव कृताः केऽपि कस्यापि हेतो-



र्जेतारः स्वेन धाम्ना मदसलिलमुचां नागयूथेश्वराणाम्।

दंष्ट्राभङ्गं मृगाणामधिपतय इव व्यक्तमानावलेपा
नाज्ञाभङ्गं सहन्ते नृवर ! नृपतयस्त्वादृशाः सार्वभौमाः ॥

अपि च,

भूषणाद्युपभोगेन प्रभुर्भवति न प्रभुः ।
परैरपरिभूताज्ञस्त्वमिव प्रभुरुच्यते ॥'

एतच्छ्रुत्वा विचिन्तयतश्चाणक्यस्य स्वान्त एवमभूत्—'आः ज्ञातम् ! राक्षसस्यायं प्रयोगः ! दुरात्मन् राक्षस ! दृश्यसे। भो जागर्ति खलु कौटिल्यः ।'

अथ वसुधावल्लभो वैहीनरिं वैतालिकाभ्यां सुवर्णशतसहस्रं दापयितुमादिक्षत् । प्रस्थितं वैहीनरिं निवर्त्य क्रुद्धश्चाणक्योऽभाषत—'वृषल ! किमयमस्थाने महानर्थोत्सर्गः ?'

राजाऽपि सकोपं प्रत्यचकथत्—'आर्येणैवं सर्वत्र निरुद्धचेष्टाप्रसरस्य मे बन्धनमिव राज्यम्, न राज्यमिव ।'

कौटिल्योऽलपत्—'वृषल ! स्वयमभियुक्तानां राज्ञामेते दोषाः संभवन्ति । तद्यदि न सहसे ततः स्वयमभियुज्यस्व ।'

नृपेण भणितम्—'एते स्वकर्मण्यभियुज्यामहे ।'

चाणक्योऽचकथत्—'प्रियं नः । वयमपि स्वकर्मण्यभियुज्यामहे ।'

राजा जगाद—'यद्येवं तर्हि कौमुदीमहोत्सवप्रतिषेधस्य तावत्प्रयोजनं श्रोतुमिच्छामि ।'

चाणक्योऽभणत्—'शोणोत्तरे ! मद्वचनात् कायस्थमचलं ब्रूहि "यत्तद्भद्रभटप्रभृतीनामितोऽपरागादपक्रम्य मलयकेतुमाश्रितानां लेख्यपत्रं दीयताम्" इति ।'

दासी शोणोत्तराऽविलम्बमेव तदानीतवती। चाणक्यस्तद्गृहीत्वा वाचयामास—'स्वस्ति। सुगृहीतनामधेयस्य देवस्य चन्द्रगुप्तस्य सहोत्थायिनां प्रधानपुरुषाणामितोऽपक्रम्य वध्यमलयकेतुमाश्रितानां प्रमाणलेख्यपत्रमिदम्। तत्र प्रथमं तावद्गजाध्यक्षो भद्रभटः, अश्वाध्यक्षः पुरुषदत्तः, महाप्रतीहारस्य चन्द्रभानोर्भागिनेयो डिङ्गरातः, देवस्य स्वजनसंबन्धी महाराजो बलगुप्तः, देवस्यैव कुमारसेवको राजसेनः, सेनापतेः सिंहबलस्य कनीयान्भ्राता भागुरायणो, मालवराजपुत्रो लोहिताक्षः, क्षत्रगणमुख्यो विजयवर्मेति।'

महीपतिः पर्यपृच्छत्—'अथैतेषामपरागहेतून् विज्ञातुमिच्छामि।'

चाणक्यो बभाषे—'वृषल! श्रूयताम्। अत्र यावेतौ गजाध्यक्षाश्वाध्यक्षौ भद्रभटपुरुषदत्तनामानौ तौ खलु स्त्रीमद्यमृगयाशीलौ हस्त्यश्वावेक्षणेऽनभियुक्तौ मयाऽधिकाराभ्यामवरोप्य स्वजीवनमात्रेणैव स्थापिताविति परपक्षे स्वेन स्वेनाधिकारेण गत्वा मलयकेतुमाश्रितौ। यावेतौ डिङ्गरातबलगुप्तौ तावप्यत्यन्तलोभाभिभूतौ त्वद्दत्तं जीवनमबहु मन्यमानौ तत्र बहु लभ्यत इत्यपक्रम्य मलयकेतुमाश्रितौ। योऽप्यसौ भवतः कुमारसेवको राजसेन इति सोऽपि तव प्रसादादतिप्रभूतकोशहस्त्यश्वं सहसैव तन्महदैश्वर्यमवाप्य पुनरुच्छेदशङ्कयाऽपक्रम्य मलयकेतुमाश्रितः। योऽयमपरः सेनापतेः सिंहबलस्य कनीयान्भ्राता भागुरायणोऽसावपि तत्र काले पर्वतकेन सह समुत्पन्नसौहार्दस्तत्प्रीत्या च "पिता ते चाणक्येन व्यापादितः" इत्युक्त्वा रहसि त्रासयित्वा मलय-

केतुमपवाहितवान् । ततो भवदपथ्यकारिषु चन्दनदासादिषु निगृहीतेषु स्वदोषाशङ्कयाऽपक्रम्य मलयकेतुमाश्रितः । तेनाप्यसौ मम प्राणरक्षक इति कृतज्ञतामनुवर्तमानेनाऽऽत्मनोऽनन्तरममात्यपदं ग्राहितः । यौ तौ लोहिताक्षविजयवर्माणौ तावप्यतिमानित्वात् स्वदायादेभ्यस्त्वया दीयमानं मानमसहमानौ मलयकेतुमाश्रितौ । इत्येषामपरागहेतवः ।'

राज्ञा पृष्टम्—'एवमेतेषु परिज्ञातापरागहेतुषु क्षिप्रमेव कस्मान्न प्रतिविहितमार्येण ?'

चाणक्योऽममन्त्रत—'वृषल ! न पारितं प्रतिविधातुम् ।'

पृथिवीपतिः पप्रच्छ—'किमकौशलादुत प्रयोजनापेक्षया ?'

कौटिल्यो ललाप—'कथमकौशलं भविष्यति ? प्रयोजनापेक्षयैव । इह खलु विरक्तानां प्रकृतीनां द्विविधं प्रतिविधानम्—अनुग्रहो निग्रहश्च । अनुग्रहस्तावदाक्षिप्ताधिकारयोर्भद्रभटपुरुषदत्तयोः पुनरधिकारारोपणम् । अधिकारश्च तादृशेषु व्यसनयोगादनभियुक्तेषु पुनरारोप्यमाणः सकलमेव राज्यस्य मूलं हस्त्यश्वमवसादयेत् । डिङ्गरातबलगुप्तयोरतिलुब्धयोः सकलराज्यप्रदानेनाप्यपरितुष्यतोरनुग्रहः कथं शक्यः ? राजसेनभागुरायणयोस्तु धनप्रणाशभीतयोः कुतोऽनुग्रहस्यावकाशः ? लोहिताक्षविजयवर्मणोरपि दायादमानमसहमानयोरतिमानिनोः कीदृशोऽनुग्रहः प्रीतिं जनयिष्यतीति परिहृतः पूर्वः पक्षः । उत्तरोऽपि खलु वयमचिरादधिगतनन्दैश्वर्याः सहोत्थायिनं प्रधानपुरुषवर्गमुग्रेण दण्डेन पीडयन्तो नन्दकुलानुरक्तानां प्रकृतीनामविश्वास्या एव भवाम इति परिहृत एव । तदेवमनुगृहीतास्मत्पक्षो राक्षसोपदेशप्रवणो महीयसा

म्लेच्छबलेन परिवृतः पितृवधामर्षी पर्वतकपुत्रो मलयकेतुरस्मानभियोक्तुमुद्यतः। सोऽयं व्यायामकालो नोत्सवकाल इति दुर्गसंस्कारे प्रारब्धव्ये किं कौमुदीमहोत्सवेनेति प्रतिषिद्धः।

वसुमतीपतिः शशंस—'आर्य! बहु प्रष्टव्यमत्र। सोऽप्यस्य सर्वस्यानर्थस्य हेतुर्मलकयेतुः कस्मादपक्रामन्नुपेक्षितः?'

नयचणश्चाणक्योऽभणत्—'वृषल! अनुपेक्षणे द्वयी गतिः—निगृह्येत वा, प्रतिश्रुतं राज्यार्धं प्रतिपाद्येत वा। निग्रहे तावत्पर्वतकोऽस्माभिरेव व्यापादित इति कृतघ्नतायाः स्वहस्तो दत्तः स्यात्। प्रतिश्रुतराज्यार्धप्रतिपादनेऽपि पर्वतकविनाशः केवलं कृतघ्नतामात्रफलः स्यादिति मलयकेतुरपक्रामन्नुपेक्षितः।'

चन्द्रगुप्तो भूयो जगाद—'अत्र तावदेवम्। राक्षसः पुनरिहैव वर्तमान आर्येणोपेक्षित इत्यत्र किमुत्तरमार्यस्य?'

अत्राब्रूत मन्त्री—'राक्षसोऽपि स्वामिनि स्थिरानुरागित्वात्सुचिरमेकत्र वासाच्च शीलज्ञानां नन्दानुरक्तानां प्रकृतीनामत्यन्तविश्वास्यः प्रज्ञापुरुषकाराभ्यामुपेतः सहायसंपदाऽभियुक्तः कोशवानिहैवान्तर्नगरे वर्तमानः खलु महान्तमन्तःकोपमुत्पादयेत्। दूरीकृतस्तु बाह्यकोपमुत्पादयन्नपि कथमप्युपायैर्वशयितुं शक्य इत्यत्रस्थ एव हृदयेशयः शङ्कुरिवोद्धृत्य दूरीकृतः।'

भूपतिः पप्रच्छ—'आर्य! कस्माद्विक्रम्य न गृहीतः?'

गुरुणा भणितम्—'राक्षसः खल्वसौ। विक्रम्य गृह्यमाणो युष्मद्बलानि बहूनि नाशयेत् स्वयं वा विनश्येत्। एवं सत्युभयथाऽपि दोषः।'

पृथ्वीपतिना प्रतियोजितम्-'न शक्नुमो वयमार्यस्य वाचमतिशयितुम्। सर्वथाऽमात्यराक्षस एवात्र प्रशस्यतरः।'

सामर्षौ नन्दकुलशत्रुरुदैरयत्—'न भवानिति वाक्यशेषः। मा तावत्। भो वृषल ! तेन किं कृतम् ?'

राजा जगाद—'यदि न ज्ञायते तदा श्रूयताम् ! तेन खलु महात्मना पुरि लब्धायामपि यावदिच्छं नो गले पदे कृत्वोषितम्, अस्मद्बलानां जयघोषणादिषु बलाद्व्याघातः कृतः, विपुलैः स्वनीतिविभवैरत्यर्थं संमोहमापादिता नो मतयो विश्वास्येष्वपि स्वेषु वर्गेषु न विश्वसन्ति।'

चाणक्यो विहस्याब्रवीत्—'एतत्कृतं राक्षसेन ! वृषल ! मया पुनर्ज्ञातं नन्दमिव भवन्तमुद्धृत्य भवानिव भूतले मलयकेतू राजाधिराजपदे नियोजित इति।'

जगतीदयितोऽगदत्-'अन्येनैवेदमनुष्ठितम्। किमत्रार्यस्य?'

चाणक्यः प्रत्यभाषिष्ट-'आः केन ?'

राज्ञोक्तम्—'नन्दकुलविद्वेषिणा दैवेन।'

कौटिल्यः प्रत्यवातिष्ठत-'दैवमविद्वांसः प्रमाणयन्ति।'

पार्थिवेनाभिहितम्—'विद्वांसोऽप्यविकत्थना भवन्ति।'

चाणक्यः सकोपमुवाच—'वृषल ! भृत्यमिव मामारोढुमिच्छसि। अयं करः बद्धामपि शिखां मोक्तुं धावति।'

एवमभिधाय चाणक्यो भूमौ पादं प्रहृतवान्। राजा सम्प्रति सावेगम् 'अये कथं सत्यमेवार्यः कुपितः ?' इति विमर्शान्वितो जातः।

अथ चाणक्योऽपि कृतककोपं संहृत्याभिहितवान्—

'वृषल ! वृषल ! अलमुत्तरोत्तरेण । यद्यसत्तो गरीयान् राक्षसोऽवगम्यते तदिदं शस्त्रं तस्मै दीयताम् ।'

इति कथयित्वा स शस्त्रमुत्ससर्ज । तत उत्थितस्याऽऽकाशे बद्धलक्ष्यस्य तस्य चेतस्येवमभूत्—'राक्षस ! राक्षस ! एष भवतः कौटिल्यबुद्धिविजिगीषोर्बुद्धेः प्रकर्षः ।' एवं विमृशन्स निश्चक्राम ।

अथ वैहीनरिं संबोध्य विशांपतिरुवाच—'आर्य ! अतः प्रभृत्यनादृत्य चाणक्यं चन्द्रगुप्तः स्वयमेव राज्यं करिष्यतीति गृहीतार्थाः क्रियन्तां प्रकृतयः ।'

वैहीनरिर्बभाषे—'दिष्ट्या देव इदानीं देवः संवृत्तः ।'

तद्वचः श्रुत्वा चन्द्रगुप्तचेतसि समजायत—'एवमस्मासु गृह्यमाणेषु स्वकार्यसिद्धिकामः सकामो भवत्वार्यः ।' ततः स शयनगृहं जगाम ।

[ ४ ]

अथ कदाचिदासनस्थे शयनगृहगते शकटदासेन सह सचिन्ते राक्षसे करभकः प्रवृत्तिसारः कुसुमपुरात् समायात् ।

कुमारो मलयकेतुरपि भागुरायणेन समं तदानीमेव तत्रायाति स्म । पथि कुमारः पुरुषम् 'आर्य जाजले ! एक एवाहममात्यराक्षसस्यातर्कितगमनेन प्रीतिमुत्पादयितुमिच्छामि । तदुच्यन्तामस्मद्वचनादनुयायिनो राजानः "कृतमनुगमनक्लेशेन" इति । त्वमपि सपरिजनो निवर्तस्व ' इति न्यवर्तयत् । तस्मिन्निर्गते तेनोक्तम्—'सखे भागुरायण ! विज्ञप्तोऽहमिहागच्छाम्भिर्भद्रभटप्रभृतिभिर्यथा "न वयममात्यराक्षसद्वारेण

कुमारमाश्रयणीयमाश्रयामहे किं तु कुमारस्य सेनापतिं शिखरसेनं द्वारीकृत्य दुष्टामात्यपरिग्रहाच्चन्द्रगुप्तादपरक्ताः कुमारमाभिरामिकगुणयोगादाश्रयणीयमाश्रयामहे" इति। तन्न मया सुचिरमपि विचारयता तेषां वाक्यार्थोऽवधारितः।'

भागुरायणोऽभाणीत्—'कुमार ! न दुर्बोधोऽयमर्थः। विजिगीषुमात्मगुणसंपन्नं प्रियहितद्वारेणाश्रयणीयमाश्रयेदिति ननु न्याय्य एवायमर्थः।'

मलयेन लपितम्—'सखे भागुरायण ! नन्वमात्यराक्षसोऽस्माकं प्रियतमो हिततमश्च।'

भागुरायणो बभाषे—'एवमेतत्। किन्त्वमात्यराक्षसश्चाणक्ये बद्धवैरः, न चन्द्रगुप्ते। तद्यदि कदाचिच्चाणक्यमतिजितकाशिनमसहमानः स साचिव्यपदादवरोपयेत्ततो नन्दकुलभक्त्या नन्दान्वय एवायमिति सुहृज्जनापेक्षया चामात्यराक्षसश्चन्द्रगुप्तेन सह संदधीत। एवं सत्यस्मासु कुमारो न विश्वसेदित्ययमेषां वाक्यार्थः।'

एवमालपन्तावेतौ यदा राक्षसावसथद्वारमवापतुस्तदाऽमू 'भद्र! अपि दृष्टस्त्वया कुसुमपुरे वैतालिकः स्तनकलशः?' इति राक्षसस्य वचनं शुश्रुवतुः।

"कुसुमपुरवृत्तान्तः प्रस्तूयते" इति विज्ञाय तं श्रोतुं मलयकेतुः सभागुरायणस्तत्रैव तस्थौ।

अथ करभकः कौमुदीमहोत्सवप्रतिषेधस्याखिलमुदन्तमश्रावयत्। तच्छ्रुत्वा जहर्षामात्यराक्षसः। करभकोऽग्रतोऽववर्णत्—'ततश्चन्द्रगुप्तेनाज्ञाभङ्गकलुषितेन प्रसङ्गसूचितम-

मात्यस्य गुणं प्रशस्यापभ्रष्टोऽधिकाराच्चाणक्यहतकः ।'

अत्र मलयकेतुरुवाच—'सखे भागुरायण ! गुणप्रशंसया दर्शितश्चन्द्रगुप्तेन राक्षसे पक्षपातः ।'

भागुरायणः प्रत्युवाच—'कुमार ! न तथा गुणप्रशंसया यथा चाणक्यवटोर्निराकरणेन ।'

राक्षसः पप्रच्छ—'किमयमेकः कौमुदीमहोत्सवप्रतिषेधश्चन्द्रगुप्तस्य चाणक्यं प्रति कोपकारणमुतान्यदप्यस्ति ?'

करभको बभाण—'अस्त्यन्यदपि चन्द्रगुप्तस्य कोपकारणम् "उपेक्षितोऽनेनापक्रामन् कुमारो मलयकेतुरमात्यराक्षसश्च" इति ।'

तच्छ्रुत्वा सुतरामहृष्यद्राक्षसः । सोऽब्रवीत्—'सखे शकटदास ! हस्तगतो मे चन्द्रगुप्तो भविष्यति ।'

शकटदासेनोक्तम्—'इदानीं चन्दनदासस्य बन्धान्मोक्षो भवतां च पुत्रदारैः सह समागमः । जीवसिद्धेः सम्प्रति क्लेशच्छेदः ।'

एतत्सर्वमाकर्ण्य मलयकेतुर्भागुरायणमपृच्छत्—'सखे ! "हस्तगतो मे चन्द्रगुप्तो भविष्यति" इति व्याहरतः कोऽस्याभिप्रायः ?'

भागुरायणो व्याख्यातवान्—'किमन्यत् ? चाणक्यादपकृष्टस्य चन्द्रगुप्तस्योद्धरणे सौकर्यं पश्यति ।'

सर्वां वार्तां श्रुत्वा राक्षसः करभकं विश्रमयितुं शकटदासमादिदेश ।

अथ राक्षसः कुमारमादिदृक्षत । इदानीं मलयकेतुस्तमुप-

ससर्प। दृष्ट्वा राक्षस आसनादुत्थाय तं मानपुरस्सरमुपावेशयत्।

मलयकेतुः पप्रच्छ—'आर्य! अपि सह्या शिरोवेदना?'

राक्षसेनाऽऽख्यातम्—'कुमार! कुमारस्याधिराजशब्देनातिरस्कृते कुमारशब्दे कुतो मे शिरोवेदनायाः सह्यता?'

कुमारोऽजगदत्—'ऊरीकृतमेतदार्येण न दुष्प्रापं भविष्यति। तत्कियन्तं कालमस्माभिरेवं संभृतबलैरपि शत्रुव्यसनमुदीक्षमाणैरुदासितव्यम्?'

राक्षसो बभाषे—'कुमार! कुतोऽद्यापि कालहरणस्यावकाशः? प्रतिष्ठस्व विजयाय।'

मलयकेतुरनुयुयुजे—'आर्य! शत्रुव्यसनमुपलब्धम्?'

अमात्येनोक्तम्—'उपलब्धम्। सचिवव्यसनं नु तत्। अपकृष्टश्चाणक्याच्चन्द्रगुप्तः।'

मलयकेतुरुदैरयत्—'आर्य! सचिवव्यसनमव्यसनमेव।'

चाणक्यरिपुरुवाच—'अन्येषां भूपतीनां कदाचिदमात्यव्यसनमव्यसनं स्यात्। न पुनश्चन्द्रगुप्तस्य।'

मलयकेतुरवोचत्—'आर्य! नैतदेवम्। चन्द्रगुप्तप्रकृतीनां चाणक्यदोषा एवापरागहेतवः। तस्मिंश्च निराकृते प्रथममपि चन्द्रगुप्तेऽनुरक्ताः सम्प्रति सुतरामेव तत्रानुरागं दर्शयिष्यन्ति।'

राक्षसेन प्रतिभणितम्—'मा मैवम्। ताः खलु द्विप्रकाराः प्रकृतयः—चन्द्रगुप्तसहोत्थायिन्यो नन्दानुरक्ताश्च। तत्र चन्द्रगुप्तसहोत्थायिनीनां चाणक्यदोषा एव विरागहेतवो न नन्दकुलानुरक्तानाम्। तास्तु खलु नन्दकुलमनेन पितृकुलभूतं

घातितमित्यपरागामर्षाभ्यां विप्रकृताः सत्यः स्वाश्रयमलभमानाश्चन्द्रगुप्तमेवानुवर्तन्ते । त्वादृशं पुनः प्रतिपक्षोद्धरणे संभावितशक्तिमभियोक्तारमासाद्य क्षिप्रमेनं परित्यज्य त्वामेवाश्रयिष्यन्ते । अत्र निदर्शनं वयमेव ।'

मलयकेतुना मन्त्रितम्—'यद्येवमभियोगकालमार्यः पश्यति ततः किमास्यते ? मदीया वारणघटा नगरं रुन्धन्तु ।'

इत्यभिधाय निष्क्रान्तो भागुरायणेन समं मलयकेतुः । अमात्योऽपि प्रस्थानदिवसनिरूपणमनाः पुरुषमपृच्छत्—'प्रियंवदक ! ज्ञायतां सांवत्सरिकाणां द्वारि कस्तिष्ठति ?' स निष्क्रम्य पुनः प्रविश्य व्यजिज्ञपत्—'अमात्य ! एष खलु सांवत्सरिकः क्षपणकः ।'

राक्षसः प्रथममेव क्षपणकनामश्रवणमनिमित्तं गृहीतवान्, तथापि तस्य प्रवेशमादिदेश । क्षपणकः किंचिद्विमृश्य मलयकेतुपक्षप्रतिकूलां तिथिं प्रस्थातुं न्यरूपयत् । चाणक्यद्विषदाऽपरैः सांवत्सरिकैः सह संवादयितुमुक्तः क्षपणकः कुपितो निर्जगाम ।

[ ५ ]

अथैकदा प्रास्थित लेखमलङ्करणस्थगिकां चादाय सिद्धार्थकः । नयचुञ्चुना चाणक्येनायं लेखोऽतिकौशलेन शकटदासेन लेखयित्वा राक्षसमुद्रया मुद्रितोऽभूत् । तथैवेयमाभरणपेटिकाऽपि तयैव मुद्रया लाञ्छिताऽवर्तिष्ट ।

कुसुमपुरं प्रति प्रस्थितं सिद्धार्थकं क्षपणकः समापत्य मिलितः । वार्त्ताप्रसङ्गेन क्षपणकेन कथितम्—'इदानीमितः प्रत्यासन्ने कुसुमपुरे न कोऽप्यमुद्रालाञ्छितो निर्गन्तुं प्रवेष्टुं

वाऽनुमोद्यते। तद्यदि भागुरायणस्य मुद्रालाञ्छितस्तदा गच्छ विश्रब्धः, अन्यथा तिष्ठ।'

तथा कथितोऽपि न न्यवर्तत सिद्धार्थकः। अमुद्रालाञ्छितोऽपि स प्रस्थित एव। जिगमिषुः क्षपणकोऽपि मुद्रां याचितुं भागुरायणं प्रत्यासीदत्।

मुद्रा वितरीतुं स्थितो भागुरायणश्चिन्तयति स्म—'कष्टमेवमयमस्मासु स्नेहवान् कुमारो मलयकेतुरतिसन्धातव्य इत्यहो दुष्करम्।' इदानीं मलयकेतुरपि 'अहो राक्षसं प्रति विकल्पबाहुल्यादाकुला मे बुद्धिर्न निश्चयमधिगच्छति' इति विभावयन्भागुरायणस्याभ्याशमुपेतः। तं वीक्ष्य च स पराङ्मुखस्यैव भागुरायणस्य पाणिभ्यां नयने पिधातुमैच्छत्।

इदानीं क्षपणको मुद्रानिमित्तं तत्र संप्राप्तः। तमवलोक्य 'अये राक्षसस्य मित्रं जीवसिद्धिः!' इत्यवधारयन् भागुरायणो बभाण—'भदन्त! न खलु राक्षसस्य प्रयोजनमेव किंचिदुद्दिश्य गम्यते।'

तच्छ्रुत्वा क्षपणकः कर्णौ पिधायाभ्यधात्—'शान्तं पापम्! शान्तं पापम्! श्रावक! तत्र गमिष्यामि यत्र राक्षसस्य पिशाचस्य वा नामापि न श्रूयते।'

भागुरायणो जगाद—'बलवान् सुहृदि प्रणयकोपः। तत्किमपराद्धं राक्षसेन भदन्तस्य?'

क्षपणको बभाषे—'श्रावक! न मे किमपि राक्षसेनापराद्धम्, स्वयमेव मन्दभाग्य आत्मनोऽपराध्यामि।'

भागुरायणेन भणितम्—'भदन्त! वर्धयसि मे कौतूहलम्। श्रोतुमिच्छामि।'

मलयकेतोर्मनसि समजायत—'अहमपि श्रोतुमिच्छामि।'

क्षपणकस्तस्या वार्तायाः कीर्तन आत्मनोऽनिच्छामद्योतयत्। तदुक्तिमाकर्ण्य भागुरायणेनाभिहितम्—'अहमपि मुद्रां न दास्यामि।'

उपयुक्तमवसरं वीक्षमाणः क्षपणकोऽभाषिष्ट—'का गतिः? शृणोतु श्रावकः। अस्ति तावदहं मन्दभाग्यः प्रथमं पाटलिपुत्रे निवसन् राक्षसेन मित्रत्वमुपगतः। तस्मिन्नवसरे राक्षसेन गूढविषकन्याप्रयोगमुत्पाद्य घातितो देवः पर्वतेश्वरः।'

तच्छ्रुत्वा मलयकेतुः सास्रः संजातः। तस्य चेतसि चैवमभूत्—'कथं राक्षसेन घातितस्तातो न चाणक्येन!'

भागुरायणेनानुयुक्तम्—'ततस्ततः?'

क्षपणको व्याजहार—'ततोऽहं राक्षसस्य मित्रमिति कृत्वा चाणक्यहतकेन सनिकारं नगरान्निर्वासितः। इदानीमपि राक्षसेनानेककार्यकुशलेन किमपि तादृशमारभ्यते येनाहं जीवलोकान्निष्कासिष्ये।'

भागुरायणेन प्रतिभणितम्—'भदन्त! "प्रतिश्रुतराज्यार्धमयच्छता चाणक्यहतकेनेदमकार्यमनुष्ठितम्, न राक्षसेन" इति श्रुतमस्माभिः।'

कर्णौ पिहितवता क्षपणकेन कथितम्—'शान्तं पापम्! चाणक्येन विषकन्याया नामापि न श्रुतम्।'

क्षपणकाय मुद्रां यच्छन्भागुरायणोऽभाषिष्ट—'एहि, कुमारं श्रावय।'

अथ मलयकेतुरुपसृत्यावदत्—'सखे! सुहृन्मुखाद्रिपुमधिकृत्य भाषितं श्रवणविदारणं वचः श्रुतम्; येन च

ममेदं चिरादपि पितुर्वधव्यसनमद्य द्विगुणमिव वर्धते ।'

मलयकेतोरुक्तिमाकर्ण्याऽऽत्मानं कृतार्थं मन्यमानः क्षपणको निर्ययौ ।

ततो मलयकेतुः प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वाऽभिदधे—'राक्षस ! राक्षस ! युक्तम् ! युक्तम् ! "अयं मम मित्रम्" इति निर्वृतचित्तवृत्तिं विश्रम्भतस्त्वन्निवेशितसर्वकार्यं तातं बन्धुजनाश्रुतोयैः सह निपात्य रे राक्षस ! अन्वर्थतोऽपि राक्षस एवासि ।'

मलयकेतुं सामर्षं वीक्ष्य राक्षसमधिकृत्यात्याहितमुत्पश्यन् भागुरायणः 'रक्षणीया राक्षसस्य प्राणा इत्यार्यादेशः । भवत्वेवं तावत्' इति प्रत्याकलय्य व्याहार्षीत्—'कुमार ! अलमावेगेन । तस्मिन्काले सर्वार्थसिद्धिं राजानमिच्छतो राक्षसस्य चन्द्रगुप्तादपि बलीयस्तया सुगृहीतनामा देवः पर्वतेश्वर एवार्थपरिपन्थी महानरातिरासीत् । तदत्रवस्तुनि नोपालम्भनीयो राक्षसः । आ नन्दराज्यलाभादुपग्राह्यश्च, परतः परिग्रहे वा परित्यागे वा कुमारः प्रमाणम् ।'

कुमारेणोक्तम्—'एवं सखे ! सम्यग्दृष्टवानसि । यतोऽमात्यवधे प्रकृतिक्षोभः स्यात्, एवं च संदिग्धो विजयः ।'

अथ पुरुषः कटकान्निष्क्रामन्तमगृहीतमुद्रं गुल्मस्थानाधिकृतेन दीर्घरक्षेण गृहीतं सलेखं सिद्धार्थकं कुमारस्य पुरस्तादुपस्थापितवान् ।

तमवलोक्य भागुरायणोऽप्राक्षीत्—'भद्र ! किमयमागन्तुकः, आहोस्विदिहैव कस्यचित्परिग्रहः ?'

सिद्धार्थको न्यवेदयत्—'आर्य ! अहं खल्वमात्यराक्षसस्य सेवकः।'

भागुरायणो जगाद—'भद्र! तत्किमगृहीतमुद्रः कटकान्निष्कामसि ?'

सिद्धार्थको व्यजिज्ञपत्—'आर्य ! कार्यगौरवेण त्वरायितोऽस्मि।'

मलयकेतुसखः पप्रच्छ—'कीदृशं तत्कार्यगौरवं यद्राजशासनमुल्लङ्घयति ?'

ततः स सिद्धार्थकहस्ताल्लेखमादाय तस्य मुद्रां दृष्ट्वाऽब्रवीत्—'कुमार ! अयं लेखः। राक्षसनामाङ्किता च मुद्रा।'

कुमारः समादिक्षत्—'मुद्रां परिपालयन्नुद्घाट्य दर्शय।'

भागुरायणस्तथा कृत्वा दर्शितवान्। मलयकेतुरवाचयत् "स्वस्ति। यथास्थानं कुतोऽपि कोऽपि कमपि पुरुषविशेषमवगमयति। अस्मत्प्रतिपक्षं निराकृत्य दर्शिता काऽपि सत्यता सत्यवादिना। साम्प्रतमेतेषामपि प्रथमसुपन्यस्तसंधीनामस्मत्सुहृदां पूर्वप्रतिज्ञातसंधिपरिपणनप्रोत्साहनेन सत्यसंधः प्रीतिमुत्पादयितुमर्हति। एतेऽप्येवमनुगृहीताः सन्तः स्वाश्रयविनाशेनोपकारिणमाश्रयिष्यन्ति। अविस्मृतमेतत्सत्यवतः स्मारयामः। एतेषां मध्ये केचिदरेः कोषहस्तिभ्यामर्थिनः, केचिद्विषयेणेति। अलंकारत्रयं च सत्यवता यदनुप्रेषितं तदुपगतम्। मयाऽपि लेखस्याशून्यार्थं किंचिदनुप्रेषितं तदुपगमनीयम्। वाचिकं चाऽऽप्ततमादस्माच्छ्रोतव्यम्" इति। ततः सोऽवदत्—'सखे भागुरायण ! कीदृशो लेखः ?'

भागुरायणस्तदेव सिद्धार्थकमपृच्छत् ।

तेनोक्तम्—'आर्य ! न जानामि ।'

भागुरायणः सरोषमभाषत—'एष जानासि ।' ततः स सेवकमादिदेश—'भासुरक ! बहिर्नीत्वा तावत्ताड्यतां यावत् कथयति ।'

तच्छ्रुत्वा सेवकः सिद्धार्थकेन सार्धं निष्क्रान्तः । क्षणेनैव स पुनः प्रविश्य विज्ञापयामास—'आर्य ! इयं मुद्रालाञ्छिता पेटिका तस्य ताड्यमानस्य कक्षातो निपतिता ।'

पेटिकां वीक्ष्य भागुरायणोऽवदत्—'कुमार ! इयमपि राक्षसमुद्राङ्कितैव ।'

मलयकेतुरुवाच—'सखे ! अयं लेखस्याशून्यार्थो भविष्यति । इमामपि मुद्रां परिपालयन्नुद्घाट्य दर्शय ।'

भागुरायणस्तथा कृत्वाऽदर्शयत् । मलयकेतुस्तद्विलोक्याऽब्रवीत्—'अये ! तदिदमाभरणं यन्मया स्वशरीरादवतार्य राक्षसस्य प्रेषितम् । 'व्यक्तं चन्द्रगुप्तस्य लेखः ।'

भागुरायणेन व्याहृतम्—'कुमार ! एष निर्णीयत एव संशयः ।' ततः स भासुरकमचकथत्—'भद्र ! पुनरपि ताड्यताम् ।'

निर्गतो भागुरायणोऽचिराद् भूयः सिद्धार्थकेन समं प्रविश्याशंसीत्—'एष खलु ताड्यमानः कुमारस्यैव निवेदयामीति भणति ।'

अथ सिद्धार्थकोऽपि पादयोर्निपत्य निवेदयामास—'अभयेन मे प्रसादं करोत्वार्यः ।'

मलयकेतुनाभिहितम्—'भद्र ! अभयमेव परवतो जनस्य। निवेद्यतां यथावस्थितम् ।'

सिद्धार्थकोऽब्रवीत्—'निशामयतु कुमारः । अहं खल्वमात्यराक्षसेनेमं लेखं दत्त्वा चन्द्रगुप्तसकाशं प्रेषितः ।'

मलयकेतुराज्ञापयत्—'वाचिकमिदानीं श्रोतुमिच्छामि ।'

सिद्धार्थको विज्ञापितवान्—'कुमार ! आदिष्टोऽस्म्यमात्येन यथा "एते मम प्रियवयस्याः पञ्च राजानस्त्वया सह समुत्पन्नस्नेहाः । ते यथा कुलूताधिपश्चित्रवर्मा, मलयनराधिपः सिंहनादः, काश्मीरदेशनाथः पुष्कराक्षः, सिन्धुराजः सिन्धुषेणः, पारसीको मेघनाद इति । एतेषु प्रथमगृहीतास्त्रयो राजानो मलयकेतोर्विषयमिच्छन्ति, अपरौ हस्तिबलं कोषं च। तद्यथा चाणक्यं निराकृत्य महाभागेन मम प्रीतिः समुत्पादिता तथैतेषामपि प्रथमभणितोऽर्थः संपादयितव्यः" इत्येतावान् संदेशः ।'

संदेशमाकर्ण्य कुमारो व्यकल्पयत् 'कथं चित्रवर्मादयोऽपि मामभिद्रुह्यन्ति ? अथवाऽत एव राक्षसे निरतिशया प्रीतिः'।

ततस्तेनोक्तम्—'विजये ! राक्षसं द्रष्टुमिच्छामि ।'

राक्षसस्तदानीमेव बलानां प्रयाणक्रमं निर्दिष्टवानासीत्। कुमारस्यादेशमादाय स पुरुषमादिक्षत्—'उच्यतां शकटदासो यथा "परिधापिताः कुमारेणाभरणानि वयम् । तन्न युक्तमनलंकृतैः कुमारदर्शनमनुभवितुम् । अतो यत्तदलंकरणत्रयं क्रीतं तन्मध्यादेकं दीयताम्" इति ।'



पुरुष आभूषणमानीतवान् । राक्षस आत्मानमलंकृत्य

कुमारं प्रत्यासन्नवान् । अभिवादनाद्यनन्तरं कुमारेण भणितम्—'आर्य ! चिरदर्शनेनाऽऽर्यस्य वयमुद्विग्नाः ।'

राक्षसेन प्रतिभणितम्—'कुमार ! प्रयाणे प्रतिविधानमनुतिष्ठता मया कुमारादयमुपालम्भोऽधिगतः ।'

कुमारोऽब्रवीत्—'आर्य ! प्रयाणे कथं प्रतिविहितमिति श्रोतुमिच्छामि ।'

राक्षसेन भणितम्—'कुमार ! एवमादिष्टाः कुमारानुयायिनो राजानः "पुरस्तात् खसमगधगणैः सैन्यैर्मामनुव्यूह्य प्रस्थातव्यम् । सयवनपतिभिर्गान्धारैर्मध्ययाने प्रयत्नः संविधेयः । चीणहूणैः संभृता वीराः शकनरपतयः पश्चात्तिष्ठन्तु । शिष्टश्च कौलूताद्यो राजलोकः कुमारं पथि पथि वृणुयात्" इति ।'

तच्छ्रुत्वैवमुत्थितं मलयकेतुमनसि 'कथं य एव मद्विनाशेन चन्द्रगुप्तमाराधयितुमुद्यतास्त एव मां परिवृण्वन्ति ।' ततः सोऽब्रवीत्—'आर्य ! अस्ति कश्चिद्यः कुसुमपुरं प्रति गच्छति तत आगच्छति वा ?'

अमात्यः प्रत्यवदत्–'अवसितमिदानीं गतागतप्रयोजनम् । अल्पैरहोभिर्वयमेव तत्र गन्तारः ।'

कुमारः प्रत्यवातिष्ठत—'यद्येवं ततः किमार्येणायं सलेखः पुरुषः प्रेषितः ?'

राक्षसस्तमवलोक्य व्याजहार—'अये सिद्धार्थक ! भद्र ! किमिदम् ?'

सिद्धार्थकः सबाष्पं लज्जां नाटयन्नुवाच—'प्रसीदत्वमात्यः । ताड्यमानेन मया न पारितं धारयितुम् ।'

राक्षसः सविस्मयमुवाच—'भद्र ! कीदृशं रहस्यमिति न खल्ववगच्छामि ।'

सिद्धार्थको भूयोऽप्युवाच–'ननु विज्ञापयामि ताड्यमानेन मया...' एवमर्धोक्त एव स सभयमधोमुखस्तस्थौ ।

कुमारेणोदीरितम्—'भागुरायण ! स्वामिनः पुरस्ताद्भीतो लज्जितो वा नैष कथयिष्यति । तत्स्वयमेवार्याय कथय ।'

भागुरायणोऽब्रूत—'अमात्य ! एष कथयति यथा "अहममात्येन लेखं दत्त्वा वाचिकं संदिश्य चन्द्रगुप्तसकाशं प्रेषितः" इति ।'

राक्षसः पप्रच्छ—'भद्र सिद्धार्थक ! अपि सत्यम् ?'

सिद्धार्थको लज्जां नाटयन्नुवाच—'एवमतिताड्यमानेन मया निवेदितम् ।'

अमात्येनोक्तम्—'अनृतमेतत् । ताड्यमानः पुरुषः किमिव न ब्रूयात् ?'

कुमारोऽचकथत्—'सखे भागुरायण ! दर्शय लेखम् ।'

भागुरायणस्तथा व्यधत्त । पत्रं वाचयित्वाऽमात्य उवाच —'कुमार ! शत्रोः प्रयोग एषः ।'

मलयकेतुनाऽनुयुक्तम्—'लेखस्याशून्यार्थमार्येणेदमप्याभरणमनुप्रेषितम् । तत्कथं शत्रोः प्रयोग एषः ?'

आभरणं निर्वर्ण्य राक्षसोऽभणत्—'कुमारेणैतन्मह्यमनुप्रेषितम् । मयाऽप्येतत्कस्मिंश्चित्परितोषस्थाने सिद्धार्थकाय दत्तम् ।'

भागुरायणो निजगाद—'ईदृशस्य विशेषतः कुमारेणात्मगात्रादवतार्य प्रसादीकृतस्यैवं परित्यागभूमिः ?'

कुमारोऽकथयत्—' "वाचिकमप्याप्ततमात् सिद्धार्थकाच्छ्रोतव्यम्" इति लिखितमार्येण ।'

अमात्योऽब्रवीत्—'कुतो वाचिकम् ? कस्य वाचिकम् ? लेख एवास्मदीयो न भवति ।'

कुमारः कथितवान्—'इयं तर्हि कस्य मुद्रा ?'

राक्षस आचष्ट—'कपटमुद्रामुत्पादयितुं शक्नुवन्ति धूर्त्ताः।'

भागुरायणो ब्रूते स्म—'कुमार ! सम्यगमात्यो विज्ञापयति । भद्र सिद्धार्थक ! केनायं लिखितो लेखः ?'

सिद्धार्थकस्तु राक्षसमुखमवलोक्य तूष्णीमधोमुखस्तस्थौ । ततो भागुरायणेन भूयोऽपि ताडयितुं भर्त्सितो बभाण—'आर्य ! शकटदासेन ।'

अत्र राक्षसो बभाषे—'कुमार ! यदि शकटदासेन लिखितस्ततो मयैव लिखितः ।'

अथ कुमारः शकटदासं द्रष्टुमियेष । परं भागुरायणः 'आगत्य शकटदासः सोऽयं लेख इति प्रत्यभिज्ञाय पूर्ववृत्तं प्रकाशयेत्' इति शङ्कमानोऽभिदधौ—'कुमार ! न कदाचिदपि शकटदासोऽमात्यस्याग्रतो मया लिखितमिति प्रतिपत्स्यते । अतोऽन्यलिखितमस्यानीयताम् । वर्णसंवाद एवैतं विभावयिष्यति । मुद्रामप्यानयतु विजया ।'

मलयकेतुस्तत्प्रत्यपद्यत । विजयाऽचिरादुभयमानीतवती । कुमार उभयं विलोक्याशंसत्—'आर्य ! संवदन्त्यक्षराणि ।'

अक्षरसंवादं वीक्ष्य राक्षसेन प्रत्याकलितम्—'किं नु शकटदासेन विस्मृतस्वामिभक्तिना, लुब्धेन चलेष्वर्थेषु न तु

यशःस्वनपायिषु, पुत्रदाराणां स्मृतं स्यात् ? सुव्यक्तं भेद-पटुभिः परैः सार्धं संधाय भर्तृस्नेहपराङ्मुखेन प्राणार्थिना शकटदासेन कृपणं चेष्टितम् ।'

ततो मलयकेतुरमात्यं विलोक्यावदत्—'आर्य ! "अलंकारत्रयं श्रीमता यदनुप्रेषितं तदुपगतम्" इति यल्लिखितं तन्मध्यात् किमिदमेकम् ?' ततस्तदाभरणं निर्वर्णयन् स प्रत्यभिजज्ञौ यथा 'कथं तातेन धृतपूर्वमिदमाभरणम् ?' ततः सोऽमात्यं पप्रच्छ—'आर्य ! कुतोऽयमलंकारः ?'

राक्षसेन भणितम्—'वणिग्भ्यः क्रयादधिगतः ।'

अथ कुमारश्चेटीमपृच्छत्—'विजये ! प्रत्यभिजानासि भूषणमिदम् ?'

विजया विलोक्य सबाष्पमुवाच—'कथं न प्रत्यभिजानामि । इदं सुगृहीतनामधेयेन पर्वतेश्वरेण धारितपूर्वम् ।'

मलयकेतुरिदानीं तातस्य स्मरन् सबाष्पः समजायत ।

अथ राक्षसो व्यमृशत्—'कथं पर्वतेश्वरेण धृतपूर्वाणीत्याह । व्यक्तमेवास्य भूषणानि चाणक्यप्रयुक्तेन वणिग्जनेनास्मासु विक्रीतानि ।'

मलयकेतुः पुनरप्राक्षीत्—'आर्य ! तातेन धृतपूर्वाणां विशेषतश्चन्द्रगुप्तहस्तगतानां क्रयादधिगमः कथं युज्यते ?' ततस्तेनैव पुनरभिहितम्—'अथवा युज्यत एवैतत् । अधिक लाभमिच्छतश्चन्द्रगुप्तस्य विक्रेतुरेतेषां क्रूरेण भवता वयं मूल्यं कल्पिताः ।'

विस्मितो राक्षसोऽचिन्तयत्—'अहो सुश्लिष्टोऽभूच्छत्रुप्रयोगः । "अयं लेखो न मम" इदमुत्तरं न युज्यते यतः

मदीया मुद्रा लेखे वरीवर्त्ति। "शकटेन सौहार्दं खण्डितम्" एतदपि कथं श्रद्धेयं स्यात्? को नाम मौर्यनरपतौ भूषण-विक्रयं संभावयेत्। तस्मादत्र सम्प्रतिपत्तिरेव वरं न तु ग्राम्यमुत्तरम्।'

लेखमलङ्करणस्थगिकां च निर्दिशन् कुमारोऽन्वयुङ्क्त—'किमिदम्?'

राक्षसः सबाष्पमाह स्म—'विधिविलसितम्।'

मलयकेतुः सरोषमभाषिष्ट—'किमद्यापि निह्नूयत एव "विधेः किलैतद्व्यवसितं न लोभस्य" इति। अनार्य! कृतघ्न! पुरा त्वया तीव्रविषप्रयोगविषमां कन्यां प्रयुज्य विश्रम्भप्रवणो मम पिता कथाशेषतां नीतः। अहो! सम्प्रति मन्त्राधिकार आहितगौरवेण भवतैते वयं प्रलयाय रिपौ मांसवद्विक्रेतुं प्रारब्धाः।'

'अयमपरो गण्डस्योपरि स्फोटः' इति मनसि निधाय राक्षसः कर्णौ पिधायाभ्यधात्—'शान्तं पापम्! शान्तं पापम्! नाहं पर्वतेश्वरे विषकन्यां प्रयुक्तवान्।'

मलयकेतुरपृच्छत्—'केन तर्हि व्यापादितस्तातः?'

राक्षस उवाद—'दैवमत्र प्रष्टव्यम्।'

कुमारः सक्रोधमभ्यधत्त—'दैवमत्र प्रष्टव्यम्। न क्षपणको जीवसिद्धिः?'

राक्षसो मनसि मन्त्रितवान्—'कथं जीवसिद्धिरपि चाणक्यप्रणिधिः! हन्त! रिपुभिर्मे हृदयमपि स्वीकृतम्!'

अथ मलयकेतुः सामर्षमभाषिष्ट—'भासुरक! आज्ञाप्यतां शिखरसेनः। "य एते राक्षसेन सह सुहृत्तामुत्पाद्य-

त्सच्छरीरद्रोहेण चन्द्रगुप्तमाराधयितुकामाः पञ्च राजानः—कौलूतश्चित्रवर्मा, मलयनरपतिः सिंहनादः, काश्मीरः पुष्कराक्षः, सिन्धुराजः सिन्धुषेणः, पारसीकाधिपतिर्मेघनादः—इति। एतेषु त्रयो मदीयां भूमिं कामयन्ते, ते गम्भीरश्वभ्रमभिनीय पांशुभिः पूर्यन्ताम्। इतरौ तु हस्तिबलकामुकौ हस्तिनैव घात्येताम्" इति।' ततः स राक्षसमभिदधे—'राक्षस! राक्षस! नाहं विश्रम्भघाती राक्षसः। मलयकेतुः खल्वहम्! तद्गच्छ। समाश्रीयतां सर्वात्मना चन्द्रगुप्तः।'

एवं गते भागुरायणो व्यजिज्ञपत् –'कुमार! कृतं कालहरणेन। साम्प्रतं कुसुमपुरोपरोधायाज्ञाप्यन्तामस्मद्बलानि।'

ततः प्रातिष्ठत सपरिजनो मलयकेतुः।

राक्षसः सावेगं प्रत्याकलितवान्—'हा! धिक्! कष्टम्! तेऽपि घातिताश्चित्रवर्मादयस्तपस्विनः। तत्कथं सुहृद्विनाशाय राक्षसश्चेष्टते न रिपुविनाशाय। तत्किमिदानीं मन्दभाग्यः करवाणि? किं तपोवनं गच्छामि? उत भर्तॄननुयामि? किं वा खड्गसखोऽरिबले पतामि? अयुक्तमेतच्चन्दनदासमोक्षरभसं चेतो नानुमन्यते।'

[ ६ ]

अस्ति तावच्चाणक्यनीतिमोहितमतिना मलयकेतुहतकेन निष्कास्य राक्षसं हताश्चित्रवर्मप्रमुखाः प्रधानाः पञ्च पार्थिवाः। ततः 'असमीक्ष्यकार्येष दुराचारः' इत्युज्झित्वा मलयकेतुकटकं भूमिं कुशलतायै भयविलोलशेषसैनिकपरिवारेषु स्वकं स्वकं विषयं सभयं प्रस्थितेषु पार्थिवेषु, निर्विण्णहृदयेषु सकलसामन्तेषु, भद्रभटपुरुषदत्तडिङ्गरातबलगुप्तराजसेनभागुरायण-

रोहिताक्षविजयवर्मप्रमुखैः संयम्य गृहीतो मलयकेतुः। ततः प्रभूतसारसाधनसमेतेन कुसुमपुरान्निष्क्रम्य चाणक्येन प्रतिपन्नमराजलोकमशेषं म्लेच्छबलम्। तस्मिन् भयविलोले वर्धमाने मलयकेतुकटकान्निष्क्रम्योदुम्बरनामधेयेन चरेणानुसंधीयमानः पाटलिपुत्रमयासीच्चन्दनदासस्नेहेन राक्षसः।

उदुम्बराद्राक्षसवार्तां विज्ञाय कौटिल्यस्तं जीर्णोद्याने प्रेक्षितुं चरान्तरं प्रस्थापयामास। स कृतशीर्षावगुण्ठनं सशस्त्रममात्यराक्षसमायान्तमवलोक्य जीर्णोद्यानपादपैरन्तरितशरीरः 'कुत्रायमासनपरिग्रहं करोति' इति प्रेक्षितुं प्रवृत्तः।

बलवद्विषण्णो राक्षसः कस्मिंश्चिच्छिलातल उपविष्टः। तमासीनं दृष्ट्वा चरश्चाणक्यादेशं संपादयितुमुपक्रान्तः। स राक्षसमपश्यन्निव तस्याग्रतो रज्जुपाशेन कण्ठमुद्बबन्ध।

पतिता तत्र राक्षसदृष्टिः। तं विलोक्य 'अहमिव दुःखितस्तपस्वी' इति विभावयन् राक्षसस्तं पर्यपृच्छत्—'भद्र! किमिदमनुष्ठीयते?'

स सबाष्पमुवाच—'आर्य! यत्प्रियवयस्यविनाशदुःखितोऽस्मादृशो मन्दभाग्योऽनुतिष्ठति।'

राक्षसो भूयः पप्रच्छ—'हे व्यसनसब्रह्मचारिन्! यदि न गुह्यं नातिभारिकं वा ततः श्रोतुमिच्छामि।'

पुरुषस्तच्छ्रावयितुं समयाभावं व्यज्ञापयत्। परं राक्षसस्तं कथयितुं पुनरप्यभ्यर्थयत। एवं सति स उवाच—'अस्ति तावदत्र नगरे मणिकारश्रेष्ठी विष्णुदासो नाम। स मम प्रियवयस्यो ज्वलनं प्रवेष्टुकामो नगरान्निष्क्रान्तः। अहमपि

यावत्तस्याश्रोतव्यं न शृणोमि तावदात्मानमुद्बध्य व्यापादयितुमिदं जीर्णोद्यानमागतः।'

अथ 'विष्णुदासश्चन्दनदासस्य प्रियसुहृत्' इति विदितो राक्षसोऽधुना चन्दनदासस्यानिष्टमाशङ्कमानस्तं पुरुषं विष्णुदासस्याग्निप्रवेशे हेतुं वर्णयितुं दृढं निर्बबन्ध। ततः स पुरुष उवाच—'अस्तीह नगरे मणिकारश्रेष्ठी चन्दनदासो नाम। स एतस्य विष्णुदासस्य प्रियवयस्यो भवति। ततो विष्णुदासेन वयस्यस्नेहसदृशमद्य विज्ञप्तश्चन्द्रगुप्तः। "देव! अस्ति मे गेहे कुटुम्बभरणपर्याप्तोऽर्थः। तस्य विनिमयेन मुच्यतां प्रियवयस्यश्चन्दनदासः" इति। तत एवं भणितेन चन्द्रगुप्तेन प्रतिभणितम् "न मयाऽर्थस्य कारणेन चन्दनदासः संयमितः, किं तु प्रच्छादितोऽनेनामात्यराक्षसस्य गृहजनो बहुशो याचितेनापि न समर्पितः इति। तद्यदि तं समर्पयति तदाऽस्य मोक्षः, अन्यथा प्राणहरोऽस्य दण्डः" इति। एवं भणित्वा वध्यस्थानमानायितश्चन्दनदासः। ततो "यावद्वयस्य चन्दनदासस्याश्रोतव्यं न शृणोमि तावज्ज्वलनं प्रविशामि" इति श्रेष्ठी विष्णुदासो नगरान्निष्क्रान्तः, अहमपि "विष्णुदासस्याश्रोतव्यं यावन्न शृणोमि तावदुद्बध्याऽऽत्मानं व्यापादयामि" इति जीर्णोद्यानमागतः।'

राक्षसेन भणितम्—'भद्र! गच्छेदानीं शीघ्रं विष्णुदासं ज्वलनप्रवेशान्निवारय। अहमप्यनेन व्यवसायसुहृदा निस्त्रिंशेन चन्दनदासं मरणान्मोचयामि।'

पुरुषो बभाषे—'आर्य! एवं श्रेष्ठिचन्दनदासजीवितप्रदानपिशुनितं विषमदशाविपाकनिपतितं साधुं न शक्नोमि

त्वां निर्णीय प्रतिपत्तुम् "किं सुगृहीतनामधेया अमात्य-राक्षसपादा यूयं दिष्ट्या दृष्टाः" इति। तत्कुरु मे प्रसादं संदेहनिर्णयेन।' एवमभिधाय स पादयोः पतितः।

अमात्य ऊचे–'सोऽहमनुभूतभर्तृवंशविनाशः सुहृद्विपत्ति-हेतुरनार्यो दुर्गृहीतनामधेयो यथार्थो राक्षसः। उत्तिष्ठ, अल-मिदानीं कालहरणेन।'

एवमुक्त्वा राक्षस आकृष्टखड्गः परिक्रमितुमारब्धः। ततः पुरुषः पुनरपि पादयोर्निपत्योवाच—'घातकाः यं कमपि गृहीतशस्त्रमपूर्वं पुरुषं पृष्ठतो वाऽग्रतो वा प्रेक्षन्ते, तदात्मनो जीवितं परिरक्षन्तोऽप्रमत्ता अवध्यस्थाने वध्यं व्यापादयन्ति। तस्मादेवं गृहीतशस्त्रैरमात्यपादैर्गच्छद्भिः श्रेष्ठिचन्दनदासस्य वधस्त्वरायितो भवति।' ततः स प्रस्थितः। राक्षसोऽपि विसृष्टशस्त्रो वयस्यपरित्राणाय प्रायात्।

[ ७ ]

नीयते स्म चण्डालद्वयेन वध्यस्थाने वध्यवेषधारी शूलं स्कन्धेनादाय कुटुम्बिन्या पुत्रेण प्रियवयस्यैश्चाश्रुपातमात्रेण कृतप्रतीकारैः परिवर्धितशोकदीनवदनैरनुगम्यमानश्चन्दन-दासः। चण्डालौ चन्दनदासं गृहजनं विसृष्टुमचकथताम्। परं न गृहजनो निवर्तितुमियेष। ततश्चण्डालयोरेकोऽपरमु-वाच—'अरे बिल्वपत्र! गृहाण चन्दनदासम्। स्वयमेव गृहजनो गमिष्यति।'

अथ यावच्चण्डालौ चन्दनदासं गृहीतस्तावद्राक्षस-स्तत्राऽऽजगाम।

तं विलोक्य चन्दनदासः, सबाष्पमभाषत—'अमात्य ! किमिदम् ?'

राक्षसेन प्रतिभणितम्—'त्वदीयसुचरितैकदेशस्यानुकरणं किलैतत् ।'

ततश्चन्दनदासः प्रत्यवास्थित—'अमात्य ! सर्वमपीमं प्रयासं निष्फलं कुर्वता त्वया किमनुष्ठितम् ?'

राक्षसेन निगादितम्—'सखे ! स्वार्थ एवानुष्ठितः । कृतमुपालम्भेन ।' ततः स चण्डालमब्रवीत्—'भद्रमुख ! निवेद्यतां दुरात्मने चाणक्याय "पूजार्होऽप्येष विशुद्धात्मा यत्कृते तव वध्यत्वमुपगतः स एषोऽस्मि" इति ।'

ततो बिल्वपत्रकश्चन्दनदासं गृहीत्वा तत्रैव श्मशानपादपस्य छायायां स्थितः । वज्रलोमा नामापरो चण्डालस्तु राक्षसमादाय चाणक्यं प्रति प्रातिष्ठत ।

आवितोदन्तश्चाणक्यो राक्षसं विलोक्य सहर्षं स्वगतमुवाच—'अये ! अयमसावमात्यराक्षसः, येन महात्मना दीर्घजागरहेतुभिर्गुरुभिः कल्पनाक्लेशैर्वृषलस्य सेना मे मतिश्च चिरमायासिता ।' ततः स उपसृत्योवाद—'भो अमात्यराक्षस ! विष्णुगुप्तोऽहमभिवादये ।'

तच्छ्रुत्वा राक्षसस्य मनसि जातम् "अमात्य ! इति लज्जाकरमिदानीं विशेषणम्" इति । ततः सोऽब्रवीत्—'विष्णुगुप्त ! न चाण्डालस्पर्शदूषितं स्प्रष्टुमर्हसि ।'

चाणक्योऽब्रवीत्—'अमात्यराक्षस ! नेमौ चाण्डालौ ! अयं खलु दृष्टपूर्व एव भवता सिद्धार्थको नाम राजपुरुषः । योऽप्यसौ द्वितीयः, सोऽपि समिद्धार्थको नाम राजपुरुष

एव। शकटदासोऽपि तपस्वी तं तादृशं कपटलेखमजानन्नेव मया लेखितः।'

एवं शकटदासं प्रति व्यपेतविकल्पो राक्षसः परं हर्षमलब्ध।

चाणक्यो भूयोऽभ्यधत्त—'किं बहुना। एष संक्षेपतः कथयामि। भद्रभटादयो भृत्याः, स तथा लेखः, स सिद्धार्थकः, तदलंकरणत्रयम्, भवतो मित्रं स भदन्तः, जीर्णोद्यानगतः स आर्तपुरुषः, स च श्रेष्ठिनः क्लेशश्च—तदेतत्सर्वमपि भवता संयोगमिच्छोर्वृषलस्य नयः। तदयं वृषलस्त्वां द्रष्टुमिच्छति। पश्यैतम्।'

इदानीं सपरिवारो मौर्यस्तत्र समायातः। स उपसृत्य चाणक्यं प्रणनाम।

चाणक्य उवाच—'वृषल! संपन्नास्ते सर्वाशिषः। अयममात्यराक्षसः प्राप्तः, तदभिवादयस्वात्रभवन्तममात्यमुख्यम्।'

अथ मौर्येणाभिवादितो राक्षस आशशंस—'राजन्! विजयस्व।'

मौर्योऽब्रवीत्—'षाड्गुण्यचिन्तायामार्ये गुरौ, आर्ये च जाग्रति मया किं न विजितम्?'

ततश्चाणक्योऽभणत्—'अमात्यराक्षस! अपीष्यते चन्दनदासस्य जीवितम्?'

राक्षसेन प्रतिभाषितम्—'अत्र कः संदेहः?'

कौटिल्यो जगाद—'अमात्यराक्षस! अगृहीतशस्त्रेण भवता अनुगृह्यते वृषल इत्यतः संदेहः। तद्यदि सत्यमेव

चन्दनदासस्य जीवितमिष्यते ततो गृह्यतामिदं शस्त्रम्।'

राक्षसोऽभणत्—'भो विष्णुगुप्त! मा मैवम्। अयोग्या वयमस्य विशेषतस्त्वया गृहीतस्य ग्रहणे।'

मौर्यगुरुर्न्यगादीत्—'अमात्यराक्षस! किं बहुना। न खलु भवतः शस्त्रग्रहणमन्तरेण चन्दनदासस्य जीवितमस्ति।'

विवशो राक्षसो बभाण—'विष्णुगुप्त! नमः सर्वकार्यप्रतिपत्तिहेतवे सुहृत्स्नेहाय। का गतिः? एष प्रह्वोऽस्मि।'

चाणक्यः शस्त्रमर्पयित्वा सहर्षं व्याजहार—'वृषल! वृषल! अमात्यराक्षसेनेदानीमनुगृहीतोऽसि। दिष्ट्या वर्धते भवान्?'

राज्ञा जगदे—'आर्यप्रसाद एव चन्द्रगुप्तेनानुभूयते।'

अथोपेत्य पुरुषो व्यजिज्ञपत्—'जयत्वार्यः। एष खलु भद्रभटभागुरायणप्रमुखैः संयमितकरचरणो मलयकेतुः प्रतिहारभूमिमुपस्थापितः। इदं श्रुत्वा आर्य्यः प्रमाणम्।'

चाणक्योऽचकथत्—'भद्र! निवेद्यताममात्यराक्षसः। सोऽयमिदानीं जानीते।'

राक्षसोऽपि 'कथं दासीकृत्य मामिदानीं विज्ञापनायां मुखरीकरोति कौटिल्यः। का गतिः' इति स्वान्तेऽवधार्य 'राजन्! चन्द्रगुप्त! विदितमेव ते यथा वयं मलयकेतौ कंचित्कालमुषितास्तत्परिरक्ष्यन्तामस्य प्राणाः।'

मौर्यः स्वगुरुमुखमवालोकयत्। स उवाच—'वृषल! प्रतिमानयितव्योऽमात्यराक्षसस्य प्रथमः प्रणयः।' ततः स पुरुषं प्रत्यब्रवीत्—'भद्र! अस्मद्वचनादुच्यन्तां भद्रभटप्रमुखाः "अमात्यराक्षसेन विज्ञापितो देवश्चन्द्रगुप्तः प्रयच्छति मलय-

केतवे पित्र्यमेव विषयम्। अतो गच्छन्तु भवन्तः सहानेन। प्रतिष्ठिते चास्मिन्पुनरागन्तव्यम्" इति।' ततः स भूयोऽप्युवाच—'अपरं च वक्तव्यो दुर्गपालो विजयपालः "अमात्यराक्षसलाभेन सुप्रीतश्चन्द्रगुप्तः समाज्ञापयति—य एष श्रेष्ठी चन्दनदासः स पृथिव्यां सर्वनगरश्रेष्ठिपदमारोप्यताम्" इति।'

एवं सकामावजायेतां चाणक्यचन्द्रगुप्तौ। उररीकृतं मौर्यसचिव्यं नन्दामात्यचरेण राक्षसेन।

---

# शुद्धिपत्रम्

| अशु०पा० | शु०पा० | पृ० | प० |
|---|---|---|---|
| येंषाम् | यासाम् | क | २२ |
| पद्यो | पद्ये | ङ | ३ |
| राज्यधुरम् | राज्यधुराम् | १ | ४ |
| उत्सारयामासुः | उत्सारयामासतुः | १ | १६ |
| ०कृत्यमन्यत | ०कृत्यममन्यत | ४ | ४ |
| ०मिदम् | ०मिमम् | ६ | १९ |
| दाक्षिण्यतया | दाक्षिण्येन | १० | २३ |
| पद्मावतीम् | पद्मावत्याः | ११ | ६ |
| तस्या | तस्याः | १८ | २० |
| ०जानन्त्या० | ०जानत्या० | २३ | ११ |
| असहायो | असहायः | २४ | १९ |
| ग्लायमाना | ग्लायन्ती | ३१ | १४ |
| प्रेषयित्वा | प्रेष्य | ,, | २१ |
| प्रहाय | प्रदाय | ३४ | ६ |
| निश्चक्रतुः | निश्चक्रमतुः | ३६ | १ |
| क्षितीश्वरो | क्षितीश्वरः | ४० | ४ |
| त्वरयितो | त्वरितः | ४३ | १० |
| उभेऽब्रूताम् | उभे अब्रूताम् | ४६ | १ |
| उभेऽभाष० | उभे अभाषें० | ,, | १२ |
| नाम् | नाम | ,, | १४ |
| अब्रूयत् | औच्यत[ब्रुवेः कर्मणि लङ्] | ४८ | ३ |
| सेनयोर्द्वै० | सेनयोर्द्वैं० | ,, | १६ |
| पुरूरवा | पुरूरवाः | ५३ | ३ |

| अशु०पा० | शु०पा० | पृ० | पं० |
|---|---|---|---|
| निर्वृंतिमेक० | निर्वृतिमेक० | ५६ | १७ |
| अतिष्ठत | अतिष्ठत् | ५७ | ११ |
| व्यसृश्यत् | व्यसृश्यत | ,, | १२ |
| पुरूरवा | पुरूरवाः | ५८ | ८ |
| पतन्तम् | पतत् | ,, | २१ |
| पुरूरवा | पुरूरवाः | ६० | ३ |
| अनुवाच्ये | अनुवाच्य | ६० | १९ |
| ०मना | ०मनाः | ६३ | ९ |
| तदानींतनया | तदानीन्तन्या | ,, | २३ |
| ०सावा लो० | ०सावालो० | ६९ | ११ |
| अभियुयोज | अभियुयुजे | ८२ | ५ |
| ततो | ततः | ८४ | १ |
| बुध्यन्त्या० | बुध्यमाना० | ८७ | २१ |
| विसृजं | विसृज | ,, | २४ |
| पुन इन्दी० | पुनरिन्दी० | ८८ | ६ |
| निःश्वसन्ती | निःश्वसती | ८९ | ७ |
| सारिण्यका | सारथियका | ,, | २१ |
| आयामडस्यत | आयानडस्यत | ९० | ६ |
| अब्रूयत | औच्यत | ९१ | ३ |
| उच्छ्वासितः | उच्छ्वासितः | ९३ | ४ |
| आगता | आगतः | ९६ | ६ |
| मदलङ्कारायि | मदलङ्कारान् | ,, | १५ |
| निवेदयित्वा | निवेद्य | ९७ | १७ |

| अशु॰पा॰ | शु॰पा॰ | पृ॰ | पं॰ |
|---|---|---|---|
| ॰यन्याप्या-मन्त्रितावती | ॰यन्यप्या-मन्त्रितवती | ६६ | १३ |
| तं | तत् | १०६ | १६ |
| ॰रज्जुना | ॰रज्ज्वा | १०७ | २४ |
| चतुारका | चतुरिका | १११ | १० |
| ॰मवच्छन्ना॰ | ॰मवगच्छन्ना॰ | ,, | १४ |
| आमन्त्रया-ञ्चकार | आमन्त्रया-ञ्चक्रे | ,, | १५ |
| उपालम्भ॰ | उपालभ॰ | ,, | २० |
| द्वेऽपि | द्वे अपि | ११२ | १ |
| ॰ऽभूताम् | अभूताम् | ११२ | २ |
| आलखितुम् | आलेखितुम् | ११३ | ५ |
| विदन्ती | विदती | ११५ | २४ |
| अथेव | अथैव | ११६ | ७ |
| दम्पतीमौ | दम्पती इमौ | १२० | १० |
| मयोसौ | मयासौ | ,, | १४ |
| अगत् | अगात् | १२१ | २० |
| पन्नगाशनो | पन्नगाशनो | १२२ | १५ |
| ॰वाहनो | ॰वाहनः | १२६ | १२ |
| शिरोमुखैः | शिरामुखैः | १३० | २ |
| निश्वस्य | निःश्वस्य | १३२ | २१ |
| प्रतिबद्धुम् | प्रतिबन्द्धुम् | १३४ | १२ |
| अद्ग्रुत | अद्ग्रुत् | १३६ | १ |
| नियुनक्ति | नियुङ्क्ते | १५३ | ६ |
| पर्वशो | पर्वशः | १५४ | ५ |
| प्रावर्तयन्त | प्रावर्तयन् | १५५ | ५ |
| विकुर्युः | विकुर्वीरन् | १५६ | १२ |

| अशु॰पा॰ | शु॰पा॰ | पृ॰ | पं॰ |
|---|---|---|---|
| प्रतिबद्धुम् | प्रतिबन्द्धुम् | १५७ | ५ |
| रामो | रामः | ,, | २० |
| प्रतिष्ठेयम् | प्रतिष्ठेय | १५८ | ५ |
| प्रणष्टः | प्रनष्टः | १६२ | १२ |
| चरमो | चरमः | ,, | १८ |
| दत्तं | दत्तां | १६५ | ४ |
| दुद्रवुः | दुद्रुवुः | १६७ | २ |
| ॰मेतमा॰ | ॰मेतदा॰ | ,, | १० |
| रावण | रावणः | १६८ | ६ |
| वृष्टयोर्बभूवुः | वृष्टयो बभूवुः | १७२ | १५ |
| समवरुध्यत | समवारुध्यत | १७३ | २२ |
| ॰निमर्यादं | ॰निर्मर्यादं | १७४ | ६ |
| प्रेषयित्वा | प्रेष्य | ,, | २२ |
| लङ्कालकेऽपि | लङ्कालके अपि | १७६ | ६ |
| पुष्पकनाम | पुष्पकनामा | ,, | १४ |
| ॰पालयन्त्यो | ॰पालयन्तो | १७७ | २० |
| ॰वासिना | ॰वासिनो | १८६ | १४ |
| प्रणष्टां | प्रनष्टां | १६१ | २० |
| ॰वृत्तात्तः | ॰वृत्तान्तः | १६६ | २० |
| इात | इति | २०३ | ,, |
| लव | लवो | २०५ | ७ |
| सौदर्यौ | सोदर्यौ | ,, | ,, |
| कुशलवो | कुशलवौ | २०८ | १५ |
| ततैः | ततः | २०६ | १५ |
| प्राहिण | प्राहिणु | २११ | १४ |
| वैखानस | वैखानसो | [illegible] | ११ |
| इत्यभरणानि | इत्याभरणानि | २१८ | १८ |

| अशु०पा० | शु०पा० | पृ० | पं० |
|---|---|---|---|
| आज्ञापयित्वा | आज्ञाप्य | २१८ | २० |
| कुत | कुतः | २२६ | २३ |
| विसर्जितुम् | विस्रष्टुम् | २२७ | ५ |
| ०हाससखा- ऽऽच० | ०हाससख आच० | २२८ | २० |
| मालिनीरेषु | मालिनीतीरेषु | २३२ | ८ |
| अन्वस्थायि | अन्वष्ठायि | २३६ | १६ |
| व्यरीरचताम् | व्यररचताम् | २४० | २० |
| राजकीयङ्गु० | राजकीयाङ्गु० | २५२ | ७ |
| विवर्जितां | विवर्जनां | २५३ | १ |
| भतु० | भर्तु० | ,, | १३ |
| निष्क्रमामि | निष्क्रामामि | ,, | १४ |
| ०हाससखा- ऽऽच० | ०हाससख आच० | २५८ | २४ |
| ०स्त्रिह्यत | ०स्त्रिह्यत् | २६५ | १० |
| ०मैकैकं | ०मेकैकं | २६६ | १५ |
| जलपे | लेपे | ,, | २३ |
| पतेः | पत्युः | २७१ | ७ |
| विमनसां | विमनसं | ,, | १३ |
| ०वेदनान्तरं | ०वेदनानन्तरं | ,, | १६ |
| ०मभिदधन् | ०मभिदधत् | २७६ | ७ |
| ०ख्यातः | ०ख्यातानि | २८० | १५ |
| तु | नु | २८८ | ११ |
| ०रुन्धन्ते | ०रुन्धते | २९१ | ६ |
| ०रुदन्ती | ०रुदती | २९२ | १० |
| ०कमलौ | ०कमले | २९७ | ७ |
| ०प्रतियन्ती | ०प्रतियती | ३०० | ६ |
| ०कलयमास | ०कलयामास | ३०१ | १६ |
| तद्रुत | तद्रूत | ३०४ | ८ |
| अभिघ्नन्त। | अभिघ्नन्त | ३०५ | १३ |
| अभियुञ्ज- न्तीति | अभियुञ्जत इति | ३०८ | १५ |
| शुश्रुमः | शुश्रुम | ३०९ | १० |
| रणं प्रवृत्तम् | रणः प्रवृत्तः | ३१० | १२ |
| गत | गतः | ,, | १४ |
| दाशरथि | दाशरथिः | ३१२ | २३ |
| शुश्रुमः | शुश्रुम | ३१४ | १६ |
| ०श्वस्तुम् | ०श्वसितुम् | ३१६ | १० |
| ततो | ततः | ३२० | १५ |
| ०मध्यासमानां | ०मध्यासीनां | ३३२ | ३ |
| ०दपक्रामतो बलान् | ०दपक्रामन्ति बलानि | ३३५ | ५ |
| प्रत्यवोचि | प्रत्यवाचि | ,, | १६ |
| तातः स तव | तातस्तव | ३३६ | २० |
| समभरः | समरभरः | ३४० | १ |
| ०मध्यवसितुम् | ०मध्यवसातुम् | ,, | १७ |
| सः | स | ३४१ | १७ |
| आत्मनं | आत्मानं | ३४४ | १ |
| ०क्षप्तुम० | ०क्षेप्तुम० | ,, | १६ |
| ०नवधीरित० | ०वधीरित० | ३४८ | १ |
| पर्यां० | पर्य० | ३४९ | १७ |
| समरम् | समरः | ३५० | २२ |
| ततो | ततः | ३५१ | १२ |
| प्रमादो | प्रमादः | ३६५ | ५ |

| अशु॰पा॰ | शु॰पा॰ | पृ॰ | पं॰ |
| --- | --- | --- | --- |
| एतस्या | एतस्याः | ३६८ | ४ |
| ददन् | ददद् | ३६६ | १३ |
| सुसंगतेऽपि | सुसंगते अपि | ३७२ | ५ |
| ददन्नुवाच | दददुवाच | ३८३ | ५ |
| सर्वांयवे | सर्वावयवे | ४०२ | १० |
| अवोचि | अवाचि | ४०५ | ११ |
| समुद्भूतम् | समुदभूत् | ४०८ | ४ |

| अशु॰पा॰ | शु॰पा॰ | पृ॰ | पं॰ |
| --- | --- | --- | --- |
| युज्वस्व | युज्यस्व | ४१० | १५ |
| जगदत् | गदत् | ४१८ | ६ |
| चाणक्यद्वि-षदा | चाणक्यं द्विषता | ४१६ | १५ |
| अपरो | अपरश्‍ | ४३५ | १२ |
| सचिव्यं | साचिव्यं | ४३८ | ७ |